इति भार्गवोक्तवचनं-श्रुत्वाबद्धांजलिश्चयस्तातः।
भीतमनामुनिमूचे तं सीताजानि माश्रये रामम् ५४७ ॥
मत्पुत्रेऽजातरिपौ-रोषस्तेमास्तुभार्गवाद्येति।
यत्तातस्तमयाचत्तं ० रामम् ५४८ ॥
अथ भार्गवस्यवचनं-श्रुत्वा परुषं च मर्मभेदि तदा।
योमन्दहासमकरोत्तं सीताजानि ० रामम् ५४९ ॥
एनं दृष्ट्वाभीति-स्तातस्याभूत् किमर्थमित्युक्त्वा।
योमंदहासमकरोत्तं सीता ० रामम् ५५० ॥
करगतमेतं वैष्णव चापं दत्तात् करे ममाद्यभवान्।
* इति यो मुनिमाह गिरं तमयोध्यामार्गगं भजे रामम् ५५१ ॥
इत्युक्त्वाथ गृहीत्वा सज्यं कृत्वा धनुर्बभाण मुनिं।
लक्ष्यं वद त्वमिति यस्तमयोध्यामार्गगं भजे रामम् ५५२ ॥
मम बाणश्चामोघ-श्चापगतोऽयं द्विजातिरासि भोत्वं।
इति मुनिमाह सरुड्यस्तमयोध्यामार्ग० रामम् ५५३ ॥
विश्वामित्रस्य त्वं-बंधुः पूज्यो ममापि शास्त्रगिरा।
इति मुनिमाह सरुड्यस्तमयोध्या० रामम् ५५४ ॥
प्राणहरं बाणमिमं-मोक्तुं त्वयि मे नशास्ति शास्त्रमपि।
इति मुनिमाह सरुड्यस्तमयोध्या० रामम् ५५५ ॥
अद्य तव पदगतिं वा लोकांस्तपसां फलानि वाच्छिद्यां। इति० रामम्
उभयोरेकं लक्ष्यं वक्तव्यं भार्गवाद्य कुशलधिया। इति मुनि ० रामम्
इत्युक्तो जमदग्नेः-पुत्रो बुध्या विचार्य चैकाग्र्यात्।
यं प्रत्यभणद्विनयात्तमयोध्यामार्गगं भजे रामम् ५५८ ॥
पूर्वं रणे नृपभ्य-स्स्वीकृत्य भुवं चकाश्यपायादां।
श्रुणु रामेत्याह स यं तमयोध्यामार्ग० रामम् ५५९ ॥

इह वस्तुं नहि युक्तं काश्यपभूमौ मयाऽद्य दाशरथे ।
शृणु रामे त्याह स यं तमयोध्या मार्गगं भजे रामम् ५६० ॥
अद्यैव महेंद्रमगं गंतुं स्वेच्छा विनिर्मितं तपसा ।
इच्छामीत्याह स यं तमयोध्यामार्गगं भजे । रामम् ५६१ ॥
तपसार्जितलोकेषु त्वं प्रक्षिपबाणमाशुमापदयोः ।
इति यमयाचत समुनिस्तमयोध्यामार्ग० रामम् ५६२ ॥
राम त्वच्छरवेगं दृष्ट्वा पश्चात्त्वरे च गमनार्थं । इति यमया रामम् ५६३
अथ देवयक्षराक्षस- किन्नरगंधर्व साध्यमुनिसंघैः ।
यं द्रष्टुं विधिरागात्तमयोध्यामार्गगं भजे रामम् ५६४॥
अथ करधृतधनुषं त्वां दृष्ट्वा नारायणं त्वहं मन्ये ।
इति मुनिरस्तावीद्यं तमयोध्या० रामम् ५६५ ॥
धनुषि ज्यारोपणतश्शंखारिधरं भवंतमस्माषं । इति मुनि०रामम् ॥
मौर्व्यामिषु संधाना-द्वैकुंठेशं स्मरामि मनसा त्वां ।
इति मुनिरस्तावीद्यं० रामम् ५६७ ॥
लक्ष्यस्य भेदनात्त्वां श्रीपतिमार्तार्तिभञ्जनं मन्ये । इति०रामम् ॥
त्वत्तोऽपमान एवं संतोषकरोऽद्यभाति मत्सदृशां । इति मुनि०रामम् ॥
दृष्ट्वाथ जामदग्न्यो नष्टांस्तपसार्जितांश्च लोकान्स्वान् ।
यं स्तुत्वा प्रययौ द्राक्तमयोध्यामार्गगं भजे रामम् ५७० ॥
मुनिरथ महेंद्रपर्वत-मासाद्य हृदंबुजे च यं ध्यात्वा ।
एकाग्रधीरतिष्ठत्तमयोध्यामार्गगं भजे रामम् ५७१ ॥
अथ तद्धनुरुत्कृष्टं वरुणस्य करे स सायकं पूज्यः ।
योऽदात्संतुष्टमनास्तमयोध्या० रामम् ५७२ ॥
सवसिष्ठांश्च महर्षी-नभिवाद्य पितुस्समीपमागत्य ।
योगिरमाह सधैर्यं तमयोध्या० रामम् ५७३ ॥

हा किं करोमि भगवन् कं यायां शरणमिति रुदन्तं यः ।
पितरं गिरमाह हसंस्तमयोध्यामार्गगं भजे रामम् ५७४ ॥
तात मुनिः परिभूतो न मया निहतो द्विजातिरिति बुध्या ।
इति पितरं योऽभाणीत्तमयोध्यामार्गगं भजे रामम् ५७५ ॥
अत्रैव धनुर्विष्णोः प्रक्षिप्यागान्मया पराभूतः । इति पितरं०रामम् ॥
तपसेऽगात्समहेंद्रं सेनां प्रस्थापयस्व राजेंद्र । इति पितरं०रामम् ॥
अथ यत्तातः पुत्रं स्वसमीपस्थं प्रगाढमालिंग्य ।
प्रस्थापयत्स्वसैन्यं तमयो० रामम् ५७८ ॥
स्वसुतैस्सह यत्तात स्साट्टप्राकारतोरणां स्वपुरीं ।
प्रविवेश वसिष्ठयुतस्तमयो० रामम् ५७९ ॥
यत्तातोऽपि सतनयः पौरैः प्रत्युद्गतैः पुरीं रम्यां ।
प्रविवेश वसिष्ठयुतस्तमयो० रामम् ५८० ॥
यत्तातश्च सतनय-श्चतुरंगबलैश्च बंधुभिर्युक्तः ।
* प्रविवेश राजधानीं तमयोध्याराज्यगं भजे रामम् ५८१ ॥
अथ राजापि सपुत्रो-भूसुरघुष्टत्रयीनिनादयुतः ।
स्वगृहं तुष्टोऽविक्षत्तमयोध्याराज्यगं भजे रामम् ५८२ ॥
यन्माता स्वसपत्नी सहिता जगृहेस्नुषाश्श्रियोमूर्ताः ।
*मंगळपदार्थपाणिस्तं गृहवीथिं गतं भजे रामम् ५८३ ॥
प्रावेशयद्गृहं स्वं गृह्योक्तविधानतश्च यत्तातः ।
प्रेम्णा स्नुषाश्चतस्रस्तं गृहमध्यं गतं भजे रामम् ५८४ ॥
जनकसुताप्यथ सीता- भर्त्रा सहिता सभां गुरून्नत्वा ।
* यस्य प्रविवेश गृहं तं सीतारमणमाश्रये रामम् ५८५ ॥
यदवरजोऽप्यथ भरतो मांडव्या भार्यया सुसंयुक्तः ।
स्वगृहं प्रविवेशमुदा तं सीतारमणमाश्रये रामम् ५८६ ॥

यदवरजस्सौमित्रिः नियमेनिळया स्वकीयगृहं विशत् ।
लक्ष्मणनामाथ मुदा तं सीतारमणमाश्रये रामम् ५८७ ॥
शत्रुघ्नोऽपि यदनुजश्श्रुतकीर्त्या भार्यया सुसंयुक्तः ।
तुष्टस्स्वगृहमविक्षत्त सीतारमणमाश्रये रामम् ५८८ ॥
अनजास्त्रयोपि चैते यस्याज्ञां मालिकामिवाजस्रम् ।
कुर्वंति शिरसि नष्टास्तं सीतारमणमाश्रये रामम् ५८९ ॥
यत्प्रथमानपुत्रान्स्वान् मातापितरौ निरीक्ष्य चक्षुर्भ्याम् ।
आस्तां मदब्धिमग्नौ तं सीतारमणमाश्रये रामम् ५९० ॥
वैदेह्या साकेत मणिमयसोपान चन्द्रशालायां ।
डोलायामधिरुह्य स्थितमहमनिशं भजामि सीतेशं ५९१ ॥
जानक्याऽयोध्यायां नवरत्नोल्लसितकनककलितायाम् ।
डोलायामधिरुह्य प्रहसितवदनं स्थितं भज रामम् ५९२ ॥

कथानुपूर्वीसहित रामस्तुतौ बालकांडस्समाप्तः ।

भज भज मानस रामं कामं नहि नाह रक्षति रामादन्य ॥
कुरुकुरु कोसलनाथे भक्तिं सहि खलु विरतिं कलिमलहीन ।
वद मम रसन सीतकांतं जप मम धिषण रामकान्तं ।
कुरु मम वचनं अन्यं पथ नहि नरकममरामस्तुत्य ॥

इति दशरथसुत स्तोत्ररत्नं मदीयं
यदि भवति च दोषसंभृतश्शास्त्रतोवा ।
गुणगणपरिपूर्णो रामभक्तो महात्मा
न गणयति च दोषं रामभक्तिप्रशस्त्याम् ॥

बालकांडस्य मंगलश्लोकाः ।

कौसल्या खनिरत्नाय साकेतपुरवासिने ।
सह सीताय रामाय सानुजायास्तु मंगळम् ॥

विश्वामित्राध्वरे दुष्टरक्षो विध्वंसकारिणे ।
धनुर्भंगात्तसीताय रामायास्तु सुमंगळम् ॥
जामदग्न्यतपोदर्पखंडनाय यशस्विने ।
प्राप्तसाकेतवासाय राघवायास्तु मंगळम् ॥
विदेहजातया सार्धं सीतया भूमिजातया ।
सुखवासात्ततोषाय रामायास्तु सुमंगळम् ॥
रामानंदाख्य यतिना कृता रामस्तुतिस्त्वियं ।
बालकांडकथायुक्ता जीयाद्रामकटाक्षतः ॥

श्रीगुरुभ्यो नमः ।

शुभमस्तु । हरिः ॐ ।

अत्रोपोद्घातश्लोकाः १७ । रामकथाश्लोकाः ९९२ ।
स्तुतिश्लोकाः ३ । मङ्गलश्लोकाः ४ । मुद्रा श्लोकः १ ।
आहत्य बालकांडीयश्लोकाः ११७ ।





॥ श्रीः ॥

ॐ श्री गणेशाय नमः । शारदांबिकायै नमः । श्रीगुरुभ्यो नमः ।

# अयोध्याकाण्डकथानुपूर्वीसहिता रामस्तुतिर्लिख्यते ।



योगमातामहः पाशी विराड्वाहनमातुलः ।
सोऽव्यादव्याजमूर्तिर्मामार्यावस्तात शङ्करः ।
वाग्देवि त्वं मम मुखे वासं कुरु यथासुखम् ।
रामस्तुतिमहं कुर्वे ह्ययोध्याकांड उत्तमे ॥

* गच्छता भरताद्यत्वं मातुलेन सहानुजः ।
गच्छेति यत्पितोचेगां तं श्रीराममहं भजे ॥१॥

* दशरथभूपः पुत्रं यं दृष्ट्वाऽनन्दसागरे मग्नः ।
गुणगणसम्मान्यन्तं वन्दे रामं नवनीतमेघाभम् ॥ ॥२॥

राजाथ कोसलानां यस्मिन्राज्यन्निधातुमैच्छत्तम् ।
गुणगणभाजनमेकं वन्दे रामन्नवीनमेघाभम् । ॥३॥

* साकेतवासि मर्त्या-यं राजानं दिदृक्षवोऽन्योन्यम् ।
ऊचुर्जरां स्वभूपे तं श्रीरामं भजेहमनवद्यम् । ॥४॥

राजा जनहृद्भावं विज्ञायाथोवसिष्ठमिदमूचे ।
यस्याभिषेककार्ये तं श्रीरामं भजेहमनवद्यम् । ॥५॥

* शासति मयि राज्यं भो- वत्सं भूपं जनाश्च काङ्क्षन्ति ।
इत्यभणद्यस्य पिता- स्वगुरुं गां तं नमाम्यहं रामम् ॥६॥

* गुरुवर्याद्यभवानपि संमन्त्र्य तथा करोतु जनसचिवैः ।
इति यस्य पिताहगुरुं गिरमेवं तं नमाम्यहं रामम् ॥७॥

राज्ञा जनपदतोषः करणीयःखलु विजानताधर्मम् । इति यस्य० रामम्
तस्माद्गुरुवर्य भवा-न्प्रशास्तु भृत्यान्पदार्थसंपूर्त्यै । इति यस्य० रामम्
पट्टाभिषेककार्यं सम्यक्क्रियतां विमृश्य भवतापि । इति० रामम्

* राज्ञोक्तोऽथाचार्यः कृत्वा पट्टाभिषेकसंभारान् ।
कर्तुं यं नृपमैच्छत्तं दाशरथिं नमाम्यहं रामम् ॥११॥
साकेतवासिमनुजाः सिंहासनभाजमंजसा द्रष्टुम् ।
ऐहन्त यं महृष्टास्तं दाशरथिं नमाम्यहं रामम् ॥१२॥
साकेतपुरनिवासाः किरीटशीर्षं यमञ्जसा द्रष्टुम् ।
ऐहन्त संमहृष्टास्तं दाशरथिं० रामम् ॥१३॥
पट्टाभिषेककाले संभावितशोभमादराद्द्रष्टुम् ।
ऐहन्त यं जनौघास्तं दाशरथिं० रामम् ॥१४॥
पट्टाभिषेकसमये सीतासहितं प्रमोदतो द्रष्टुम् ।
ऐहन्त यं जनौघास्तं दाशरथिं० रामम् ॥१५॥
क्षमया पृथिवी साम्यं गांभीर्येणार्णवस्य साम्यमपि ।
बुद्ध्या सुरगुरुसाम्यं यो भजते तं नमाम्यहं रामम् ॥१६॥
य भजतां कफकृच्छ्रे वातोत्थ पित्तरोगसंभूते ।
सद्यश्शमं प्रयाति तं दाशरथिं नमाम्यहं रामम् ॥१७॥
* यं स्मरतां पुरुषाणां संसृति वैराग्यमुत्थितं भवति ।
मरणाद्भीतिर्गच्छति तं दाशरथिं० रामम् ॥१८॥
मुनिरथमहसंभारास्त्वमिथो दर्भांश्च सिद्धवत्कृत्वा ।
यत्स्मरणकृतार्थोभूत्तं दा० रामम् ॥१९॥
आहूय मन्त्रिमुख्यान्यदद्राज्ञोऽथ मानसंभावम् ।
यत्कुलगुरुर्वसिष्ठस्तं दा० रामम् ॥२०॥
मिथिलेशकेकयेशौ हित्वा राज्ञोऽपरान्गिरं प्रोचे ।
यद्विषयेऽयोध्येशस्तं दा० रामम् ॥२१॥
ज्येष्ठं भूपं कर्तुं भवदीयमतं ब्रुवन्तु भो भूपाः ।
इति यत्तातोऽपृच्छत्तं दाशरथिं भजाम्यहं रामम् ॥२२॥

श्रुत्वा यन्महमिद्धं भूपास्तोषं प्रपेदिरे भूपाः ।
कौसल्या भाग्यनिधिं तं दाशरथिं नमाम्यहं रामम् ॥२३॥
साकेतपुरनिवासाश्श्रुत्वा सर्वे यदीयमहमिद्धम् ।
गेहमलंचक्रुर्द्राक् तं दाशरथिं नमाम्यहं रामम् ॥२४॥
मुमुदे निरीक्ष्य राजा संभारान्गुरुवरेण सङ्कलितान् ।
यस्याभिषेचनार्थं तं दाशरथिं नमाम्यहं रामम् ॥२५॥
राजाथ मन्त्रिवर्यं यस्यानयनाय सारथिं प्रोचे ।
आनय पुत्रं द्रागिति तं दाशरथिं नमाम्यहं रामम् ॥२६॥
गत्वा ततस्सुमन्त्रो यं रथमारोप्य शीघ्रमागत्य ।
द्रष्टुं दशरथमैच्छत्तं दाशरथिं नमाम्यहं रामम् ॥२७॥
तातमभिगम्य तुष्टं त्वभिवादनपूर्वमासने तिष्ठन् ।
योऽविरराज सभायां तं दाशरथिं नमाम्यहं रामम् ॥२८॥
राजा निरीक्ष्य पुत्रं भूपं त्वां वत्स कर्तुमिच्छामि ।
इति गिरमभणद्यं राट् तं दाशरथिं नमाम्यहं रामम् ॥२९॥
मन्वादिशास्त्ररीतिं सम्यग्जानासि पञ्चतन्त्रमपि ।
इति गिरमभणद्यं राट् तं दाशरथिं नमाम्यहं रामम् ॥३०॥
* ज्येष्ठायां पत्न्यां मे जातस्त्वं राज्यपालने योग्यः ।
इति गिरमभणद्यं राट् तं दाशरथिं भजाम्यहं रामम् ॥३१॥
राज्ञोक्तं वचनमिदं श्रुत्वा गत्वा यदीयमातृगृहम् ।
ऊचुर्जना वचस्तां तं दाशरथिं भजाम्यहं रामम् ॥३२॥
वार्तां सुहृदां श्रुत्वा यन्माताऽऽनन्दसागरे मग्ना ।
तेभ्यो बहुमानमदात्तं दाशरथिं भजाम्यहं रामम् ॥३३॥
श्रुत्वा राज्ञोऽथ गिरं तुष्टो योऽगात्स्ववेश्मरथसुस्थः ।
कौसल्या नियमफलं तं दाशरथिं भजाम्यहं रामम् ॥३४॥

सभ्येषु सङ्गतेष्वथ राजा संमन्त्र्य मन्त्रिभिर्यस्य ।
त्वरयाभिषेकमूचे तं दाशरथिं भजाम्यहं रामम् ॥३५॥
अन्तर्गृहे सुमन्त्रं राजोचे गां समानयेति पुनः ।
श्रीमन्तं धीमन्तं तं दाशरथिं भजाम्यहं रामम् ॥३६॥
आगत्य पादमूलं प्रणमन्तं यं प्रगाढमालिङ्ग्य ।
ऊचे वाचं राजा तं दाशरथिं भजाम्यहं रामम् ॥३७॥
राज्ञोभीतिं ब्रूते दुश्शकुनं वत्स शास्त्रतस्सिद्धम् ।
इत्यूचे यं राजा तं दाशरथिं भजाम्यहं रामम् ॥३८॥
श्वः पुष्ययोगकाले त्वामभिषेक्तुं प्रयत्नवानस्मि ।
इत्यूचे यं राजा तं दाशरथिं भजाम्यहं रामम् ॥३९॥
श्रेयसि बहवो विघ्नाः प्रभवन्तीति प्रथास्त्यभिज्ञगिराम् ।
इत्यूचे राज्यं गां तं दा० रामम् ॥४०॥
तस्माद्वैदेह्यासह दर्भासनगः कुरूपवासं त्वम् ।
इत्यूचे राज्यं गां तं दा० रामम् ॥४१॥
यावद्भरतागमनं तावत्पट्टाभिषेकभरितस्याः ।
इत्यूचे राज्यं गां तं दा० रामम् ॥४२॥
धर्मैकतानमतिरपि दुस्सहवासात्प्रजायते दुष्टः ।
इत्यूचे राज्यं गां तं दा० रामम् ॥४३॥
अथ भाविनमभिषेकं देवगृहस्थां स्वमातरं प्राप्य ।
योऽवादीत्सीतायै तं दा० रामम् ॥४४॥
अनुजाय च तन्मात्रे सर्वं वृत्तान्तमादितोऽथोक्त्वा ।
तोषं योऽद्राक्षीद्यां तं दा० रामम् ॥४५॥
पट्टाभिषिक्तमेनं मामनुसृत्य त्वमेवपालय गाम् ।
इति योऽनुजमभणद्यां तं दाशरथिं भजाम्यहं रामम् ॥४६॥

इत्थं भ्रातरमुक्त्वा सीतां प्रह्वां गृहाय गमयित्वा ।
योऽगात्स्वं वेश्मशुभं तं दाशरथिं भजाम्यहं रामम् ॥४७॥
प्राप्तं गुरुमथ सद्म स्वीयं प्रणिपत्य यो गिरा तस्य ।
उपवासादिकमकरोत्तं दा० रामम् ॥४८॥
सर्वमुपदिश्य कार्यं पृष्ट्वा यं गुरुरुपागतो मार्गम् ।
सालंकारमपश्यत्तं दा० रामम् ॥४९॥
राजानमेत्यगुरुरा-ज्ञस्य व्रतनिष्ठतां समावेद्य ।
प्राविक्षत्स्वं निलयं तं दा० रामम् ॥५०॥
* गुरुणोपदिष्टनियमं रात्रौ कृत्वा प्रभातवेळायाम् ।
यस्सन्ध्याविधिमकरोत्तं सीताजानिमाश्रये रामम् ॥५१॥
यस्याभिषेकवर्णन परितुष्टास्सूतबन्दिवेत्रधराः ।
प्रययुस्सोष्णीषाद्राक्तं दा० रामम् ॥५२॥
यस्याभिषेकवार्तां श्रुत्वा नार्यस्स्वलंकृतास्तुष्टाः ।
अन्योन्यं गिरमूचुस्तं सीताजानिमाश्रये रामम् ॥५३॥
यस्य महोत्सवकाले दुष्टमतिर्मन्थराप्यसूयांधा ।
कैकेय्यास्सख्यमभवत्तं सी० रामम् ॥५४॥
सा दुश्शीलापि तदा प्रासादस्था निशम्य यस्य महम् ।
विघ्नंच कर्तुमैच्छत्तं सी० रामम् ॥५५॥
तस्मिंत्साकेतपुरे यन्महसंभूतवाद्यघोषांस्तान् ।
श्रुत्वा सा क्रुद्धासीत्तं सी० रामम् ॥५६॥
कं वा करोमि यत्नं यन्महविघ्नं भतीति साध्या त्वा ।
गिरमूचे कैकेयीतं सी० रामम् ॥५७॥
मूढे वृधाभिमानिनि यत्पितृकपटं तवाद्य वक्ष्येहम् ।
इत्याहगिरं सा तां तं सीताजानिमाश्रये रामम् ॥५८॥

त्वत्सापत्ने यं यं राजानं संविधातुमास्ते राट् ।
इत्याह गिरं सा तां तं सीता० रामम् ॥५९॥
यन्महावार्तां श्रुत्वा कण्ठाभरणं च राज्ञ्यदात्तस्यै ।
राजानं चास्तावीत्त सीता० रामम् ॥६०॥
यन्महद्वार्तां श्रुत्वा दत्तं राज्ञ्या स्वभूषणं भूमौ ।
क्षिप्त्वोचे सा तां गां तं सीता० रामम् ॥६१॥
यत्सापत्न्ये योराज्यदि भवति तदा तत्रार्थहानिस्स्यात् ।
इति गिरमवदत्सा तां तं सीता० रामम् ॥६२॥
यन्मात्रे च सपत्न्यै भृत्यात्वं भवसि वच्म्यहं सत्यम् ।
इति गिरमवदत्सा तां तं सीता० रामम् ॥६३॥
यस्य पिता त्वां हित्वा कौसल्यामेव शीघ्रमायाति ।
इति गिरमवदत्सा तां तं सीता० रामम् ॥६४॥
यत्सेवकाहि सर्वे दृष्ट्वा त्वां परिहसन्ति निर्भीकाः ।
इति गिरमवदत्सा तां तं० रामम् ॥६५॥
श्रुत्वा कुब्जा वार्तां यन्महविघ्नस्य कारणं प्रभुम् ।
राज्ञ्यूचे कुब्जां गां तं सी० रामम् ॥६६॥
कुब्ज यन्महविघ्नं कथमपि कुरु त्वमेववदयुक्तिम् ।
इति राज्ञ्यूचे गां तां तं० रामम् ॥६७॥
कुब्ज राज्यन्त्यक्त्वा भरतं भूपं करोतु तव युक्त्या ।
इति राज्ञ्यूचे गां तां तं सीता० रामम् ॥६८॥
यस्याभिषेकविघ्नन युक्तिः कस्यापि दुर्घटाम्वहते ।
इति राज्ञ्यूचे गां तां तं सीता० रामम् ॥६९॥
यस्याभिषेकहानौ त्वत्सख्यं मे कदापि नोऽपैतात् ।
इति राज्ञ्यूचे गां तां तं सीताजानिमाश्रये रामम् ॥७०॥

यस्याभिषेकहानौ त्वत्स्थग्वपिधानभूषणं दद्याम् ।
इति तां राज्ञ्यूचे गां तं सीताजानिमाश्रये रामम् ॥७१॥
इति राज्ञ्युक्तिं श्रुत्वा कुब्जाथ वचो बभाण कैकेयीम् ।
यस्याभिषेकहान्यै तं सीता० रामम् ॥७२॥
न स्मरसि पूर्वमुक्तं यत्पित्रा ते वरद्वयं दत्तम् ।
इत्यवदद्राज्ञीं सा तं सीता० रामम् ॥७३॥
यस्य वनवासयोग्यं कुर्वेकं त्वं वरञ्च भज तोषम् ।
इत्यवदद्राज्ञीं सा तं सीता० रामम् ॥७४॥
भरताय राज्ययोग्यं कुर्वपरं त्वं यदीयवनवासे ।
इत्यवदद्राज्ञीं सा तं सीता० रामम् ॥७५॥
यस्य च निरसनपूर्वं भरते राज्यं विनिक्षिपाद्य हठात् ।
इत्यवदद्राज्ञीं सा तं सीता० रामम् ॥७६॥
श्रुत्वा कुब्जा वाक्यं राज्ञी यस्मै च दुःखदा भवितुम् ।
प्राविक्षत्कोपगृहं तं सीता० रामम् ॥७७॥
साङ्गाद्भूषणनिचयं क्षिप्त्वा भूमौ क्रुधाच दुर्धरया ।
यस्य वनवासमैच्छत्तं सीता० रामम् ॥७८॥
संमील्यदृशा वेषा भूमौ शयिता प्रवृद्धनिश्वासा ।
यस्यानर्थानैच्छत्तं सीताजानिमाश्रये रामम् ॥७९॥
यस्याभिषेकवार्तां कैकेय्यै वक्तुमादराद्राजा ।
अन्तःपुरमविशद्रात्रौ सीता० रामम् ॥८०॥
तत्रादृष्ट्वा भार्यां कोपागारे ददर्श तां राजा ।
यद्भूतिमसहमानां तं सीता० रामम् ॥८१॥
परिमृश्य स्वकराभ्यां यस्य पिता तां च वाक्यमाहेदम् ।
राजीवायतनेत्रां तं सीता० रामम् ॥८२॥

न हि तेऽद्य कोपकालो यस्य मनस्तुष्टिकालसंप्राप्तौ ।
इत्यवदद्राजा तां तं सीताजानिमाश्रये रामम् ॥८३॥
कस्तेऽपराधकर्ता यन्महकाले तमद्यबध्नामि ।
इत्यवदद्राजा तां तं सीता० रामम् ॥८४॥
इत्युक्ता राज्ञा सा निर्लज्जा वचनमाह राजानम् ।
यस्य वनवसतिकामा तं सीता० रामम् ॥८५॥
राजन्सापत्नेयं यं कुर्वद्यैवकन्दमूलभुजम् ।
इति राजानं सोचे तं सीता० रामम् ॥८६॥
कानन वसतिं चोदय यस्मै त्वं चीरधारिणे शीघ्रम् ।
इति राजानं सोचे तं सीता० रामम् ॥८७॥
यं त्यक्त्वा त्वं भरतं राजानं कुरु नचेन्मरिष्येहम् ।
इति राजानं सोचे तं सीता० रामम् ॥८८॥
यं त्यक्त्वा मत्पुत्रं कुरु भूपालं न चेद्विषं गृह्णे ।
इति राजानं सोचे तं सीता० रामम् ॥८९॥
मत्पुत्रं कुरु भूपं यं त्यक्त्वा त्वं नचेदसून्मुञ्चे ।
इति राजानं सोचे तं सीता० रामम् ॥९०॥
कैकेय्युक्तिं श्रुत्वा वनवसतिं यस्य मानसे स्मृत्वा ।
दुःख भेजे राजा तं सीता० रामम् ॥९१॥
किं वा करोमि शङ्कर यं त्यक्त्वा कुत्र यामि कं शरणम् ।
इति दुःखं भेजे राट् तं सीता० रामम् ॥९२॥
केकयभूपति वत्से यन्मूलस्ते विरोधहेतुः कः ।
इति दुःखं भेजे राट्तं सीता० रामम् ॥९३॥
वत्सं कठोरहृदये यं मुक्त्वाहं कथं च जीवेयम् ।
इति दुःखं भेजे राट्तं सीता० रामम् ॥९४॥

का वा विरोधकर्त्री यद्विषये तां वदाशु चार्वङ्गि ।
इति दुःखं भेजे राट् तं सीताजानिमाश्रये रामम् ॥९५॥
इत्थं सापत्युक्तां यद्विषये गां निशम्य दीनमुखी ।
ऊचे वाचं भूपं तं सीता० रामम् ॥९६॥
रामं विवास्य नगरात्कुरुराजं भरतमेव शीघ्रमिति ।
सोच यत्तातं गां तं सीता० रामम् ॥९७॥
कैकेय्युक्तं वचनं श्रुत्वा राजा निपत्य भुवि तप्तः ।
यद्विषयं चारोदीत्तं सीता० रामम् ॥९८॥
यस्य वनवासवचनं स्मृत्वाऽनुपदश्च कोसलाधिपतिः ।
यद्विषये चोदयत तं सीता० रामम् ॥९९॥
तस्य स्थितिरगमूले भवतु कथं भवति वल्कलं वासः ।
इति यत्तातोऽरोदित्तं सीता० रामम् ॥१००॥
* कैकयि तस्य शयनं भवतु शिलातले हृदोपि कठिना किम् ।
इति यत्तातोऽरोदित्तं भजरे चित्तमुक्तिदं रामम् ॥१०१॥
कैकेयि पादयोस्ते प्रणतिं कुर्वेऽहमद्य यद्विषये ।
इति यत्तातोऽरोदित्तं भजरे चित्तमुक्तिदं रामम् ॥१०२॥
परिपालय सत्यं त्वं निष्कासय गृहाद्यमद्यवनमार्गे ।
इति राज्यूचे भूपं तं भजरे० रामम् ॥१०३॥
यस्यानुजं च भरतं कृत्वा राज्ये कुरु श्रुतिं सत्याम् ।
इति राज्यूचे भूपं तं भजरे० रामम् ॥१०४॥
किं बह्वोक्त्येदानीं त्यक्त्वा यं कुरु ममाद्य जीवदशाम् ।
इति राज्यूचे भूपं तं भजरे० रामम् ॥१०५॥
आरिन्दममालर्कं स्मृत्वा सत्यं यमद्य कुरु वन्यम् ।
इति राज्यूचे भूपं तं भजरे० रामम् ॥१०६॥

अथ राज्ञयुक्तिं श्रुत्वा राजेच्छद्यं सुधांशु सदृशमुखम् ।
द्रष्टुं मनोज्ञवपुषं तं भजरे चित्तमुक्तिदं रामम् ॥१०७॥
कुलगुरुरथो वसिष्ठो यन्महसंभारवैभवं वक्तुम् ।
सदनं प्रापद्राज्ञस्तं भजरे० रामम् ॥१०८॥
दृष्ट्वा तत्र सुमन्त्रो यद्गुर्वाज्ञा वशंवदस्सूतः ।
राज्ञे व्यजिज्ञपत्तं तं भजरे० रामम् ॥१०९॥
श्रुत्वाऽथ सूतवचनं यस्य पितामनसि शोकमधिगम्य ।
बाष्पार्द्रलोचनोऽभूत्तं भजरे० रामम् ॥११०॥
दृष्ट्वा स राजवदनं यत्सूतो मनसि भीतिमधिगम्य ।
तत्स्थानाच्चलितोभूत्तं भजरेचित्तमुक्तिदं रामम् ॥१११॥
दृष्ट्वा चलितं सूतं प्रोवाचागिरं तदैव कैकेयी ।
यं शीघ्रमानयेतिच तं भजरे० रामम् ॥११२॥
गच्छन्नथो यदीयं सख्युसुमन्त्रोऽपि मार्गतः प्राप्तान् ।
भूदेवान्समपश्यत्तं भजरे० रामम् ॥११३॥
तानागतान्प्रवक्तुं सूतः पुनराप भूपतेर्वेश्म ।
भाव्युत्सवतुष्टमनास्तं भजरे० रामम् ॥११४॥
तत्रापश्यत्सूत-स्संभारान्यौवराज्यदृतिकरान् ।
यस्य पितुर्गृहमध्ये तं भजरे० रामम् ॥११५॥
यत्पितरं द्रष्टुमना-स्सूतस्तुष्टाव राजशयनीयम् ।
गत्वा तदास्य वंशं तं भजरे० रामम् ॥११६॥
रात्रिर्गताऽद्य राजन्बुध्यस्वायेति सूतफणितां ताम् ।
श्रुत्वोऽथस्य पिता गां तं भजरे० रामम् ॥११७॥
इत्थं निगदं तं तं राजागिरमाह नाहमस्वाप्सम् ।
द्राक्त्वं यमानयेति च तं भजरे चित्तमुक्तिदं रामम् ॥११८॥

सूतोऽथ राजवार्तां श्रुत्वा सन्तुष्टमानसोऽभ्यागात् ।
तुङ्गं यस्य च भवनं तं भजरे चित्तमुक्तिदं रामम् ॥११९॥
यस्यैव राज्ययोगे संबद्धां कुशलवाचमाकर्ण्य ।
सूतस्तोषं प्रापत्तं भजरे० रामम् ॥१२०॥
यस्मै सूतो राज्ञोऽभिप्रायं सकलमेव निर्वक्तुम् ।
समयप्रतीक्षकोभूत्तं भजरे० रामम् ॥१२१॥
राजाज्ञया स सीतं स्वान्तर्गृहमध्यमञ्चसंविष्टम् ।
यं सूतस्समपश्यत्तं भजरे० रामम् ॥१२२॥
कौसल्या पुत्रत्वं कैकेयीसहित तात संहूतः ।
इति सोभ्यवदद्यं गां तं भजरे० रामम् ॥१२३॥
इत्थं सूतगिरं य-श्श्रुत्वा सीतां जगाद पार्श्वस्थाम् ।
सन्तोषतुन्दिलाङ्गस्तं भजरे० रामम् ॥१२४॥
सीते कनिष्ठमाता पितरौ दृष्ट्वाहमागमिष्यामि ।
इति भार्यामभणद्यस्तं भजरे० रामम् ॥१२५॥
कैकेय्यम्बामह्यं दातुं राज्यं प्रयत्नवत्यास्ते ।
इति भार्यामभणद्यस्तं भजरे० रामम् ॥१२६॥
स्नेहो मयि कैकेय्याविहितः खलु बहुदिनादि जनकसुते ।
इति भार्यामभणद्यस्तं भजरे० रामम् ॥१२७॥
आस्वात्रेत्युक्त्वा तां सौमित्रियुतो मुदा रथारूढः ।
पितरं द्रष्टुमगाद्यस्तं भजरे० रामम् ॥१२८॥
जननिवहस्तुतसुगुणः परिवृतसैन्यस्सुमन्त्रयुक्तरथः ।
पितरं द्रष्टुमगाद्यस्तं भजरे० रामम् ॥१२९॥
सौधाग्रवर्तमानास्स्त्रीनिवहाः प्रेक्ष्य यं समायान्तम् ।
तृप्तिं नापुस्सर्वास्तं भजरे चित्तमुक्तिदं रामम् ॥१३०॥

जननिवहदत्ततोषस्स्यन्दनमध्याद्भुमुन्धरां प्राप्य ।
कक्ष्यान्तरमविशद्यस्तं भजरे चित्तमुक्तिदं रामम् ॥१३१॥
तोषादतीत्यकक्ष्या-स्सर्वाजननिवहमादरेण पुनः ।
तत्रान्यवर्तयद्यस्तं भजरे० रामम् ॥१३२॥
कैकेयी सविधे तं खिद्यन्तं तातपादमुद्वीक्ष्य ।
यस्सद्यःपापभियं तं भजरे० रामम् ॥१३३॥
तातः किमर्थमार्ये वद कोपिष्ठो ममांब सौहार्दात् ।
इति पप्रच्छांबां यस्तं भजरे० रामम् ॥१३४॥
चत्वारःपुत्रा अपि सुखिता वयमद्य मातरोपि तथा ।
इत्यभणद्यस्तां गां तं भजरे० रामम् ॥१३५॥
अंबाथवा भवत्या कोप गमितोद्यकार्यवशतः किम् ।
इति पप्रच्छांबां यस्तं भजरे० रामम् ॥१३६॥
इत्थं वाक्यं श्रुत्वा कैकेयी विगतलज्जमाह वचः ।
यं दुःखितं तदानीं तं भजरे० रामम् ॥१३७॥
राम त्वत्तातोसौ कोपन्नप्रापितोऽद्य खलु न मया ।
इत्यूचे सा यं गां तं भजरे० रामम् ॥१३८॥
किं तु त्वामभिवक्तुं लज्जावशगोऽस्ति सत्यवाग्राजा ।
इत्यूचे सायं गां तं भजरे० रामम् ॥१३९॥
पूर्वं मे दत्तं ते पित्रा तोषाद्वरद्वयं याचे ।
इति गिरमूचेयं सा तं भजरे० रामम् ॥१४०॥
एकेन विपिनवसतिं तव याचेवन्यभुक्तिसहितस्य ।
इति गिरमूचेयं सा तं भजरे० रामम् ॥१४१॥
अन्येन राज्ययोगो भरतस्यास्तामितीह याचेहं ।
इति गिरमूचे यं सा तं भजरे० रामम् ॥१४२॥

अथ वरद्वयमित्थं सफलं कर्तुं कृतादरोऽस्तु भवान् ।
इतिगिरमूचेयं सा तं भजरे चित्तमुक्तिदं रामम् ॥१४३॥
अथ यः केकयपुत्रीं राजानं सत्यपालकं कर्तुम् ।
ऊचे वाचमुदारान्तं भजरे० रामम् ॥१४४॥
भीतोऽभूद्भरतः किं मद्भ्राताहं न काननात्त्रस्तः ।
इति गिरमूचे यस्तां तं भजरे० रामम् ॥१४५॥
अंब किमर्थं तात श्शोकाक्रान्तो वदाद्यनिर्हेतु ।
इति गिरमूचे यस्तां तं भजरे० रामम् ॥१४६॥
भरताय यौवराज्यं कान्तारे वसतिमेव मे दद्यात् ।
इति गिरमूचे यस्तां तं भजरे० रामम् ॥१४७॥
इत्थं तातो वाचं मामुक्त्वा प्रणतिपात्रमद्य भवेत् ।
इति गिरमूचे यस्तां तं भजरे० रामम् ॥१४८॥
यस्य वचश्श्रुत्वेत्थं कैकेयीवचनमाह गूढार्थम् ।
नेदं मम भाषितमिति तं भजरे० रामम् ॥१४९॥
किन्तु पिता त्वां वक्तुं लज्जाविष्टस्स्वयं न फणतीत्थम् ।
इति सा गिरमवदद्यं तं भजरे० रामम् ॥१५०॥
* मद्वाक्यं सत्यमिदं मत्वा त्वं कुरु नृपश्च सत्यगिरम् ।
इति सा गिरमवदद्यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१५१॥
इति कैकेय्यालपितं यश्श्रुत्वा मनसि न व्यथां चक्रे ।
राज्ञश्शोककृदपि तत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१५२॥
यामि वनं त्वद्वचनान्नात्र क्लेशस्तवास्तु मयि मातः ।
इति गिरमभणद्यस्तां तं० रामभद्रं त्वम् ॥१५३॥
अजिनजटाचीरधरो राजानं सत्यभाषितं कुर्वे ।
इति गिरमभणद्यस्तां तं भजरे० रामभद्रं त्वम् ॥१५४॥

अंबाद्य मानसं मे राज्ञश्शोको दहत्यलं स्वबलात् ।
इति गिरमभणद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१५५॥
शोकस्य कारणन्नहि जानेहं त्वं वदाशु मम मातः ।
इति गिरमभणद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१५६॥
राज्यं सीतां प्राणान्भरताय ददामि तात वचनाद्द्राक् ।
इति गिरमभणद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१५७॥
जनकस्य तोषकरणं पुत्रस्यावश्यकं हि खलु लोके ।
इति गिरमभणद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१५८॥
अद्य पिता दूतगिरा वत्सं भरतं द्रुतं समानयतु ।
इति गिरमभणद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१५९॥
पट्टाभिषेकमङ्गळ-मद्यजयत्वरिभयंकरे भरते ।
इति गिरमभणद्यस्तां तं भजरे स्वान्त रामभद्रं त्वत् ॥१६०॥
अद्यैव तात वचना-दहमप्यटवीं भजामि सन्तुष्टः ।
इति गिरमभणद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१६१॥
भूमिं पश्यंस्तातोऽश्रूणि किमर्थं विमुञ्चतेंऽब वद ।
इति गिरमभणद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१६२॥
इत्थं यमुक्तवचनं कैकेयीगिरमथाह शीघ्रं त्वम् ।
विपिनं याहीति पुनस्तं भजरे स्वान्त रामभद्रं त्वम् ॥१६३॥
लज्जाविष्टोभूपस्त्वां न ब्रूते वनं प्रयाहीति ।
इति सागिरमवदद्यन्तं भजरे स्वान्त रामभद्रं त्वम् ॥१६४॥
यावद्यास्यसि न वनं तातस्तावन्नभोक्ष्यते सत्यम् ।
इति सा गिरमवदद्यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१६५॥
कष्टं धिगिति तदा रा-ज्यं स्मृत्वा भुवि पपात निश्चेष्टः ।
बाष्पपरिप्लुतनेत्रस्तं भजरे स्वान्त रामभद्रं त्वम् ॥१६६॥

श्रुत्वाऽनार्यं वचनं कैकेय्युक्तं च तातमपि दृष्ट्वा ।
अंबामिदमूचे यस्तं भजर स्वान्त रामभद्रं त्वम् ॥१६७॥
माता पित्रोर्वार्ताऽनुष्ठेयाप्राणहानि कालेऽपि ।
इति गिरमवदद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१६८॥
नार्थपरो मातरहं मां विध्यंबाद्य काननासक्तम् ।
इति गिरमवदद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१६९॥
वत्स्यामि नवच पञ्चच वर्षाण्यहमंब कानने तुष्टः ।
इति गिरमवदद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१७०॥
पृष्ट्वा मातरमार्यां दृष्ट्वा सीताञ्च यामि विपिनमहम् ।
इति गिरमवदद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१७१॥
पितृशिश्रूषां कुर्वन्राज्यं भरतोऽद्य पालयतु सत्यम् ।
इति गिरमवदद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१७२॥
अहमपि च दण्डकावन मद्यैव विशामि तव मुदं जनयन् ।
इति गिरमवदद्यस्तां तं भजरे स्वान्त रामभद्रं त्वम् ॥१७३॥
श्रुत्वेत्थं यस्य गिरं राजा दुःखांबुधौ च संमग्नः ।
प्ररुरोदोच्चैः क्रोशंस्तं भजरे स्वान्त रामभद्रं त्वम् ॥१७४॥
निस्संज्ञतातचरणौ कैकेय्याः पदयुगेऽपि वन्दित्वा ।
निश्चक्रामगृहाद्यस्तं तं भजरे स्वान्त रामभद्रं त्वम् ॥१७५॥
योलक्ष्मणेन सहितः छत्राद्यंगं निषिध्य पादगतिः ।
कौसल्यागृहमगमत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१७६॥
कौसल्यापि तदानीं यत्कुशलार्थं निषेव्य वैकुण्ठम् ।
देवगृहाद्बहिरागात्तं भजरे स्वान्त रामभद्रं त्वम् ॥१७७॥
प्रणिपत्य मातृपदयो-र्वृत्तान्तं वक्तुमारभत सर्वम् ।
यो मातृदत्तदृष्टिस्तं भजरे स्वान्त रामभद्रं त्वम् ॥१७८॥

मातर्ममाद्य तातः कैकेयीवशगमानसो जातः ।
इति मातरमभणद्यस्तं तं भजरे स्वान्त रामभद्रं त्वम् ॥१७९॥
पूर्वं पितुराप्तवरा- कैकेयी वरमयाचताद्य नृपम् ।
इति मातरमभणद्यस्तं भजरे स्वान्त रामभद्रं त्वम् ॥१८०॥
राजा मम भवतु सुतो यातु वनं ज्येष्ठइत्ययाचत सा ।
इति मातरमभणद्यस्तं भजरे स्वान्त रामभद्रं त्वम् ॥१८१॥
इत्थं वरद्वयं सा भूपं निर्बध्य सार्थकं चक्रे ।
इति मातरमभणद्यस्तं भजरे स्वान्त रामभद्रं त्वम् ॥१८२॥
त्वयि तन्निवेद्य गन्तुं सविधं तेऽहं समागतोस्मार्ये ।
इति मातरमभणद्यस्तं भजरे स्वान्त रामभद्रं त्वम् ॥१८३॥
इत्थं तद्वचनं सा श्रुत्वा बाष्पानुविद्धनेत्रयुगा ।
कौसल्याऽहगिरं यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१८४॥
एकं दुःखं धत्ते वन्ध्यापुत्रो न मेद्य जात इति ।
इति माताऽह गिरं यं तं भजरे स्वान्त रामभद्रं त्वत् ॥१८५॥
पुत्रं लब्ध्वाहं त्वा-मद्य प्राप्तास्मि दुःखबाहुल्यम् ।
इति माताऽह गिरं यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१८६॥
हस्ते प्रतिसरबन्धं कृत्वा तेऽद्यैव वेश्मगुरुरगमत् ।
इति माताऽह गिरं यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१८७॥
प्रतिसरबन्धो हस्ते साफल्यं वत्स नैवभजतेद्य ।
इति माताऽह गिरं यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१८८॥
महतामपि सङ्कल्पो वैफल्यं याति दैवसङ्कल्पात् ।
इति माताह गिरं यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१८९॥
अथवा ते वनवासे ज्ञातेऽपि धिया गुरुर्बहिर्नोचे ।
इति माताऽह गिरं यं तं भजरे० रामभद्रं त्वम् ॥१९०॥

मम सङ्कल्पो व्यर्थ-स्समजनि वत्साद्य केकयकुमार्या ।
इति माताऽह गिरं यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१९१॥
वत्सात्र त्वयि तिष्ठति कैकेय्यपमानवाग्झरी नाभूत् ।
इति माताऽह गिरं यं तं भजरे स्वान्त रामभद्रं त्वम् ॥१९२॥
सप्त दशवर्षकालो जातस्ते वत्स गर्भजातस्य ।
इति यन्माताऽरोदीत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१९३॥
वैवस्वतराज्ये मम वसतेस्स्थानं च दुर्लभं किं वा ।
इति यन्माताऽरोदीत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१९४॥
अथवा भवतो नाम्नो भीत्याशमनोऽत्यज किमद्य माम् ।
इति यन्माताऽरोदीत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१९५॥
मम जन्म पत्रिका सा मुषिता केनापि किं यमस्य गृहात् ।
इति यन्माताऽरोदीत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१९६॥
प्राणोपि मम नयास्यति देहादुःखं सुदुस्सहं प्रथते ।
इति यन्माताऽरोदीत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१९७॥
पूजोपवासनियमैः पुत्रं त्वां प्राप्य नोसुखं दृष्टम् ।
इति यन्माताऽरोदीत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१९८॥
स्वेच्छामरणं लभ्यं यद्यहमप्यद्य मृत्युमुपयामि ।
इति यन्माताऽरोदीत्तं भजरे स्वान्त रामभद्रं त्वम् ॥१९९॥
त्वां हित्वा क्षणमप्यहमत्र च वस्तुं कुमार न सहिष्ये ।
इति यन्माताऽरोदीत्तं भजरे स्वान्त रामभद्रं त्वम् ॥२००॥
* अहमपि च दण्डका वन मायाम्यद्यैव पुत्रवात्सल्यात् ।
इति यन्मातारोदीत्तं भज धिषणे नतेष्टदं रामम् ॥२०१॥
पुत्रस्य मातृरक्षण- मावश्यकमेव शास्ति खलु शास्त्रम् ।
इति यन्माताऽरो० रामम् ॥२०२॥

कैकेयीसुत राज्ये क्षणमपि नाहं वसामि शृणु वत्स ।
इति यन्माताऽरोदीत्तं भज धिषणे नतेष्टदं रामम् ॥२०३॥
समये तस्मिन्वत्स-स्सौमित्रिर्वीक्ष्य रामजनयित्रीम् ।
गिरमूचे यत्सविधे तं भज० रामम् ॥२०४॥
अंब किमर्थं रोदिषि तिष्ठति मयि रामदासभूत इति ।
गिरमूचे यत्सविधे तं भज० रामम् ॥२०५॥
अंबार्य राज्ययोगे प्रतिकूलकरांश्च हन्म्यहं चेति ।
गिरमाह सयत्पुरतस्तं भज० रामम् ॥२०६॥
त्रैलोक्यमपि जयेहं रामार्थे विघ्नकारि झटितीति ।
गिरमाह सयत्पुरतस्तं भज० रामम् ॥२०७॥
कण्ठन्तस्य छिंद्यां रामस्यारण्यवसतिमन्तुरिति ।
गिरमाह सयत्पुरतस्तं भज० रामम् ॥२०८॥
तस्य शिरोहं भिन्दे त्वत्पुत्रारण्यवासकर्तुरिति ।
गिरमाह सयत्पुरतस्तं भज० रामम् ॥२०९॥
उक्त्वेत्थं कौसल्या सौमित्रिर्यस्य वदनमभिवीक्ष्य ।
वक्तुं प्रारभत गिरन्तं भज० रामम् ॥२१०॥
आर्य न कार्यमिदन्तव कैकेयी दुष्ट तात वाक्छ्रवणम् ।
इत्यवदद्यं सगिरं तं भज० रामम् ॥२११॥
माभूस्त्वं नम्रशिरा स्तात नम्रं ह्ययं धनुःकुर्वे ।
इत्यवदद्यं सगिरं तं भज० रामम् ॥२१२॥
आरुण्यमद्य माभूत्पादद्वंद्वे तवार्य वनचारात् ।
इत्यवदद्यं सगिरं तं भज० रामम् ॥२१३॥
मम भवतु करे सव्ये मौर्वी ग्रहणाच्च किञ्चिदारुण्यम् ।
इत्यवदद्यं सगिरं तं भज० रामम् ॥२१४॥

यदि गुरुरप्यवलिप्तो दण्ड्यश्शास्त्रादिविनिश्चितो भवति ।
इत्यवदद्यं सगिरं तं भज धिषणे नतेष्टदं रामम् ॥२१५॥
उत्पथगतात दण्डे नोपापं भवति शास्त्रतो वच्मि ।
इत्यवदद्यं स गिरं तं भज० रामम् ॥११६॥
अंबा पश्यतु वीर्यं तातादिमदुष्टजन निपातेन ।
इत्यवदद्यं स गिरं तं भज० रामम् ॥२१७॥
रामेऽरण्यं प्रविशति वर्हि वार्ये वसामि तत्राहम् ।
इत्यवदद्यं स गिरं तं भज० रामम् ॥२१८॥
इत्थं सौमित्रि गिरं श्रुत्वार्यायं तदा बभाण वचः ।
मम मनसि संस्फुरन्तं तं भज० रामम् ॥२१९॥
नाहं वसामि नगरे केकयतनयात्मजे विनैवत्वाम् ।
इति माता प्रोचे यं तं भज० रामम् ॥२२०॥
मम भाषितमत्याज्यं शिश्रूषां कुरु हिताश्च धर्मज्ञ ।
इति मातायं प्रोचे तं भज० रामम् ॥१२१॥
शिश्रूषया हि मातुर्लेभे मुनिमान्यकाश्यपस्स्वर्गम् ।
इति माताहगिरं तं भज० रामम् ॥२२२॥
किं जीवितेन मे स्याद्धित्वा त्वां देवलोकगत्या वा ।
इति यन्मातारोदीत्तं भज० रामम् ॥२२३॥
मां हित्वा यदि यास्यस्यहमासिष्ये तदैव च प्रायम् ।
इति यन्माता रोदीत्तं भज० रामम् ॥२२४॥
मातर्वभूयान्नरकं मद्वाक्योल्लंघने न दाशरथे ।
इति यन्माता रोदी० रामम् ॥२२५॥
इत्थं विलपन्तीं तां मातरमभिवीक्ष्य सादरं धर्म्यम् ।
इत्यूचे वाचं यस्तं भज० रामम् ॥२२६॥

नो शक्तिः पितृवाक्यं त्यक्तुं मे त्वं प्रसीद हे मातः ।
इति मातरमूचे यस्तं भज धिषणे नवेष्टदं रामम् ॥२२७॥
अस्मिन्वंशे भूपा वाक्यात्पितुरेव तत्यजुर्देहान् ।
इति मातरमूचे यस्तं भज० रामम् ॥२२८॥
कण्डुर्नाम महर्षिः पितृवाक्याद्गामघर्दयत्पूर्वम् ।
इति मातरमूचे यस्तं भज० रामम् ॥२२९॥
अस्मद्वंशे पूर्वे पित्रादेशादगुर्वनं भूपाः ।
इति मातरमवदद्यस्तं भज० रामम् ॥२३०॥
मान्योपि परशुरामः पितृवाक्यान्मातृहननमप्यकरोत् ।
इति मातरमवदद्यस्तं भज० रामम् ॥२३१॥
तस्मान्मम पितृवाक्यं भवति ग्राह्यं सदापि भद्रकरम् ।
इति मातरमवदद्यस्तं भज० रामम् ॥२३२॥
स्त्रीणां पतिव्रतानां दैवं भर्तेत्युशन्ति शास्त्रविदः ।
इति मातरमवदद्यस्तं भज० रामम् ॥२३३॥
नाहमपूर्वं कार्यं शास्त्रनिषिद्धं प्रवर्तये मातः ।
इति मातरमवदद्यस्तं भज० रामम् ॥२३४॥
उक्त्वेति मातरं यो लक्ष्मणमूचे तदा वचो धर्म्यम् ।
भक्तस्वान्तध्यातं तं भज० रामम् ॥२३५॥
जानामि बलं तेऽहं वत्स वचश्शास्त्रसंमतन्नासीत् ।
इत्यूचेऽवरजं यस्तं भज० रामम् ॥२३६॥
माता न सत्यगुह्यं धर्मरहस्यं च दुःखतो बुबुधे ।
इत्यूचेऽवरजं यस्तं भज० रामम् ॥२३७॥
धर्मः प्रथितो लोके धर्मे सत्यं प्रतिष्ठितं चास्ते ।
इत्यूचेऽवरजं यस्तं भज० रामम् ॥२३८॥

मातापित्रोर्वाक्यं कर्तव्यं जानताहि पुरुषेण ।
इत्यूचेऽवरजं यस्तं भज धिषणे नतेष्टदं रामम् ॥२३९॥
अद्याहं पितृवचना-त्कैकेय्या चोदितोऽस्मि वनवासे ।
इत्यूचेऽवरजं यस्तं भज० रामम् ॥२४०॥
हितमित्थं सौहार्दा ल्लक्ष्मणमुक्त्वा पुनश्च जनयित्रीम् ।
तां वाचं योऽभाणीत्तं भज० रामम् ॥२४१॥
अनुमन्यस्वार्ये मां वनवासार्थं कुरुष्व माङ्गल्यम् ।
इत्यंबां योऽयाचत्तं भज० रामम् ॥२४२॥
एष्याम्यार्ये शीघ्रं माशोको भवतु तेऽत्रमद्विषये ।
इत्यंबां योऽयाचत्तं भज० रामम् ॥२४३॥
श्रुत्वाऽथ यस्य वचनं निस्संज्ञा भुवि निपत्य कौसल्या ।
स्वयमेवोत्थस्थौ द्राक्तं भज० रामम् ॥२४४॥
पुरतोवलोक्य पुत्रं दुर्भरदुःखा विमुञ्चती बाष्पम् ।
इति सा गिरमभणद्यं तं भज० रामम् ॥२४५॥
यदि पितृसदृशी माता मद्वचनं त्वं किमर्थमाक्षिपसि ।
इति सा गिरमभणद्यं तं भज० रामम् ॥२४६॥
किं जीवितेन मेऽत्रच किंवा पौरन्दरे निशान्ते वा ।
इति सागिरमभणद्यं तं भज० रामम् ॥२४७॥
मातरि दैवतबुद्धिं प्रोच्याथो पितरि तां श्रुतिर्ब्रूते ।
इति सागिरमभणद्यं तं भज० रामम् ॥२४८॥
इति विलपन्तीं मातर-मपि विलपन्तं च लक्ष्मणं प्रेक्ष्य ।
गिरमभणद्यो धर्म्यां तं भज० रामम् ॥२४९॥
* अज्ञात्वाभिप्रायं मम सौमित्रेऽद्य मातरं ब्रूषे ।
इति गिरमभणत्तं यस्तं भजरे चित्तमोक्षदं रामम् ॥२५०॥

अभ्यर्दसि मां लक्ष्मण मन्मातुश्शोकवृद्धिमपि कृत्वा ।
इति गिरमभणत्तं यस्तं भजरे चित्तमोक्षदं रामम् ॥२५१॥
धर्मार्थकामसङ्घे श्रेष्ठो धर्मः प्रवक्ष्यते सद्भिः ।
इति गिरमभणत्तं यस्तं० रामम् ॥२५२॥
धर्मेऽपि च पितृवाक्य-श्रवणं श्रेष्ठं ह्युशन्ति धर्मिष्ठाः ।
इति गिरमभणत्तं यस्तं० रामम् ॥२५३॥
राजा पिताच वृद्धो धर्मिष्ठो मां नचोदयति पापे ।
इति गिरमभणत्तं यस्तं० रामम् ॥२५४॥
त्यक्तुं वाचं नेशे तातस्याहं कदापि सौमित्रे ।
इति गिरमभणत्तं यस्तं० रामम् ॥२५५॥
जननीं प्रदक्षिणं यःकृत्वा मनसा पुनश्च सौमित्रिम् ।
प्रोवाच वाचमित्थं तं भज० रामम् ॥२५६॥
अभिषेकसंभ्रमोऽयं मम वनवासाय साधनं चासीत् ।
इति गिरमभणत्तं यस्तं० रामम् ॥२५७॥
मम दैवे प्रतिकूले साधुमनस्कोप्यसाधुतां भजते ।
इति गिरमभणत्तं यस्तं० रामम् ॥२५८॥
मय्यंबाकैकेयी द्वेषं कुरुते यदीह किं कार्यम् ।
इति गिरमभणत्तं यस्तं० रामम् ॥२५९॥
व्यर्थो जनप्रयत्नो लोके दृष्टः क्रमेण जननिवहैः ।
इति गिरमभणत्तं यस्तं० रामम् ॥२६०॥
त्यज सन्तापं मनसो लक्ष्मण लक्ष्म्या विपर्यये त्वमपि ।
इति गिरमभणत्तं यस्तं० रामम् ॥२६१॥
इत्थं यमुक्तवचनं दृष्ट्वा सौमित्रि रात्तबहुकोपः ।
वाचं जगाद सोष्णं तं भज० रामम् ॥२६२॥

किन्नाम दैवतं त्वं-शौण्डीरं वदसि मङ्गलादार्य ।
इत्यभणद्यमवरजस्तं भजरे चित्तमोक्षदं रामम् ॥२६३॥
जानास्यार्य नहि त्वं-कैकेयीतातयोरभिप्रायम् ।
इत्यभणद्यमवरजस्तं भज० रामम् ॥२६४॥
पूर्वं दत्वा राज्यं-पश्चान्नास्तीति वक्तुमुचितं किम् ।
इत्यभणद्यमवरजस्तं भज० रामम् ॥२६५॥
लोके शौर्यविहीनो-दैवं शास्तीति हस्तगं त्यजति ।
इत्यभणद्यमवरजस्तं भज० रामम् ॥२६६॥
मम पौरुषमद्यभवा-न्पश्यत्वार्यः करोमि तव राज्यम् ।
इत्यभणद्यमवरजस्तं भज० रामम् ॥२६७॥
दैवन्निवर्तयेऽहं-पौरुषमात्रेण पश्यति त्वयिच ।
इत्यभणद्यमवरजस्तं भज० रामम् ॥२६८॥
त्वद्वचनात्कोपमहं-प्रसहे किं दुष्टमातृकृतिजन्यम् ।
इत्यभणद्यमवरजस्तं भज० रामम् ॥२६९॥
परिहृत्यानुजकोपं-कौसल्यां शोकवारिधौ मग्नाम् ।
धर्म्यां गिरमवदद्यस्तं भज० रामम् ॥२७०॥
यावज्जीवं भर्तु-शुश्रूषाकरणमेव ते धर्मः ।
इत्यभणत्प्रसुवं यस्तं भज० रामम् ॥२७१॥
पितृवाक्याङ्गीकरणा-त्काननभूवास एव मम धर्मः ।
इत्यभणत्प्रसुवं यस्तं भज० रामम् ॥२७२॥
आवाभ्यां धर्मोऽयं-नत्याज्यस्तव पदोर्नतिं कुर्वे ।
* इत्यभणत्प्रसुवं यस्तं भज धिषणेन तष्टदं रामम् ॥२७३॥
धर्मज्ञो भरतोपि- त्वद्विषये भक्तिमेव कर्तात्र ।
इत्यभणत्प्रसुवं यस्तं भज० रामम् ॥२७४॥

आर्ये त्वं मद्विषये-मङ्गलवचनं कुरुष्व वनगतये ।
* इत्यभणत्प्रसुवं यस्तं भज धिषणे नतेष्टदं रामम् ॥२७५॥
इत्थं गदिता माता-येन तदा शास्त्रसंमतैर्वचनैः ।
प्रायुङ्क्ताशीर्वचनं तं भज० रामम् ॥२७६॥
इन्द्रादिलोकपाला-न्यद्विषये साहृदं बुजे ध्यात्वा ।
प्रायुङ्क्ताऽशीर्वचनं तं भज० रामम् ॥२७७॥
यस्यर्द्धिभद्रकामा-भूदेवेभ्योऽथ दक्षिणा दत्वा ।
प्रायुङ्क्ताऽशीर्वचनं तं भज० रामम् ॥२७८॥
गन्धेन शिरसि माता-यस्य क्षेमाय कुर्वती रक्षाम् ।
प्रायुङ्क्ताऽशीर्वचनं तं भज० रामम् ॥२७९॥
आघ्राय शिरसि यं सा परिरभ्याथो यशस्विनं पुत्रम् ।
प्रायुङ्क्ताऽशीर्वचनं तं भज० रामम् ॥२८०॥
द्रक्ष्यामि पुत्र शीघ्र-काननवासादिहागतं त्वां वै ।
इति माताऽहगिरं यं तं भज० रामम् ॥२८१॥
भद्रासनमध्यगतं-पश्यामि त्वां विदेहजासहितं ।
इति माताऽहगिरं यं तं भज० रामम् ॥२८२॥
संवर्धय कामान्मे-वध्वा सहितस्त्वमागतश्शीघ्रम् ।
इति माताऽहगिरं यं तं भज० रामम् ॥२८३॥
इत्थं सास्वस्त्ययनं-कृत्वा यस्य प्रदक्षिणं चक्रे ।
मद्रोगापायकरं तं भज० रामम् ॥२८४॥
एवं मातुर्लब्ध्वा-स्वस्त्ययनं यः कृतार्थसङ्केतः ।
अकरोत्प्रणतिमात्रे तं भज० रामम् ॥२८५॥
अभिवाद्य च कौसल्यां-द्रष्टुं सीतां स्ववेश्ममध्यगताम् ।
यः प्रययौ मातृगृहात्तं भज० रामम् ॥२८६॥

यस्य वनवसतिवार्ता-वैदेहीनाशृणोच्च किञ्चिदपि।
मन्मानसशुकनीडं तं भज धिषणे नतेष्टदं रामम् ॥२८७॥
यस्यैव यौवराज्यं मन्वानादेव पूजनादिविधिम्।
शास्त्रोक्तं साप्यकरोत्तं भज० रामम् ॥२८८॥
अथ यस्यागमनं सा-कांक्षन्ती तुष्टमानसा भूत्वा।
देवायतनेऽवात्सीत्तं भज धिषणेन तेष्टदं रामम् ॥२८९॥
अथ यस्स्वकीयभवनं-लज्जाविष्टः प्रशान्तमुखशोभः।
प्राविक्षन्मृदुगमनस्तं भज० रामम् ॥२९०॥
दृष्ट्वायं सा सीता-वेगेनोत्पत्यवेपमानाङ्गी।
शोकाकुलितं मेने तं भज० रामम् ॥२९१॥
न शशाक स्वान्तगतं-शोकं वक्तुं कनिष्ठमातृभवम्।
यस्तस्यै सुगुणायै तं भज रामम् ॥२९२॥
अथ सा विदेहजाता-भर्तारं यं निरीक्ष्य चार्वंगी।
ऊचे वाचमनीचां तं भज० रामम ॥२९३॥
संपत्प्रदपुष्यर्क्षे-कस्मात्त्वं नाथ दुर्मना भवसि।
इति गिरमवदत्सायं तं भज० रामम् ॥२९४॥
* न विराजतेऽद्य वदनं-श्वेतच्छत्रेण हीनमपि कस्मात्।
इति सीता यमपृच्छत्तं तं भज० रामम् ॥२९५॥
वन्दिप्रमुखाहृष्टा-स्तोत्रं कुर्वन्ति नैव हेतुः कः।
इति सीता यमपृच्छत्तं भज० रामम् ॥२९६॥
पुष्यरथः पुरतस्ते हस्तीचाश्वो न लक्ष्यते कस्मात्।
इति सीता यमपृच्छत्तं भज० रामम् ॥२९७॥
पट्टाभिषेकसमये-मुखशोभा ते विलक्षणा कस्मात्।
इति सीता यमपृच्छत्तं भज० रामम् ॥२९८॥

इत्थं तां प्रलपन्तीं-कान्ताराबासवाक्यकथनेन ।
यः प्रतिवक्तुं मेने तं भज धिषणे नतेष्टदं रामम् ॥२९९॥
महति कुले संभूते-धर्मज्ञे त्वां वदामि शृणु मम गाम् ।
इति सीतामवदद्यस्तं भज० रामम् ॥३००॥
* पूर्वं दत्तवरा मे- पित्राऽऽसीन्मुदा च कैकेयी ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३०१॥
अद्य वरद्वयमित्थं-तत्सफलं कर्तुमेव मारभत ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३०२॥
कैकेय्यानिर्बन्धा-न्मत्पित्राऽहं वनाय चाज्ञप्तः ।
इति गिरमूचे यस्तां तं भज० रामम् ॥३०३॥
वर्षाणि नव च पञ्च च काननवासे नियोजितः पित्रा ।
इति गिरमूचे यस्तां तं भज० रामम् ॥३०४॥
अनुजोऽयं मम भरतो-राज्यावासे नियोजितः पित्रा ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३०५॥
अद्य त्वां दृष्ट्वाऽहं प्रस्थानाय प्रयत्नवानस्मि ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३०६॥
नस्त्युत्योऽहं-भरते-संपन्नो न सहते परस्तोत्रम् ।
इति गिरमूचेयस्तां तं राममहं सदा भजे मुक्त्यै ॥३०७॥
अहमपि तातस्याऽऽज्ञां-पालयितुं विपिनधरणिमनुयामि ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३०८॥
उपवासव्रतसक्तां-श्वश्रूं वृद्धां त्वमेव परिपाहि ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ३०९॥
नित्यं कल्यश्वश्रू-देवांश्चापि प्रणम्य कुरु पूजाम् ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ३१०॥

पुत्रभ्रातृसमौ तौ-द्रष्टव्यौ तेपि भरतशत्रुघ्नौ ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३११॥
अद्य गमिष्यामि वनं श्रुत्वा वाक्यं ममैव कुरु धर्मम् ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३१२॥
इत्युक्ता वैदेही-यंभर्तारं क्रुधा तदा प्रणयात् ।
ऊचे वाचमुदारां तं राममहं सदा भजे मुक्त्यै ॥३१३॥
* तव नामै तद्वाक्यं-न्याय्यं वा किं त्वमेव वद शीघ्रम् ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३१४॥
लोके भूपाश्शूरा-श्श्रुत्वा वाक्यं तवाद्य किं ब्रूयुः ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३१५॥
सर्वेपि बन्धुवर्गास्स्वकृतैस्सुकृतैःफलानि काङ्क्षन्ति ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३१६॥
भर्तुर्भाग्यं भार्या-प्राप्नोत्येकेत्युशन्ति विद्वांसः ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३१७॥
माता च पिता भ्राता-त्रातारो नो भवन्ति नारीणाम् ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै ॥३१८॥
भर्ता पतिव्रतानां-त्राताऽन्यो नेति शास्त्रतो जाने ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै॥३१९॥
नाहं वसामि राज्ये-त्वदृते भर्तर्नयाद्य विपिनं माम् ।
इति गिरमूचे यस्तां तं राममहं सदा भजे मुक्त्यै॥३२०॥
स्त्रीणां पतिव्रतानां भर्तृसहायः कदापि न त्याज्यः ।
इति गिरमूचे सा यं तं राममहं सदा भजे मुक्त्यै ॥३२१॥
वीरेण संयुतैव द्रष्टुं विपिनं त्वयाहमिच्छामि ।
इति गिरमूचे सा यं तं राममहं० मुक्त्यै ॥३२२॥

ज्योतिश्शास्त्रज्ञगिरं मिथ्याकर्तुं कदापि नेच्छामि ।
इति गिरमूचे सा यं तं राममहं सदाभजे मुक्त्यै ॥३२३॥
मम जन्मपत्रिकालान्ते दृष्टारण्ये निवासमाहुर्वै ।
इति गिरमूचे सा यं तं० मुक्त्यै ॥३२४॥
इत्थं सीता वचनं यश्श्रुत्वा नोनिनीषति स्म वनम् ।
कौसल्यांबुधि सोमं तं राममहं० मुक्त्यै ॥३२५॥
स्वाभिप्रायज्ञां तां भार्यां बाष्पांबुपिहित नेत्रान्ताम् ।
प्राह पुनर्यो वाक्यं तं राममहं० मुक्त्यै ॥३२६॥
सीते मानिनि शृणु मे वाक्यं योग्यं सदापि सौख्यकरम् ।
इति गिरमवदद्यस्तां तं राममहं० मुक्त्यै ॥३२७॥
दुष्टा व्याघ्रास्सिंहा व्याळाश्च वसन्ति काननेऽजस्रम् ।
इति गिरमवदद्यस्तां तं राममहं० मुक्त्यै ॥३२८॥
सग्राहा गिरि नद्यः पङ्कैराविष्टभूतलं हि सरः ।
इति गिरमवदद्यस्तां तं राममहं० मुक्त्यै ॥३२९॥
स्त्रीभिरगम्यं विपिनं नैवाशास्यं त्वयापि खलु सीते ।
इति गिरमवदद्यस्तां तं राममहं० मुक्त्यै ॥३३०॥
हितबुध्या खलु वाक्यं प्रोक्तं सीते मयाद्य तव विषये ।
इति गिरमवदद्यस्तां तं राममहं० मुक्त्यै ॥३३१॥
उपवासः कर्तव्यो धर्तुं योग्यानि वल्कलानि जटाः ।
इति गिरमवदद्यस्तां तं राममहं० मुक्त्यै ॥३३२॥
प्राप्तानामतिथीनां नित्यं पूजाविधिश्च न त्याज्यः ।
इति गिरमवदद्यस्तां तं राममहं० मुक्त्यै ॥३३३॥
त्रिषवणमज्जनसन्ध्याश्शीतजले नैव कालतः कार्याः ।
इति गिरमवदद्यस्तां तं राममहं० मुक्त्यै ॥३३४॥

दुःखकरो वनवासस्तव सीते मास्तु मद्वचश्शृणुतात् ।
इति गिरमवदद्यस्तां तं राममहं सदा भज मुक्त्यै ॥३३५॥
इत्थं सा पत्युक्त्वा सीता बाष्पांबुपूर्णनयनायम् ।
वाचमनीचां प्रोचे तं राममहं मुक्त्यै ॥३३६॥
इत्थं वचनं वक्तुं योग्यं किं प्राणनाथ धर्मज्ञ ।
* इति सा गिरमूचे यं तं राममहं० मुक्त्यै ॥३३७॥
भार्याभरणात्पुंसो-भर्तृत्वंशास्त्रसंमतंचास्ते ।
इति सागिरमूचे यं तं राममहं० मुक्त्यै ॥३३८॥
भर्तात्वंममभरणा-द्भयास्त्वां वै नमाम्यहं मूर्ध्ना ।
इतिसागिरमूचे यं तं राममहं० मुक्त्यै ॥३३९।
इत्थंबहुधाप्रोक्तो-यस्तांविपिनंननेतुमलमैच्छत् ।
मन्मानसनीडशुकं तं राममहं० मुक्त्यै ॥३४०॥
इत्थं सामृदुवचनै-र्भर्त्रासीताप्रसान्त्व्यमानापि ।
ऐच्छद्यंवक्तुं गां तं राममहं० मुक्त्यै ॥३४१॥
यंपरिचिक्षेपतदा-प्रणयादभिमानतश्चसासाध्वी ।
उद्विग्नवदनकमला तं राममहं० मुक्त्यै॥३४२॥
* वैदेहस्तातस्त्वां-किममन्यतयोषितं च पुंरूपाम् ।
इति सा यं गिरमवदत्तं राममहं० मुक्त्यै ॥३४३॥
युक्तः किन्तव नाथ-त्वयि मां रक्तां विहाय वनवासः ।
इति सा यं गिरमूचे० मुक्त्यै ॥३४४॥
शैलूष इव हिमां त्वं कस्मै दातुं यथेच्छमालपसि ।
इति सा यं गिर० मुक्त्यै ॥३४५॥
नेष्यसियदि नवनं मां-पास्याम्यहमद्यमारकं हिविषम् ।
इति सा यं गिर० मुक्त्यै ॥३४६॥

द्विषतां वशमापन्ना-नैवाहं राज्यवासमिच्छेयम् ।
इति सा यं गिरमूचे तं राममहं सदा भजे मुक्त्यै ॥३४७॥
शोकमिमं सोढुमहं-नालं क्षणमात्रमपि दयासिन्धो ।
इति सा यं गिरमूचे तं राममहं सदा भजे मुक्त्यै ॥३४८॥
इत्थं दुःखवशां तां क्रोशन्तीं यो निरीक्ष्य चार्वंगीम् ।
वक्तुं गिरमारेभे तं राममहं० मुक्त्यै ॥३४९॥
मा भज सीते शोकं त्यक्त्वाहं त्वां नयामि नाकमपि ।
इत्यभणद्यस्तां गां तं राममहं मुक्त्यै ॥३५०॥
* तव मानसभावमहं ज्ञातुं सम्यक्किलेत्थमवदं गाम् ।
इत्यभणद्यस्तां गां तं राममहं नमामि मोक्षेच्छुः ॥३५१॥
छायामिनः कदाचि-ज्जह्यान्नाहं त्यजामि सुखदां त्वाम् ।
इत्यभणद्यस्तां गां तं राममहं नमामि मोक्षेच्छुः ॥३५२॥
पित्रोश्च वशयं यं शास्त्री यामां च काननं नयति ।
इत्यभणद्यस्तां गां तं राममहं नमामि मोक्षेच्छुः ॥३५३॥
प्रत्यक्षदेवते द्वे मातापितरौ विसृज्य कं यायाम् ।
इत्यभणद्यस्तां गां तं राममहं० मोक्षेच्छुः ॥३५४॥
पितृसेवासमधर्मो नास्त्यपरो धर्मशास्त्रविहितो वा ।
इत्यभणद्यस्तां गां तं राममहं० मोक्षेच्छुः ॥३५५॥
सीतेऽनुगच्छ मां त्वं रक्षामि त्वां सदापि वनवासे ।
इत्यभणद्यस्तां गां तं राममहं० मोक्षेच्छुः ॥३५६॥
त्वत्कुलसदृशं सीते भर्त्रा सह वसनमेव धर्मज्ञे ।
इत्यभणद्यस्तां गां तं राममहं० मोक्षेच्छुः ३५७॥
वनवासयोग्यमङ्गळ-कार्यं सर्वं विमृश्य कुरु सीते ।
इत्यभणद्यस्तां गां तं राममहं० मोक्षेच्छुः ॥३५८॥

ब्राह्मणसाद्धन निचयं दत्वा तेभ्यो नमस्कृतिं कुर्याः।
इत्यभणद्यस्तां गां तं राममहं नमामि मोक्षेच्छुः ॥३५९॥
देहि त्वद्भृत्येभ्यो मच्छयनीयं दुकूलभूषाश्च।
इत्यभणद्यस्तां गां तं राममहं० मोक्षेच्छुः ॥३६०॥
इत्याज्ञप्ता भर्त्रा-सीतायेनस्वकीयकुशलार्थम्।
विप्रेभ्योद्रविणमादात्तं राममहं० मोक्षेच्छुः॥३६१॥
यस्य शयनीय वस्त्र-प्रभृति पदार्थांश्च भृत्यसात्कृत्वा।
साभूद्वनगमनोत्कातं राममहं० मोक्षेच्छुः॥३६२॥
अथलक्ष्मणस्तदानीं-यत्पदकमले निपीड्यसाश्रुमुखः।
सीतामूचे वाचं तं राममहं० मोक्षेच्छुः॥३६३॥
धीर्यदि ते वनवासे-त्वानुगमिष्याम्यहं च धानुष्कः।
इत्याहसयत्पत्नीं तं राममहं० मोक्षेच्छुः॥३६४॥
युवयोस्सेवां त्यक्त्वा-स्वर्गारोहोपि रोचते नोमे।
इत्याह सयत्पत्नीं तं राममहं० मोक्षेच्छुः॥३६५॥
सुरलोका क्रमणं वा-प्यमरत्वं वा नकामयेऽप्याहम्।
इत्याह सयत्पत्नीं तं राममहं० मोक्षेच्छुः॥३६६॥
उक्त्वैव वैदेहीं-सौमित्रिं यः कृतानुगमनेच्छुम्।
आरभत वक्तुमेवं तं राममहं० मोक्षेच्छुः ॥३६७॥
* वत्सैतत्तव वचनं नोयुक्त मे विभाति धर्मज्ञ।
इति लक्ष्मणमूचे य-स्तं राममहं० मोक्षेच्छुः ॥३६८॥
कैकेयी वाग्वशग-स्तातो भरताय राज्यमत्याक्षीत्।
इति लक्ष्मणमूचेय स्तं राममहं० मोक्षेच्छुः ॥३६९॥
भरतोद्य राज्यपालन-कर्मणि सक्तो न मातरौ स्मर्ता।
इति लक्ष्मणमूचेय-स्तं राममहं० मोक्षेच्छुः॥३७०॥

तस्मादत्र स्थित्वा-काले काले च मातरा वचैः ।
इति लक्ष्मणमूचेय-स्तं राममहं नमामि मोक्षेच्छुः ॥३७१॥
अंबां सुमित्रया सह रक्षितुमत्रैव तावकी वसतिः ।
अस्त्विति गिरमूचेय-स्तं राममहं० मोक्षेच्छुः ॥३७२॥
इत्थं येनोक्तां गां-श्रुत्वा सौमित्रि रात्त बहुदुःखः ।
आह गिरं यं ज्येष्ठं तं राममहं मोक्षेच्छुः ॥३७३॥
* द्विर्नाभिभाषतेऽयं-रामः कामादि तिस्मरोक्ति त्वम् ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३७४॥
पूर्वं भवताऽज्ञप्तं-सहसञ्चरणं त्वयैव खलुनाथ ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३७५॥
किमिदानीं प्रतिषेधः-क्रियते द्राक्ष्ये त्वयानुसरणस्य ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३७६॥
आर्याद्य मन्निवारण कारण-मीषद्विमृश्य नाद्राक्षम् ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३७७॥
तव तेजो माहात्म्या द्रक्षिष्यति मातरौ च नौ भरतः ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३७८॥
औदासीन्यं मात्रो नौं यदि कुरुते तमद्य दग्धाहम् ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३७९॥
तत्पक्षानपि सर्वा-न्सञ्जयिनी वसति मेव नेताहम् ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३८०॥
अथवांवा कौसल्या-मत्सदृशा संख्यदेहिनोप्यविता ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३८१॥
ग्राम सहस्रं मात्रोः-प्रत्येकं चास्ति धान्यधनपुष्टम् ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३८२॥

वन्य फलाहरणार्थं त्वामनुयास्यामि जानकी जाने ।
इत्यवदत्सहजो यं तं राममहं नमामि मोक्षेच्छुः ॥३८३॥
अहमद्यैव कृतार्थो-भवितुं त्वामनुसरामि करुणाब्धे ।
इत्यवदत्सहजो यं तं राममहं० मोक्षेच्छुः ॥३८४॥
इत्थमनुजस्य वचनं श्रुत्वा योवाक्यमाह तं तोषात् ।
सनकादिमुनिध्येयं तं राममहं० मोक्षेच्छुः ॥३८५॥
* वत्साद्य मातरौद्वे-ह्यन्यांन्सुहृदश्च शीघ्रमापृच्छ्य ।
आयाहीत्यवदद्यस्तं राममहं० मोक्षेच्छुः ॥३८६॥
आचार्यसद्मनिहितं-मद्योग्यं वस्तुसर्वमादाय ।
आयाहीत्यवदद्यस्तं राममहं० मोक्षेच्छुः ॥३८७॥
धनुषी अभेद्यकवचे-तूणीचादाय सायकेन युतौ ।
आयाहीत्यवदद्यस्तं राममहं० मोक्षेच्छुः ॥३८८॥
खड्गौ च सूर्यविमलौ-तत्रस्थौ त्वं च शीघ्रमादाय ।
आयाहीत्यवदद्यस्तं राममहं० मोक्षेच्छुः ॥३८९॥
अथ गुरुसदनात्सर्वं-सौमित्रिश्शीघ्रमेव संगृह्य ।
प्रादर्शयच्च यस्मै तं राममहं० मोक्षेच्छुः ॥३९०॥
दृष्ट्वाऽयुधजालं यो-लक्ष्मणमूचे वचस्तदा तोषात् ।
जनकसुताऽश्रितपार्श्वं तं राममहं० मोक्षेच्छुः ॥३९१॥
मम वचनात्सौमित्रे-गत्वा द्राक्त्वं सुयज्ञमाहूय ।
आगच्छेत्यवदद्यस्तं राममहं० मोक्षेच्छुः ॥३९२॥
श्रुत्वा ज्येष्ठस्य गिरं-गत्वा सदनं सुयज्ञमाह वचः ।
येनोक्तं सौमित्रिस्तं राममहं० मोक्षेच्छुः ॥३९३॥
श्रुत्वा सौमित्र्युक्तं-यत्सन्देशं मुदाब्धि संमग्नः ।
आगच्छद्गुरुपुत्रस्तं राममहं० मोक्षेच्छुः ॥३९४॥

तस्मै स्वाभरणान्यपि-दत्वा प्रोवाच यो गिरं विप्रम् ।
बिभृहित्वं प्रमदादिति तं राममहं नमामि मोक्षेच्छुः ॥३९५॥
सीतावचनाद्दत्वा यो रशनादीनि भूषणानि तदा ।
त्वत्पत्न्या इत्यवदत्तं राममहं० मोक्षेच्छुः ॥३९६॥
पर्यङ्कास्तरणान्यपि सीता तुभ्यं प्रदातुमिच्छति भो ।
गृह्णीष्वेत्यवदद्यस्तं राममहं० मोक्षेच्छुः ॥३९७॥
शत्रुं जयनामानं-मातुलदत्तं गजेन्द्रमपि तेद्य ।
वितरामीत्यवदद्यस्तं राममहं० मोक्षेच्छुः ॥३९८॥
कौशिकसहितमगस्त्यं योऽनुजसहितोऽथ गोकुलैर्द्रविणैः ।
संपूज्य तोषमगमत्तं राममहं० मोक्षेच्छुः ॥३९९॥
आज्ञापयच्च भृत्या-नुदवासितं सम्यगेव पालयितुम् ।
योलक्ष्मणेन सहितस्तं० मोक्षेच्छुः ॥४००॥
* त्रिजटं गार्ग्यं वृद्धं भार्योचे बहुलपुत्ररक्षार्थम् ।
याचितुमर्थं यस्मिन्स्तं रामं चिन्तयामि मनसाहम् ॥४०१॥
त्रिजटस्तदोञ्छवृत्ति-र्दारिद्र्येण प्रपीडितोहमिति ।
गिरमामन्त्र्योचे यं तं रामं० साहम् ॥४०२॥
छिद्रशनयुक्तवसनं बिभ्राणं तन्निरीक्ष्य गिरमूचे ।
यश्च परिहासयुक्तां तं रामं० साहम् ॥४०३॥
यावत्त्वत्करनुन्नो-दंडोवेगात्प्रयाति तावद्गाः ।
वितरामीत्यूचे यस्तं रामं० साहम् ॥४०४॥
अथ यद्वाचं श्रुत्वा बध्वा शाटीं कटौ च सुदृढं सः ।
चिक्षेप दण्डमारात्तं रामं० साहम् ॥४०५॥
यो मन्दहासयुक्त-स्तस्मै तावत्प्रमाणगो निवहैः ।
गाढालिंगनमादिशत्तं रामं० साहम् ॥४०६॥

मन्युर्नो कर्तव्य-स्तेजस्ते ज्ञातुमेव मवदंगाम्।
इति गिरमवदत्तं यस्तं रामं चिन्तयामि मनसाहम् ॥४०७॥
अथ सीतानुजसहित-स्तातं द्रष्टुं स्ववेश्मनः प्रययौ।
करधृतचापासिर्य-स्तं रामं० साहम् ॥४०८॥
आरुह्य चन्द्रशालां यं द्राग्द्रष्टुं तदा पुरस्थजनाः।
यत्नमकार्षुस्सर्वे तं रामं० साहम् ॥४०९॥
ऊचुर्बहुविधवाचो यद्विषयेऽसह्य दुःखसन्तप्ताः।
कृतकैकेयी निन्दास्तं रामं० साहम् ॥४१०॥
का स्त्री लोके रामे द्वेषं कुरुते विनाच कैकेयीम्।
इति रुरुदुर्यद्विषये तं रामं० साहम् ॥४११॥
वन्ध्या वा कैकेयी रामे द्वेषं करोति चण्डी सा।
इति रुरुदुर्यद्विषये तं रामं० साहम् ॥४१२॥
युक्तमिदं पापाया भाति कथं मनसि राजकुलजायाः।
इति रुरुदुर्यद्विषये तं रामं० साहम् ॥४१३॥
वयमप्यनुगच्छामो रामं सर्वे गृहादिकं त्यक्त्वा।
इति रुरुदुर्यद्विषये तं रामं० साहम् ॥४१४॥
एकैव सा पिशाची साकेते वसतु राम सन्त्यक्ते।
इति रुरुदुर्यद्विषये तं रामं० साहम् ॥४१५॥
इत्थं वचनं श्रुत्वा साकेतपुरस्थमानुजैः प्रोक्तम्।
नो विव्यथे तदा यस्तं रामं चिन्तयामि मनसाहम् ॥४१६॥
यः पितृसदनसमीपे शुष्यद्वक्त्रं सुमन्त्रमभिवीक्ष्य।
पितरं दिदृक्षुरगमत्तं रामं० साहम् ॥४१७॥
अन्तःप्रविश्य सदनं यस्स्वागमनं पितुर्निवेदयितुम्।
ऊचे गिरं सुमन्त्रं तं रामं० साहम् ॥४१८॥

आख्याहि सूतपित्रेऽनुजसहितं मां ससीतमद्यद्राक् ।
इति तं गिरमवदद्यस्तं रामं चिन्तयामि मनसाहम् ॥४१९॥
सूतो वदन्तमित्थं शोचन्तं यं निरीक्ष्य बहुदुःखः ।
राज्ञे व्यजिज्ञपदिदं तं रामं० साहम् ॥४२०॥
राजञ्ज्येष्ठसुतस्ते द्रष्टुं त्वां द्वारितिष्ठतीति तदा ।
राज्ञे व्यजिज्ञपद्यं तं रामं० साहम् ॥४२१॥
त्वां पश्यतु रामोयं काननवसतिन्निवेद्य गन्तुमिति ।
राज्ञे व्यजिज्ञपद्यं तं रामं० साहम् ॥४२२॥
श्रुत्वै तां सूतगिरं यस्यारण्ये विमृश्य वसतिं राट् ।
बहुदुःखपात्रमासीत्तं रामं० साहम् ॥४२३॥
आनय सुमन्त्रदारान्सर्वानपि तैस्सहैव यं द्रष्टुम् ।
इच्छति मनइत्यवदत्तं रामं० साहम् ॥४२४॥
अन्तःप्रविश्यसूतो यत्पितृवचनं जगाद तेषु तदा ।
सीतालक्ष्मणसहितं तं रामं० ॥४२५॥
सूतमुखाद्राजगिरं श्रुत्वा नार्यस्तदाऽत्तबहुदुःखाः ।
यं द्रष्टुं द्रागागुस्तं रामं० साहम् ॥४२६॥
पञ्चाशदुत्तरशत त्रयसंख्याका निरीक्ष्य वनितास्स्वाः ।
यस्य पितोचे सूतं तं रामं० साहम् ॥४२७॥
आनय सुमन्त्र वत्सं शीघ्रं त्वं मे समीपमिति वाचम् ।
ऊचे तं यस्य पिता तं रामं० साहम् ॥४२८॥
अथ यं लक्ष्मणसहितं सीता सहितं निनाय वै सूतः ।
साञ्जलिबंधं दूरात्तं रामं० साहम् ॥४२९॥
यं दृष्ट्वा भूपाल-स्स्वासनमध्याद्द्रुतं समुत्थाय ।
अभिमुखमेव प्रययौ तं रामं० साहम् ॥४३०॥

यस्य समीपं प्रेप्सु-र्मध्ये मार्गे निपत्य भुवि मूर्च्छाम् ।
प्रापद्दशरथभूपस्तं रामं चिन्तयामि मनसाऽहम् ॥४३१॥
भूमौ पतितं पितरं-दृष्ट्वा मैथिल्यनुज सहितो यः ।
पर्यङ्कमनैषीद्द्राक्तं रामं चिन्तयामि मनसाऽहम् ॥४३२॥
अथ लब्ध संज्ञमेनं तातं वाचं प्रवक्तुमारेभे ।
यो बद्धाञ्जलिरित्थं तं रामं० साहम् ॥४३३॥
* आपृच्छे राजं स्त्वां-काननमार्गं सहायवान्गन्तुं ।
इत्यभणद्यस्तातं तं रामं० साहम् ॥४३४॥
सीता लक्ष्मणसहितो-गच्छामि त्वं च सत्यवाग्भूयाः ।
इत्यभणद्यस्तातं रामं० साहम् ॥४३५॥
त्यज तातस्त्वं शोकं-कानन वासान्नमे भयं किञ्चित् ।
इत्यभणद्यस्तातं रामं० साहम् ॥४३६॥
वर्षाणि नवच पञ्चच काननभूमौ विहृत्य पश्येयम् ।
त्वामहमित्यवदद्यस्तं रामं० साहम् ॥४३७॥
* शीघ्रं तव प्रतिज्ञा-पूर्त्या त्वां सत्यवादिनं कुर्याम् ।
इत्यवदद्यस्तातं तं रामं० साहम् ॥४३८॥
वैदेही सौमित्री-मामनुगन्तुं कृतादरौश्रयतः ।
इत्यवदद्यस्तातं तं रामं० साहम् ॥४३९॥
इत्युक्तो भूमीश-स्त्वाज्ञामेव प्रतीक्षमाणं यम् ।
ऊचे वाचं साश्रुस्तं रामं० साहम् ॥४४०॥
राज्यार्हं ज्येष्ठं त्वां-कैकेय्याऽहं प्रचोदितो वच्मि ।
इत्यवदत्साश्रुर्यं तं रामं० साहम् ॥४४१॥
अकुतो भय मध्वानं-गत्वारिष्टं द्रुतं समागच्छ ।
इत्यवदत्साश्रुर्यन्तं रामं० साहम् ॥४४२॥

वनगमनोद्युक्तं त्वां-मास्त्विति वचनं कथन्वहं ब्रूयां ।
इत्यवदत्साश्चर्यन्तं रामं चिन्तयामि मनसाहम् ॥४४३॥
एकाह दर्शनाचे मातहं चापि तृप्तिमिच्छावः ।
इत्यवदत्साश्चर्यं तं रामं० साहम् ॥४४४॥
श्वःकल्ये याहित्वं-सीता सौमित्रि सहित एव सुखं ।
इत्यवदत्साश्चर्यं तं रामं० साहम् ॥४४५॥
मां सत्यवचनमद्य-त्वं कर्तुं यासि काननं वत्स ।
इत्यवदत्साश्चर्यं तं रामं० साहम् ॥४४६॥
मत्सदृशो जनकोपि त्वत्सदृशस्तनुभवोपि नोलोके ।
इत्यवदत्साश्चर्यं तं रामं० साहम् ॥४४७॥
श्रुत्वैतात्पितृवचनं-लक्ष्मण सहितो बभाण भूपं यः ।
मन्मानसतृप्ति करं तं रामं० साहम् ॥४४८॥
धनधान्य पुष्टमत द्राष्ट्रं भरताय दीयतां तात ।
इति पितरमभाणीद्यस्तं रामं० साहम् ॥४४९॥
* संवत्सरांश्चतुर्दश निवसामि वनेपितस्सुखेनाहम् ।
इति पितरमवादीद्यस्तं राममहं भजामि दाशरथिम् ॥४५०॥
अपगच्छतु तव दुःखं माभूर्व्यसनैः परिप्लुताक्षस्त्वम् ।
इति पितरमवादीद्यस्तं० रथिम् ॥४५१॥
कैकेय्याः प्रार्थनया-गच्छामि वनं त्वयीह कोदोषः ।
इति पितरमवादीद्यस्तं० रथिम् ॥४५२॥
द्रक्ष्यसि मां प्राप्तं त्वं वनवासादनुजमैथिली सहितम् ।
इति पितरमवादीद्यस्तं० रथिम् ॥४५३॥
इत्थं यमुक्त वचनं राजा पुत्रं मुगाढमालिङ्ग्य ।
मूर्च्छामगमद्दुःखात्तं रामं चिन्तयामि दाशरथिम् ॥४५४॥

अथ दृष्ट्वा यन्नार्यो रुरुदुर्दुःखाद्विनाच कैकयीम् ।
द्राक्काननगमनेच्छन्तं राममहं भजामि दाशरथिम् ॥४५५॥
तत्र सुमन्त्रः कोपा द्रक्ताक्षस्तामुवाच कैकयीम् ।
यद्विषये दुःखार्तस्तं राम० दाशरथिम् ॥४५६॥
* कैकयि दुष्टहृदये-रामे पापं करोषि युक्तं ते ।
इत्याह सयत्स विधे तं राम० रथिम् ॥४५७॥
मातृगुणास्तनुजाया-मिति वृद्धवचः करोषि सत्यमहो ।
इत्याह सयत्स विधेतं राम० रथिम् ॥४५८॥
वरदानात्प्रवरस्तव-तातो जानाति भाषितं सर्वम् ।
इत्याह स यत्स विधे तं राम० रथिम् ॥४५९॥
जृंभगिरा हलता ते-माता पत्याच धिकृताहि खलु ।
इत्याहसयत्स विधत राम० रथिम् ॥४६०॥
निंबात्कथं स्रवन्मधु-कोकिलवाक्स्यात्कथं नु काकेभ्यः ।
इत्याह सयत्स विधे तं राम० रथिम् ॥४६१॥
पूज्य केकयवंशे सृष्टा सृष्टा कथन्नुदुर्धीस्त्वम् ।
इत्याह सयत्स विधे तं राममहं० रथिम् ॥४६२॥
त्वांमन्ये पतिहनने-कुलहनने चापि पूर्णहंतरिति ।
इत्याहसयत्स विधेतं राममहं० रथिम् ॥४६३॥
आम्रं वृक्षं छित्वा-निंबं तत्रप्रकल्पयेत्कोरा ।
इत्याहसयत्स विधेत राममहं० रथिम् ॥४६४॥
भरतो राज्यं विजनं परिपालयतु त्वयैव सहमात्रा ।
इत्याह स यत्सविधे तं राममहं भजामि दाशरथिम् ॥४६५॥
परिवादस्ते लोके-माभूत्कैकयि मुंच हठवादम् ।
इत्याह स यत्स० रथिम् ॥४६६॥

पूर्वाचारक्रमतो-रामो राज्यं प्रशास्तु कैकेयी ।
इत्याह स यत्सविधे तं राममहं भजामि दाशरथिम् ॥४६७॥
शासति रामे राज्यं-युवराजो भवति तेऽर्भको भरतः ।
इत्याह स यत्स० रथिम् ॥४६८॥
भर्ता ते राज्यमिदं-त्यक्त्वाऽरण्ये वसेच्च निर्भारः ।
इत्याह स यत्स० रथिम् ॥४६९॥
सदासीत्थं निगदन्तं प्राह सुमन्त्रं तदा च यस्य पिता ।
सैन्यं प्रेषयितुं द्राक्तं राममहं० रथिम् ॥४७०॥
* धनधान्यकोशयुग्मं-मामकमद्य प्रयातु राम मनु ।
इति यस्य पिताऽहगिरं तं राममहं० रथिम् ॥४७१॥
वनवासेऽपि स रामो-यजनं शास्त्रोक्तदक्षिणं कुर्यात् ।
इति यस्य पिताऽह गिरं तं राममहं० रथिम् ॥४७२॥
इत्थं वदति नृपाले-कैकेयीवाक्यमाह राजानम् ।
यत्सौख्यमसहमाना तं राममहं० रथिम् ॥४७३॥
निस्सारं विजनं सा-राज्यं भरताय मास्त्विति प्रोचे ।
यत्सौख्यमसहमाना० रथिम् ॥४७४॥
सगरः पुत्रमिव त्वं-रामं शीघ्रं त्यजेति सोवाच ।
यत्सौख्यमसहमाना तं राममहं० रथिम् ॥४७५॥
सिद्धार्थश्च क्रोधा-त्कैकेयीं वाक्यमाह दुःखार्तः ।
यत्सविधे बहुबुद्धिस्तं राममहं० रथिम् ॥४७६॥
नगरशिशूनां कूपे-क्षेपात्सगरसुतं च तत्याज ।
इत्याह स यत्सविधे तं राममहं० रथिम् ॥४७७॥
रामः कस्य विरोधं-कुरुते तं त्यक्तुमाशु वद हेतुम् ।
इत्याह स यत्सविधे तं राममहं० रथिम् ॥४७८॥

त्वन्निर्बन्धाद्रामे-पित्रा त्यक्ते तवैव निरयस्स्यात्।
इत्याह स यत्सविधे तं राममहं भजामि दाशरथिम् ॥४७९॥
वयमप्यनुयास्यामो-राममरण्यं प्रयातु मुक्तम्।
इत्याह स यत्सविधे तं राममहं० रथिम् ॥४८०॥
एकाकी भरतोऽपि-त्वत्सहवासात्प्रशास्तु साकेतम्।
इत्याह स यत्सविधे तं राममहं० रथिम् ॥४८१॥
वदतीत्थं सिद्धार्थे-तातं प्रोवाच शास्त्रसारज्ञः।
यः कालोचित वचनं तं राममहं० रथिम् ॥४८२॥
राज्यं परिपालयत-स्सेनाभङ्गं भणन्ति नीतिज्ञाः।
इत्यवदद्यस्तातं तं राममहं० रथिम् ॥४८३॥
तातकिमर्थं सैन्यं-वन्यफलैरेव जीवतो ममवै।
इत्यवदद्यस्तातं तं राममहं० रथिम् ॥४८४॥
दत्वोत्तममत्तगजं कक्ष्यामिच्छेत्कथंनुवा सम्राट्।
इत्यवदद्यस्तातं तं राममहं० रथिम् ॥४८५॥
कालोचितवेषोऽहं-धृत्वा चीराणि काननेवस्ता।
इत्यवदद्यस्तातं तं राममहं० रथिम् ॥४८६॥
धृत्वा खनित्रपिटके-काननमहमद्य गन्तुमिच्छामि।
इत्यवदद्यस्तातं तं राममहं० रथिम् ॥४८७॥
इत्थं निगदति रामे-चीराणि ददौ तदैव कैकेयी।
निर्लज्जा यस्मै परं तं राममहं० रथिम् ॥४८८॥
एकैकस्य द्वेद्वे-गुणितं कृत्वा तथैव दत्वा सा।
परिधत्स्वेत्यवदद्यं तं राममहं० रथिम् ॥४८९॥
पूर्वधृतं वस्त्रं योऽवक्षिप्याथो अवस्त नववल्कम्।
सभ्यानां दुःखकृतं तं राममहं० रथिम् ॥४९०॥

आदाय वल्कमदधान्नूनं सौमित्रिरप्यधो भागे ।
बाष्पमुखो यत्सविधे तं राममहं भजामि दाशरथिम् ॥४९१॥
आदाय तदा सीता-वल्कं यं वीक्ष्य वाचमूचे सा ।
दधते मुनयः कथमिति तं राममहं० रथिम् ॥४९२॥
वल्कलधरणाशक्तां-दृष्ट्वा सीतां स्वयं तदादाय ।
वस्त्रोपरि योऽबध्नात्तं राममहं० रथिम् ॥४९३॥
अन्तः पुरनार्यो यं सीता सहितं प्रयातु मुद्युक्तम् ।
दृष्ट्वोचुर्वाक्यमिदं तं राममहं० रथिम् ॥४९४॥
पितृवाक्यपालनार्थं लक्ष्मणसहितस्त्वमेव याहि वनम् ।
इत्यवदन्यं नार्यस्तं राममहं भजामि दाशरथिम् ॥४९६॥
जनकसुता सीतेयं तिष्ठत्वत्रैव काननं नेयात् ।
इत्यवदन्यंनार्यस्तं० दाशरथिम् ॥४९७॥
पुत्रत्वं याच्ञाग्न-स्सफलय सीतां विहाय गच्छ वनम् ।
इत्यवदन्यं नार्यस्तं० दाशरथिम् ॥४९८॥
एकस्यैव वने तव वासस्त्वनयाहृतोऽस्ति वर एकः ।
इत्यवदन्यं नार्यस्तं राममहं० रथिम् ॥४९९॥
श्रुत्वाप्यासां वचनं वल्कं सीताकृटावभान्सीद्यः ।
कैकेयीहृत्तुष्ट्यै तं राममहं० रथिम् ॥५००॥
वल्कलधरण तस्या वीक्ष्यगुरुर्गाङ्गनिवार्य कैकयीम् ।
यत्पुरतोगिरमूचे तं राममहं० रथिम् ॥५०१॥
* केकयभूपतिपुत्र्यह-मित्यभिमानं त्यजाद्य मातृगुणे ।
इत्याहसयत्पुरतस्तं राममहं० रथिम् ॥५०२॥
कारणगुण संक्रमणं कार्येऽपीति त्यजाशु नियमं त्वं ।
इत्याह सयत्पुरतस्तं राममहं० रथिम् ५०३॥

किञ्चेदं ममसत्यं-वचनं श्रुणु निगमसंमतं त्वमपि।
इत्याह सयत्पुरतस्तं राममहं भजामि दाशरथिम् ॥५०४॥
आत्मारामोदारा इति सीतां राममेव विद्धित्वम्।
इत्याहसयत्पुरतस्त राममहं० रथिम् ॥५०५॥
राज्यमिदं सीताया-स्सैवाद्यंद प्रशासितुं योग्या।
* इत्याहसयत्पुरतस्तमहं हृदि भावये मुदा रामम् ॥५०६॥
अनुयास्यति यदिसीता ह्यनुयास्यामो वयञ्च रामपदम्।
इत्याह सयत्पुरतस्तमहं हृदि० रामम् ॥५०७॥
भरतोप्यनुजसमेतो-ज्येष्ठ त्यक्त्वा वसेत्कथं राज्ये।
इत्याह सयत्पुरतस्तमहं हृदि० रामम् ॥५०८॥
जनहीने धनहीने त्वं वसराज्ये च मन्थरासहिता।
इत्याह सयत्पुरतस्तमहं हृदि० रामम् ॥५०९॥
वनमत्र रामवामा-त्साकेत भवतुनैवसावन्या।
इत्याह सयत्पुरतस्तमहं हृदि० रामम् ॥५१०॥
रामेण परिहृत्त्वा त्वद्ग्रामाच्चवमत्र नायोध्या।
इत्याह स यत्पुरतस्तमहं हृदि भावये मुदा रामम् ॥५११॥
कैकेयीमित्युक्त्वा वल्कलधरणं न्यवारयद्गुरुराट्।
यत्पत्न्यास्सीतायास्तमहं० रामम् ॥५१२॥
गुरुरवदत्कौसल्यां दत्ताद्भूषादुकूलवस्त्रादि।
अस्या इति यत्पुरतस्तमहं० रामम् ॥५१३॥
वल्कलमेव वमानां दृष्ट्वा सीतां जनास्तदाऽक्रोशन्।
बाष्पमुखायत्ससविधे तमहं० रामम् ॥५१४॥
तद्दुःखमसहमानो-राजा श्रद्धां परित्यजन्समुद्यु।
आक्रन्दद्यत्सविधे तमहं० रामम् ॥५१५॥

निश्वस्याथ स राजा कैकेयीं पार्श्ववर्तिनीं प्रोचे ।
सक्रोधं यत्सन्निधे तमहं हृदि भावये मुदा रामम् ॥५१६॥
* वनवासयोग्यदेहा-नेयं सीतेति मां गुरुर्वदति ।
इति यस्य पितोचे तां तमहं० रामम् ॥५१७॥
चीरं विसृज्य सीता-राज्यैवावसतु कानने वापि ।
इति यस्य पितो चे तां तमहं० रामम् ॥५१८॥
सीतावनवासेऽहं-पृष्टश्चण्डचा त्वया न पापिष्ठे ।
इति यस्य पितोचे तां तमहं० रामम् ॥५१९॥
कुलपांसिनि पर्याप्तं-रामस्यैकस्य विपिनसञ्चरणम् ।
इति यस्य पितोचेतां तमहं० रामम् ॥५२०॥
रामाभिषेचनमिदं-त्वत्तोषार्थं मयाप्रतिज्ञातम् ।
इति यस्य पितोचे तां तमहं० रामम् ॥५२१॥
त्वत्प्रेरणया रामं वाचमवोचं हि राज्यविषयेऽहम् ।
इति यस्य पितोचे तां तमहं० रामम् ॥५२२॥
इत्थं बहुधा विलप-न्पारं चशुचोऽद्यनाप्नुवन्राजा ।
अपतद्यत्सन्निधे भुवि तमहं० रामम् ॥५२३॥
अथ भूपस्ताच्चिरमं-संपश्यन्नक्तुमेव मारभत ।
योमातृहितां वाणीं तमहं० रामम् ॥५२४॥
* कौसल्या मममाता-भवता रक्ष्या सदापि धर्मज्ञ ।
इति यस्तातमभाणीत्तमहं० रामम् ॥५२५॥
राज्यासक्तो भ०तो मन्मातरमेत्य किं वचो वक्ता ।
इति यस्तातमभाणीत्तमहं हृदि भावये मुदा रामम् ॥५२६॥
त्वत्सामीप्यवशाद्वा मन्माता शोककर्शिता माभूत् ।
इति यस्तातमभाणीत्तमहं० रामम् ॥५२७॥

इत्थं पुत्रस्य वच-श्श्रुत्वा मुनिवेषधारिणो राजा ।
न शशाक द्रष्टुं यं तमहं हृदि भावये मुदा रामम् ॥५२८॥
संज्ञां प्राप्य स राजा विललापैवं वचोब्रुवन्दुःखात् ।
बाष्पान्धो यत्पुरतस्तमहं० रामम् ॥५२९॥
कतिवा मया मनुष्या वत्सविहीनाश्च हिंसिताः पूर्वम् ।
इत्यरुदद्यत्सविधे तमहं० रामम् ॥५३०॥
हसता च कृतं पूर्वं-रुदता तेनैव पापमनुभाव्यम् ।
इत्यरुदद्यत्सविधे तमहं० रामम् ॥५३१॥
इत्थं रुदन्सुमन्त्रं प्रोवाचे मां गिरश्च भूमिपतिः ।
यं प्रत्यानय रथमिति तमहं० रामम् ॥५३२॥
उत्तमहयसंयुक्तं-रथमारुह्य प्रयातु वत्सो मे ।
इत्याह स यत्पुरतस्तमहं० रामम् ॥५३३॥
लोकेऽत्र पुत्रवन्तो-दृष्ट्वा मां ते हसन्तु निर्भीकाः ।
इत्यरुदद्यत्पुरतस्तमहं० रामम् ॥५३४॥
सज्जं रथमथ दृष्ट्वा-भाण्डारिकमाह भूपतिर्वाक्यम् ।
कृशगात्रो यत्पुरतस्तमहं० रामम् ॥५३५॥
संख्यां कृत्वा शरदां-भूषणवासांसि देहि वैदेह्यै ।
इत्याह स यत्पुरतस्तमहं० रामम् ॥५३६॥
तानि गृहीत्वा सीता-स्वांगानि च तैरलश्चकार तदा ।
यत्पुरतश्शुभगात्री तमहं० रामम् ॥५३७॥
दृष्ट्वा तां कौसल्या-मूर्धन्याघ्राय वाक्यमिदमूचे ।
यत्पुरतश्शास्त्रोक्तं तमहं० रामम् ॥५३८॥
* अल्पांपद्यपि रमणं-दुष्टानार्यस्त्यजन्त्यविश्वासात् ।
इति यत्पुरतस्सोचे तमहं० रामम् ॥५३९॥

त्वं जानकि भर्तारं-सूर्यं छायेव चानुसञ्चरसि ।
इति यत्पुरतस्सोचे तमहं हृदि भावये मुदा रामम् ॥५४०॥
विद्या कुलजातिजना-न्नोपश्यन्ति स्वभावतो नार्यः ।
इति यत्पुरतस्सोचे तमहं हृदि भावये सदा रामम् ॥५४१॥
दुष्टं हृदयं स्त्रीणां-पुण्यं पापञ्च वेत्ति नो समये ।
इति यत्पुरतस्सोचे तमहं० रामम् ॥५४२॥
साध्व्यस्स्वभावतोवै-भर्तारं दैवमेव पश्यन्ति ।
इति यत्पुरतस्सोचे तमहं० रामम् ॥५४३॥
श्वश्रूक्तं वचनमिदं-श्रुत्वा बद्धाञ्जलिस्तु वैदेही ।
ऊचे गां यत्पुरतस्सोचे तमहं० रामम् ॥५४४॥
आर्या प्रोक्तं वचनं मामेष्यहमेकदाऽपि नोत्यक्ता ।
इति सोचे यत्पुरतस्तमहं० रामम् ॥५४५॥
उपदिष्टं यन्मात्रा तदिदं भूयस्त्वयापि सन्दिष्टम् ।
इति सोचे यत्पुरतस्तमहं० रामम् ॥५४६॥
भर्तुर्नान्यं दैवं मन्ये स्वजन्महश्च कल्याणम् ।
इति सोचे यत्पुरतस्तमहं० रामम् ॥५४७॥
अनुशास्त्यार्या मां न कुर्वेऽहं सदापि त्वनवासं ।
इति सोचे यत्पुरतस्तमहं० रामम् ॥५४८॥
नाहं धर्माच्चलितुं-स्वप्नेऽप्यथवापि सङ्कटेपीह ।
इति सोचे यत्पुरतस्तमहं० रामम् ॥५४९॥
पुत्रशतमातृभावं प्राप्तापि स्त्री प्रयुजयेद्दूषणम् ।
इति सोचे यत्पुरतस्तमहं० रामम् ॥५५०॥
पितरौ मितदातारा-वमितं रमणो ददाति भार्यायाः ।
इति सोचे यत्पुरतस्तमहं० रामम् ॥५५१॥

* इत्थं सीतावचनं-श्रुत्वार्या हर्षशोकजं बाष्पम् ।
यत्पुरतस्सामुमुचे तं सीतानाथमाश्रये रामम् ॥५५२॥
साञ्जलिरथकौसल्यां माभूत्ते दुःखलेशगंधोपि ।
इत्यवदद्योधीरस्तं सीता० रामम् ॥५५३॥
मातॄणां त्रिशतमथा-प्यर्धशतं चाप्यवेक्ष्य गिरमूचे ।
धर्म्ये पथि स्थितो यस्तं सीता० रामम् ॥५५४॥
सकलजनदुःखहन्तु-स्तस्य कथं दुःखसंभवो लोके ।
इत्यूचुर्यं वृद्धास्तं सीता० रामम् ॥५५५॥
सीता सौमित्रियुतो राजानं योऽभिवादयां चक्रे ।
आर्यां तथैव जननीं तं सीता० रामम् ॥५५६॥
अथ सीतानुजसहितो-लक्ष्मणमातुस्तथैव योभक्त्या ।
पदयोः प्रणतिं चक्रे तं सीतानाथ माश्रये रामम् ॥५५७॥
हितकामाऽथ सुमित्रा-पुत्रमुपाघ्राय मूर्ध्न्युपादिशत ।
दुःखार्ता यत्सविधे तं सीता० रामम् ॥५५८॥
विद्धि त्वं मां सीतां दशरथमेवाथ-राममपि पश्य ।
इत्यवदद्यत्सविधे तं सीता० रामम् ॥५५९॥
मत्वाऽयोध्यामटवीं-गच्छ त्वं रक्षितुं वने पूज्यौ ।
इति सोचे यत्सविधे तं सीता० रामम् ॥५६०॥
साञ्जलिरथ च सुमन्त्रो-मातलिरिव वासवं वचोऽवोचत ।
यं धीमान्समयज्ञस्तं सीता० रामम् ॥५६१॥
आरोहराजपुत्र-त्वं रथमद्यानुजेन वैदेह्या ।
इत्यवदद्यं सूतस्तं सीता० रामम् ॥५६२॥
यत्राभिप्रायस्ते-विपिने वस्तुञ्च तद्वदस्थानम् ।
इत्यवदद्यं सूतस्तं सीता० रामम् ॥५६३॥

वर्षाण्येव चतुर्दश-वस्तव्यानि त्वया व्रतस्थेन ।
इत्यवदद्यं सूतस्तं सीतानाथ माश्रये रामम् ॥५६४॥
रथमारूढं सीता-लक्ष्मणसहितं यमादराद्दृष्ट्वा ।
सूतोऽचोदयदश्वांस्तं सीता० रामम् ॥५६५॥
अथ यं प्रयान्तमस्मा-स्त्यक्तुं हेतुं वदाद्य राम त्वम् ।
इत्यनुजग्मुर्लोकास्तं सीता० रामम् ॥५६६॥
तन्महद्दर्शनकामा-स्तत्सेवा प्राप्तजन्मसाफल्याः ।
अनुजग्मुर्यं लोकास्तं सीता० रामम् ॥५६७॥
आहारे च विहारे-व्यवहारे सस्मरुश्च ये सुहृदः ।
सुहृदं यं कामदुघं तं० रामम् ॥५६८॥
लब्ध्वाऽपि शिशुं प्रथमं-जननीकिञ्चिच्च नाभ्यनन्ददहो ।
स्मृत्वा यं प्रथमसुतं तं० रामम् ॥५६९॥
प्रव्रजिते यस्मिंस्तन्नगरं विचचाल वृक्षपशुसहितं ।
स्त्रीबालवृद्धसहितं तं० रामम् ॥५७०॥
सीतां न चचाल रुप चंडकरो वै तदाऽत्यजत्सुषमाम् ।
यस्मिन्प्रव्रजिते सति तं सीता० रामम् ॥५७१॥
प्रव्रजतो यस्य रथं-विषयीकुर्वंश्च चक्षुषो राजा ।
नोसञ्जहार दृष्टी तं सीता० रामम् ॥५७२॥
दक्षिणपार्श्वं भर्तुः-कौसल्याऽश्रित्य चान्वगान्मार्गे ।
यस्मिन्प्रव्रजिते सति तं० रामम् ॥५७३॥
कैकेयी वामभुजं-चाऽश्रित्य जहर्ष मानसे स्वीये ।
यस्मिन्प्रव्रजिते सति तं सीता० रामम् ॥५७४॥
मास्प्राक्षीर्ममगात्रं-कैकेयि त्वं सुदूरमपगच्छ ।
इत्यूचे यस्य पिता तं सीता० रामम् ॥५७५॥

पापिष्ठे त्वां द्रष्टुं नेच्छाम्यद्यप्रभृत्यहं सत्यम्।
इत्यूचे यस्य पिता तं सीतानाथ माश्रये रामम्॥५७६॥
राज्यं प्राप्तो भरतो नैवाप्तं माकरोतु तव पुत्रः।
इत्यूचे यस्य पिता तं सीता० रामम्॥५७७॥
रामोऽश्मानं कूर्पर-मुपधाय वने शयिष्यते हि कथम्।
इत्यूचे यस्य पिता तं सीता० रामम्॥५७८॥
त्वत्प्रीत्यर्थं चाहं कौसल्यान्नोकदापि सुष्ठ्ववदम्।
इत्यूचे यस्य पिता तं सीता० रामम्॥५७९॥
जनकसुतयापि सत्या-नाहं स्नुषया प्रपोषितोस्मि गृहे।
इत्यभणद्यस्यपिता तं सीता० रामम्॥५८०॥
इत्थं त्वयि विश्वासो वनवासायैव तस्य कृत आसीत्।
इत्यभणद्यस्यपिता तं सीता० रामम्॥५८१॥
भव कैकेयि स कामा-भूत्वा विधवा च राज्य एव वस।
इत्यवदद्यस्य पिता तं सीता० रामम्॥५८२॥
इत्थं प्रलपन्राजा-दुःखितजनसङ्कदूषितोऽविशत्।
यत्त्यक्तं शून्यगृहं तं सीता० रामम्॥५८३॥
कौसल्यागृहमध्यं नयत क्षिप्रञ्च मां जना यूयम्।
इत्यभणद्यस्य पिता तं सीता० रामम्॥५८४॥
श्रुत्वा राज्ञोवचनं द्वाराध्यक्षास्तथैव तं निन्युः।
यन्मातुर्गृहमध्यं तं सीता० रामम्॥५८५॥
सीतारामविहीनं दृष्ट्वा गेहं कथन्नु जीवेयम्।
इति यस्य पिताऽरोदीत्तं सीता० रामम्॥५८६॥
जीविष्यन्ति महान्तो द्रष्टुं रामं वनात्समायान्तम्।
इति यस्य पिता रोदीत्तं सीता० रामम्॥५८७॥

अथ कालरात्रि सदृशे-कौसल्यां रात्रिमध्य इदमूचे ।
सन्नगळो यस्य पिता तं सीतानाथ माश्रये रामम् ॥५८८॥
संस्पृश मां कौसल्ये-न त्वां पश्यामि नष्टदृष्टिरहम् ।
इत्यभणद्यस्यपिता तं सीता० रामम् ॥५८९॥
पुत्रं विचिन्तयन्तं-पतिपितरं सा निरीक्ष्य कौसल्या ।
विललापोच्चैरित्थं तं सीता० रामम् ॥५९०॥
रामो भैक्षं नगरे-भुञ्जानो वसतु तत्र मम तृप्तिः ।
इत्यरुदद्यन्माता तं सीता० रामम् ॥५९१॥
भ्रात्रायुतं सभार्यं-पश्येयं काननात्कदाऽऽयान्तम् ।
इत्यरुदद्यन्माता तं सीता० रामम् ॥५९२॥
राजपथे मत्पुत्रं-लाजैर्नार्यः कदाकरीष्यन्ति ।
इत्यरुदद्यन्माता तं सीता० रामम् ॥५९३॥
इत्थं विलपन्तीन्तां-लक्ष्मणमाता वचो बभाण तदा ।
यत्प्रसुवं दुःखार्तां तं सीता० रामम् ॥५९४॥
आर्येऽलं रुदितेन त्वत्पुत्रः पितरमेव पावयति ।
इति यत्प्रसुवं सोचे तं सीता० रामम् ॥५९५॥
जहि शोकं त्यज मोहं-सत्यं वचनंश्रृणुत्त्वमार्ये मे ।
इति यत्प्रसुवं सोचे० रामम् ॥५९६॥
लक्ष्मणमातुर्वचनं-श्रुत्वाथार्यामुमोच शुङ्मोहौ ।
कांक्षन्ती यस्य शुभं तं सीता० रामम् ॥५९७॥
अथ यं प्रयान्तमारा-दनुजग्मुर्नगरवासिनोऽपि जनाः ।
त्यक्त्वा धनगृहदारांस्तं० रामम् ॥५९८॥
अनुयायिवन्धुवर्गं दृष्ट्वाऽथो यो निवर्तनेच्छुरपि ।
मृदुलां वाचमवोचत सीता० रामम् ॥५९९॥

स्नेहो मयि यावान्व-स्तावान्भरते निवेश्यतां राज्ञि ।
इत्याह जनान्योगान्तं सीतानाथ माश्रये रामम् ॥६००॥
धर्मज्ञस्सतु भरतो-युष्मान्पातासुतानिव प्रेम्णा ।
इत्याह जनान्योगांस्तं सीताजानि माश्रये रामम् ॥६०१॥
* प्राप्ते मयि वनवासं-राज्ञो दुःखस्य वारणं कुरुत ।
इत्याह जनान्योगां तं रामं मनसि भावये सततम् ॥६०२॥
उक्त्वैवं गच्छन्तं-यं प्रोचुः क्वथितमानसाः पुरतः ।
भूदेवा राजपथे तं रामं० सततम् ॥६०३॥
त्वामेव ब्रह्मण्यं-ब्राह्मण्यं सर्वमेतदनुयाति ।
इत्यवदन्यं मनुजास्तं रामं मनसि भावये सततम् ॥६०४॥
त्वां वाजपेयलब्ध-छत्रा ह्यनुयान्ति पृष्टतः पश्य ।
इत्यवदन्यं मनुजास्तं रामं मनसि भावये सततम् ॥६०५॥
छत्रेण विरहितं त्वां-छत्रैश्छायां वयं करिष्यामः ।
इत्यवदन्यं मनुजास्तं रामं० सततम् ॥६०६॥
स्कन्धाधिरूढपावक-भाण्डास्त्वनुयान्ति पश्य विप्रांस्त्वम् ।
इत्यवदन्यं मनुजास्तं रामं० सततम् ॥६०७॥
भक्तेषु त्वं भक्तिं दर्शय रामाद्य याचितोस्मासु ।
इत्यवदन्यन्मनुजास्तं रामं० सततम् ॥६०८॥
त्रिक्रोशतां जनानां-ददृशे तमसा नदी तिरस्करिणी ।
येनागाधजलाद्राक्तं० सततम् ॥६०९॥
तत्र सुमन्त्रो रथ्यान्श्रान्तानमुचद्रथाच्च यस्य गिरा ।
स्वाश्रितपोषणधिषणं तं रामं० सततम् ॥६१०॥
संपरिवर्त्याथ हया-न्यत्सूतोऽचारयच्च घासार्थम् ।
मत्पोषणकृतधिषणं तं रामम्० सततम् ॥६११॥

उद्वीक्ष्य जानकीमथ सौमित्रिं यो बभाण रात्रिमिमाम् ।
अत्र वसामो वयमिति तं रामं मनसि भावये सततम् ॥६१२॥
धर्मज्ञः खलु भरतो मत्पितरौ सौम्यवाग्भिरुपचरिता ।
इति लक्ष्मणमवदद्यस्तं० सततम् ॥६१३॥
सत्यपि वन्ये विविधे-वत्स्यामि निशां कृतोदकाहारः ।
इति लक्ष्मणमवदद्यस्तं० सततम् ॥६१४॥
सीतारक्षणविषये-त्वं शूरो मे सहायभूतोऽसि ।
इति लक्ष्मणमवदद्यस्तं० सततम् ॥६१५॥
अश्वानां रक्षायै-सूत त्वं जागरूक एव वस ।
इति योभाणीत्सूतं तं रामं० सततम् ॥६१६॥
रथ्यान्प्रभूतयवसा-नकरोत्सूर्येऽस्तपर्वतं याते ।
यस्य गिरा सुमन्त्रस्तं रामं० सततम् ॥६१७॥
सन्ध्यामुपास्य रात्रौ-पल्लवशयने स्वभार्यया सुप्तम् ।
यमपश्यत्सौमित्रिस्तं रामं० सततम् ॥६१८॥
अथ सूतं सौमित्रि-र्यस्य गुणानकथयच्च सौहार्दात् ।
आसन्नाश्वोदयमपि तं रामं० सततम् ॥६१९॥
स्वानुगतैर्मनुजैर्य-स्तमसातीरेऽवसच्च तरुमूले ।
लक्ष्मणसारथियुक्तस्तं रामं० सततम् ॥६२०॥
एताननुगतमनुजां-स्त्यक्त्वा वयमद्य काननं याम ।
इति लक्ष्मणमूचे यस्तं० सततम् ॥६२१॥
अथैतान्संसुप्तां-स्त्यक्तुं कालोऽयमुचित एवास्ते ।
इति लक्ष्मणमूचे यस्तं रामं मनसि भावये सततम् ॥६२२॥
यस्य गिरं श्रुत्वाथो-सौमित्रिस्सूतमाह गां तोषात् ।
आनय शीघ्रं रथमिति तं रामं० सततम् ॥६२३॥

सीतालक्ष्मणसहित-स्त्वं रथमारोह राजपुत्रद्राक् ।
इत्यवदद्यं सूतस्तं रामं मनसि भावये सततम् ॥६२४॥
आरुह्याथ रथं य स्सानुजसीतस्सुमन्त्रनिर्दिष्टम् ।
तमसामतरद्रात्रौ तं रामं० सततम् ॥६२५॥
अनुगामिनो जनान्यो-वञ्चनया त्यक्तुमैच्छ गिरमूचे ।
सूतं प्रयाणकाले तं रामं० सततम् ॥६२६॥
पौराणां मोहार्थं-नीत्वोत्तरतस्ततश्च वनमार्गे ।
नय रथमित्यवदद्यस्तं रामं० सततम् ॥६२७॥
यस्य गिरं श्रुत्वाऽथो-सारथिवर्यस्तथा करोच्छीघ्रम् ।
परदुःखनाशनेच्छं तं रामं० सततम् ॥६२८॥
अथ कल्ये पौरास्ते-यमपश्यन्तो भृशञ्च दुःखार्ताः ।
मृगयाञ्चक्रुः पुरतस्तं रामं० सततम् ॥६२९॥
भक्तजनान्परिहृत्य-त्वरितं गन्तुं तवापि युक्तं किम् ।
इति यं स्मृत्वा रुरुदुस्तं० सततम् ॥६३०॥
यामो वयमिह निधनं-प्रस्थानं वा किमर्थममुत्राच्छा ।
इति यं स्मृत्वा रुरुदुस्तं० सततम् ॥६३१॥
अथवा प्रज्वाल्य चितां प्रविशामोऽग्निं वयञ्च सर्वेद्य ।
इति यं स्मृत्वा रुरुदुस्तं० सततम् ॥६३२॥
शून्यां रामेण पुरीं पश्याम कथं वयञ्च सकुटुंबाः ।
इति यं स्मृत्वा रुरुदुस्तं० सततम् ॥६३३॥
इत्थं बहुधा वाचो विसृजन्तस्ते रुदंस्तदापौराः ।
स्मृत्वा यं सीतेशं तं सततम् ॥६३४॥
मार्गस्यादर्शनत-स्तेऽयोध्यामेव यत्परित्यक्ताम् ।
दृष्ट्वा रुरुदुरनाथास्तं सततम् ॥६३५॥

त्यक्त्वा यं गेहगता-न्भर्तृनुद्वीक्ष्य योषितोरुष्टाः ।
सल्लाँपमपि न चक्रु-स्तं रामं मनसि भावये सततम् ॥६३६॥
रात्रावेव ग्रामा न्सपश्यन्यस्सुदूरमपगम्य ।
दशरथनिन्दामशृणोत्तं० सततम् ॥६३७॥
स्त्रीमोहाज्ज्येष्ठसुत-वनवासार्थं च को वदेन्मूढः ।
इति निन्दामश्रुणोद्यस्तं रामं मनसि भावये सततम् ॥६३८॥
पितृनिन्दावचनं य-स्तत्रस्थजनैर्निरङ्कुशं प्रोक्तम् ।
शृण्वन्ययौस्वदेशात्तं रामं० सततम् ॥६३९॥
अथ वेदश्रुतिनाम्नी-मुत्तीर्य नदीमगस्त्यमुनिचरिताम् ।
ककुभं तामविशद्यस्तं० सततम् ॥६४०॥
अतरदथ गोमतीं-यस्स्यन्दिकया साकमेव गुरुनद्या ।
हंसकुलवसतिरम्यां तं० सततम् ॥६४१॥
पूर्वं मनुनादत्तां-नगरीं चेक्ष्वाकवे स्फुरद्रूपाम् ।
सीतामदर्शयद्यस्तं रामं० सततम् ॥६४२॥
उद्यानशोभितान्यः-कोसलदेशानतीत्य शिवतोयाम् ।
गंगां ददर्श मार्गे तं रामं० सततम् ॥६४३॥
शङ्करजटाकटाह-भ्रष्टां पापौघनाशिनीं गङ्गाम् ।
दृष्ट्वा यस्तोषमगात्तं रामं० सततम् ॥६४४॥
अथ शृङ्गिबेरनामक-पुरमाप्त्वोचे सुमन्त्रमपि योगात् ।
अत्र वसामो वयमिति तं० सततम् ॥६४५॥
इङ्गुद्यगमूले यो रात्रौ स्थित्वा प्रभातवेळायाम् ।
यामो वयमित्यवदत्तं सततम् ॥६४६॥
इत्युक्त्वा रथमध्यादवरुह्याथो जगाम तरुमूलम् ।
योऽनुजसीतासहितस्तं रामं० सततम् ॥६४७॥

सूतोऽप्यवमुच्य रथा-तुरगान्परिगृह्य यस्य निकटमगात् ।
शुश्रूषां कर्तुमनास्तं रामं मनसि भावये सततम् ॥६४८॥
तत्र गुहो नैषाद-साकेतपतिं यमागतं श्रुत्वा ।
तोषादाप समीपं तं रामं० सततम् ॥६४९॥
योऽनुजसहितो दृष्ट्वा-दूरादायान्तमेव सन्तोषात् ।
पर्यष्वजतसखायं तं रामं० सततम् ॥६५०॥
कः प्राप्स्यत्यतिथिं त्वां-जन्मान्तरभाग्यतोहमद्राक्षम् ।
अत्र वसेत्यवदद्यस्तं तं रामं० सततम् ॥६५१॥
* अत्रायोध्यासदृशी-पुरियमोवास्तु ते सखे राम ।
इत्यवदत्सगुहोयं तं कौसल्यासुतं भजे रामम् ॥६५२॥
प्रेष्यस्ते वर्तेऽहं-भवराजा त्वं निषादवंश्यानाम्।
इत्यवदत्स गुहो यं तं कौसल्यासुतं भजे रामम् ॥६५३॥
अत्रैव तातवाक्यं-सत्यं कर्तुं त्वमेव वस राज्ये ।
इत्यवदत्स गुहो यं तं० रामम् ॥६५४॥
कैकेयीतृप्तिभिया-द्भरतोऽयोध्यां च पालयतु तोषात् ।
इत्यवदत्स गुहो यं तं० रामम् ॥६५५॥
गुहमेवं निगदन्तं स्नेहाद्योवाचमाह गंभीराम् ।
भक्ताधिव्याधिहरन्तं कौसल्यासुतं० रामम् ॥६५६॥
दिष्ट्या त्वां पश्याम्यह-मद्यत्वद्भाषितेन तुष्यामि ।
इति गुहमवदद्योगान्तं० रामम् ॥६५७॥
अपि तत्र राज्ये कुशलं वसतां त्वद्बन्धुमित्रसचिवानाम् ।
इति गुहमवदद्योगान्तं० रामम् ॥६५८॥
दातृत्वं मम योग्यं नैवान्यस्मात्प्रतिग्रहो योग्यः ।
इति गुहमवदद्योगान्तं० रामम् ॥६५९॥

वनवासव्रतयुक्तं-विद्धि त्वं तात वाक्यतोथैनम् ।
इति गुहमवदद्योगान्तं कौसल्यासुतं भजे रामम् ॥६६०॥
तातहयतृप्तिकरणा-त्तृप्तं मां विद्धि सेवनाच्च सखे ।
इति गुहमवदद्योगान्तं० रामम् ॥६६१॥
सायमुपास्य च सन्ध्यां-लक्ष्मणदत्तं सुशीतमेवांबु ।
भोज्यं यस्समकार्षीत्तं कौसल्यासुतं० रामम् ॥६६२॥
भूमावेवशयानं-सीतासहितं समेत्य सौमित्रिः ।
यत्पदशुद्धिं चक्रे तं कौसल्यासुतं० रामम् ॥६६३॥
तरुमूले गुहनिर्मित-शय्यां भजतो गुणांश्च यस्योचे ।
अनुजो गुह सूताभ्यां तं० रामम् ॥६६४॥
अथ कल्ये कृतसन्ध्य-स्सानुजसीतश्च नावमारोढुम् ।
यो यत्नमकार्षीद्द्राक्तं० रामम् ॥६६५॥
बद्धांजलिमथ सूतं-धर्मज्ञं यस्तदा बभाण गिरम् ।
भूपं याहि द्रागिति तं कौसल्यासुतं० रामम् ॥६६६॥
त्यक्त्वा रथमिह यामः-पद्भ्यामेवाटवीं च निर्भीकाः ।
इति यस्सूतमभाणीत्तं० रामम् ॥६६७॥
स च यस्य गिरं श्रुत्वा-कैकेयीपार्श्वगः कथं वर्ते ।
अहमित्यरुदत्साश्रुस्तं कौसल्यासुतं० रामम् ॥६६८॥
त्वां हित्वा मत्तातो-घटिकार्धं वा वसेत्कथं राज्ये ।
इत्याह सुमन्त्रं यस्तं कौसल्यासुतं० रामम् ॥६६९॥
कैकेयी प्रीत्यर्थं-यत्कर्तव्यं तदेव कुरु सम्यक् ।
इत्याह सुमन्त्रं यस्तं कौसल्यासुतं भजे रामम् ॥६७०॥
तातमदहुव्यसनं-ममहेतोर्ब्रूहि सूतवाक्यमिदम् ।
इत्याह सुमन्त्रं यस्तं कौसल्यासुतं० रामम् ॥६७१॥

सीतानुजसहितोऽहं-राज्यत्यागान्नशोकमापमिति ।
वद सूतेत्यवदद्यस्तं कौसल्यासुतं भजे रामम् ॥६७२॥
आनीतं भरतं त्वं-राज्ये कुरु भूपमेव शीघ्रमिति ।
वदसूतेत्यवदद्यस्तं कौसल्यासुतं० रामम् ॥६७३॥
मास्तु तव दुःखलेशः-काननवासान्ममेति मत्तातम् ।
वदसूतेत्यवदद्यस्तं० रामम् ॥६७४॥
कौसल्याञ्च सुमित्रां कैकेयीं त्वं पितुस्समावदरे ।
इत्याह सुमन्त्रं यस्तं कौसल्यासुतं० रामम् ॥६७५॥
ससुमित्रां कौसल्यां कैकेयीश्चापि वन्दनं ब्रूहि ।
इत्याह सुमन्त्रं यस्तं कौसल्यासुतं० रामम् ॥६७६॥
आरोग्यं मम सीता-लक्ष्मणसहितस्य मातरं ब्रूहि ।
इत्याह सुमन्त्रं यस्तं कौसल्यासुतं० रामम् ॥६७७॥
अपि चान्तःपुरमातृ-रस्मत्क्षेमं वदाद्य वनवसतौ ।
इत्याह सुमन्त्रं यस्तं कौसल्यासुतं० रामम् ॥६७८॥
इति सूतो येनोक्त-स्त्वच्छून्यरथः कथं तत्राम्बाः ।
द्रक्ष्याम्यह मित्यूचे तं कौसल्यासुतं० रामम् ॥६७९॥
कुत्रत्यक्तः पुत्रो-ब्रूहीत्युक्तः कथं प्रतिब्रूयाम् ।
इति सजगाद रुदन्यं तं कौसल्यासुतं० रामम् ॥६८०॥
नीतो मातुलगेहं-त्विति गीर्मे सूनृता कथं भूयात् ।
इति स जगाद रुदन्यन्तं कौसल्यासुतं० रामम् ॥६८१॥
अप्रियवचनं सत्यं ब्रूयां कथमेत्य मातरं तव भो ।
इति सजगाद रुदन्यन्तं कौसल्यासुतं० रामम् ॥६८२॥
मत्यागं यदि कुरुषे-सरथो वह्निं निशयमद्याहम् ।
इति सजगाद रुदन्यन्तं कौसल्यासुतं० रामम् ॥६८३॥

मूर्ध्ना तव शिश्रूषां कुर्वे कान्तारसीम्न्यहं राम ।
इति स जगाद रुदन्यन्तं कौसल्यासुतं भजे रामम् ॥६८४॥
भवत इमे परिचर्यां-कुर्वन्तु वनेऽपि ते हयावहनात् ।
इति स जगाद रुदन्यंन्तं कौसल्यासुतं भजे रामम् ॥६८५॥
त्वद्दतेनाहमयोध्यां-सुरलोकं वा नकामये राम ।
इति स जगाद रुदन्यंतं कौसल्यासुतं० रामम् ॥६८६॥
इत्थं रुदन्तमार्त-सूतं प्रोवाच याचमानं यः ।
कल्पद्रुं भक्तानां तं कौसल्यासुतं० रामम् ॥६८७॥
कैकेयीप्रीत्यर्थं-याहि त्वं शीघ्रमेव मन्निकटात् ।
इत्यभणद्यस्सूतं तं कौसल्यासुतं० रामम् ॥६८८॥
नोचेद्यवीयसी मे-जननी राजानमेव शङ्केत ।
इत्यभणद्यस्सूतं तं कौसल्यासुतं० रामम् ॥६८९॥
सूतमिति सान्त्वयित्वा प्रोवाच गुहं सहेतुकं वचनम् ।
योभक्तकामवर्षीतं कौसल्यासुतं० रामम् ॥६९०॥
नेदानीं गुहयोग्यो-वासो मे न त्वया नियमभाजः ।
इत्यभणद्यो मित्रं तं कौसल्यासुतं० रामम् ॥६९१॥
राज्ये त्वमप्रमत्तो-भव सच्छिद्रं हि राज्यमिह लोके ।
इत्यभणद्यो मित्रं तं कौसल्यासुतं भजे रामम् ॥६९२॥
क्षीरं नैय्यग्रोधं-द्रागानय मे जटाश्च धर्तुमिह ।
इत्यभणद्यो मित्रं तं० रामम् ॥६९३॥
तेनानीतं क्षीरं संगृह्याथानुजेन सहितो यः ।
जटिलत्वं यः प्रदधौ तं कौसल्यासुतं० रामम् ॥६९४॥
दृष्ट्वा गङ्गातीरे-नावं योऽलंकृतां वचः प्रोचे ।
अनुजं तामारोढुं तं कौसल्यासुतं० रामम् ॥६९५॥

सीतारोहतु नावं-पूर्वमथ त्वं विशात्र सौमित्रे ।
इति योऽनुजमवदद्दान्तं कौसल्यासुतं भजे रामम् ॥६९६॥
उक्त्वानुजमारोह नावं यो गुहकरेण निर्दिष्टाम् ।
शुभदान्मन्त्रान्प्रजपन्तं कौसल्यासुतं० रामम् ॥६९७॥
समनुज्ञाय सुमन्त्रं-सज्ञातिजनं गुहं च सन्तोष्य ।
योगाङ्गमध्यमापन्नं कौसल्यासुतं० रामम् ॥६९८॥
तत्र सतीयद्भार्या-साञ्जलिबन्धा प्रणम्य गंगान्ताम् ।
संप्रार्थ्याऽपत्तीरं तं कौसल्यासुतं० रामम् ॥६९९॥
गच्छ त्वमनुजपुरत-स्सीताप्यनुयातु रक्षणायाहम् ।
अनुयामीत्यवदद्यस्तं कौसल्यासुतं० रामम् ॥७००॥
निर्जनकान्तारपथे-वेत्स्यति सीताऽद्य दुःखबाहुल्यम् ।
इति लक्ष्मणमभणद्यस्तं कौसल्यासुतं० रामम् ॥७०१॥
* गच्छन्तं परपारे-यं दृष्ट्वाऽसह्यदुःखपरितप्तः ।
सूतोऽरोदीदुच्चैस्तं वनवासे रतं भजे रामम् ॥७०२॥
सानुजसीतो गंगां-तीर्त्वा वत्सान्समेत्य चतुरोयः ।
रुर्वादिमृगानवधीत्तं वनवासे रतं भजे रामम् ॥७०३॥
सायं बुभुक्षया य-स्सौमित्रिं प्राह वृक्षमूलगतः ।
स्थास्यामोत्रनिशीति च तं वनवासे० रामम् ॥७०४॥
राज्ञो दृष्ट्वा व्यसनं-कामं धर्मार्थहिंसकं वेद्मि ।
इति लक्ष्मणमभणद्यस्तं वनवासे० रामम् ॥७०५॥
शोचिष्यति च सुमित्रा-त्वां मामनुयान्तमुत्तमं स्मृत्वा ।
इति लक्ष्मणमभणद्यस्तं वनवासे० रामम् ॥७०६॥
कल्येनुजया हित्वं-साकेतं मातुरेव तुष्ट्यर्थम् ।
इति लक्ष्मणमभणद्यस्तं वनवासे० रामम् ॥७०७॥

कैकेयीतातं मे-नोहन्यात्सा यथातथा कुरुताम् ।
इति लक्ष्मणमभणद्यस्तं वनवासे रतं भज रामम् ॥७०८॥
एकोहं जानक्या-यामि वनं त्वं विशाद्य मातृगृहम् ।
इति लक्ष्मणमभणद्यस्तं वनवासे० रामम् ॥७०९॥
सीमन्तिनीह लोके-पुत्रं मत्सदृशमेव नोजनयेत् ।
इति लक्ष्मणमभणद्यस्तं० रामम् ॥७१०॥
इत्थं विलप्य करुणं विजनेऽरण्येऽश्रुपूर्णनयनोयः ।
सुत्रमभ्यविशद्रात्रौ तं० रामम् ॥७११॥
इत्थं विलपन्तं यं-त्वाश्वासयताऽनुजोऽपि तरुमूले ।
राजोपचारयोग्यं तं वनवासे० रामम् ॥७१२॥
अथ लक्ष्मणकृतशय्यां-भार्यासहितो विवेशतरुनिकटे ।
भ्रातृसहितो यस्तं वनवासे० रामम् ॥७१३॥
अथ यमुनासुरनद्योस्ससन्धिं प्रापद्वनान्तमार्गेण ।
योऽनुजसीतायुक्तस्तं वनवासे० रामम् ॥७१४॥
तत्र भरद्वाजमुने-राश्रममापद्दिवाकरेऽस्तमिते ।
तच्छिष्यैरनुयान्यस्तं वनवासे० रामम् ॥७१५॥
दशरथपुत्रावावां-जनकसुतेयं ममैव पत्नीति ।
अवदद्वाचमृषिं यस्तं० रामम् ॥७१६॥
सत्यगिरं मत्पितरं कर्तुं वनवासमागतोस्मीति ।
अवदद्वाचमृषिं यस्तं० रामम् ॥७१७॥
इत्युक्त्वा यस्सानुज-सीतः प्रणिपत्य तं भरद्वाजम् ।
तद्दत्तासनमभजत्तं वनवासे० रामम् ॥७१८॥
यस्मै प्रददौ स मुनि-स्तोषादर्घ्यादिकं वितीर्य तदा ।
योग्यं वासस्थलमपि तं वनवासे० रामम् ॥७१९॥

सुखमास्वात्रेत्युक्त-स्तमृषिं वाक्यं बभाण यो विनयात् ।
धीमान्विचिन्त्य मनसा तं वनवासे रतं भज रामम् ॥७२०॥
पत्तनसन्निधिजस्त्वं द्रष्टुमामेत्य बान्धवा हिंस्युः ।
इति तं प्रत्यवदद्य स्तं वनवासे० रामम् ॥७२१॥
तस्मादितोऽपि दूरे-निर्जनविपिने ममास्तु वसति धरा ।
इति तं प्रत्यवदद्यस्तं वन० रामम् ॥७२२॥
अस्ति दशक्रोशेस्मा-द्देशाद्रम्यो निवासयोग्योऽद्रिः ।
इति यं प्राह मुनिर्गां० रामम् ॥७२३॥
तस्मिंश्च चित्रकूटे बहवस्तपसा दिवं समारुक्षन् ।
इति यं प्राह मुनिर्गां० रामम् ॥७२४॥
अत्रैव सह मया त्व-वस वा तस्मिन्गिरौ विविक्तवने ।
इति यं प्राह मुनिर्गां० रामम् ॥७२५॥
ऋषिगिरमथ यश्श्रुत्वा-रात्रिन्नीत्वा प्रणम्य त कल्ये ।
तद्वाग्विदितपथोऽभूत्तं वन० रामम् ॥७२६॥
तद्विहिताशीस्तुष्टः-पश्चान्मुखतःप्रविश्य कालिन्दीम् ।
अतरद्योंशुमतीमथ तं वन० रामम् ॥७२७॥
न्यग्रोधं बहुशाखं-दृष्ट्वाऽथक्रोशमागमेत्य वनम् ।
नीलमपश्यद्योद्राक्तं वन० रामम् ॥७२८॥
ये ये पुष्पफले सा-सीतेच्छति ते प्रदातुमुचितस्त्वं ।
इति लक्ष्मणमभणद्यस्तं० रामम् ॥७२९॥
अथ नीलमतीत्य वनं-योऽनुजसहितो बहून्मृगान्हत्वा ।
तत्र निवासं चक्रे तं वन० रामम् ॥७३०॥
नीत्वा तत्र निशान्तां-कल्ये यः प्राप चित्रकूटगिरिम् ।
सीतानुज संयुक्तस्तं वन० रामम् ॥७३१॥

रम्योऽयं गिरिवर्यो-वासायास्माकमुचितफलमूलः ।
इति भार्यामभणद्यस्तं वनवासे रतं भजे रामम् ॥७३२॥
तत्र गिरौ वाल्मीकिं-सानुजसीतोऽभ्यवादयच्चान्यान् ।
यः पूज्यान्मुनिवर्यांस्तं वन० रामम् ॥७३३॥
यं सीतानुजसहितं-मुनयस्सर्वे प्रपूज्य वच ऊचुः ।
कुर्वत्रैवोटजमिति तं वन० रामम् ॥७३४॥
तेषां श्रुत्वा वचनं-लक्ष्मणमूचे गिरश्च यस्तुष्टः ।
वसति स्थाननिमित्तां तं वन० रामम् । ७३५॥
कुर्वावसथं लक्ष्मण-वासो मे रोचतेऽत्र गिरिवप्रे ।
इति योऽनुजमवदद्द्रां तं वन० रामम् ॥७३६॥
येनोक्तस्सौमित्रिर्वृक्षैर्वंशैर्दृढैश्च विस्तीर्णाम् । ॥७३७॥
अकरोत्पर्णकुटीं द्राक्तं वनवासे रतं भजे रामम् ॥७३८॥
स्वानुजकृतपर्णकुटीं सीतासहितो ददर्श यस्तोषात् ।
अतिशैत्यौष्ण्यसहान्तां तं वनवासे० रामम् ॥७३९॥
ऐणेयं पलमाहर शालां यक्ष्यामहे वयं शीघ्रम् ।
इति योऽनुजमाहतदा तं वनवासे० रामम् ॥७४०॥
कार्याच वास्तुशान्ति-श्चिरजीविभिरत्र वसति मिच्छद्भिः ।
इति योऽनुजमाह तदा तं वनवासे० रामम् ॥७४१॥
लक्ष्मणपक्वं मांसं-निष्टप्तं प्रेक्ष्य रिक्तरक्तांशम् ।
यो मन्त्रपूर्वमीजे तं वनवासे० रामम् ॥७४२॥
देवान्पितॄनथेष्ट्वा तुष्टः प्रविवेश यो गृहं शुद्धम् ।
लक्ष्मणसीतासहितस्तं वनवासे० रामम् ॥७४३॥
अथ तस्मिन्नुटजे यो-राज्यभ्रंशात्तदुःखरहितस्सन् ।
अवसत्सानुज सीतस्तं वनवासे रतं भज रामम् ॥७४४॥

सूतेनसह गुहोपि स्वस्य गृहं प्राप्य यस्य गुणनिवहान् ।
स्मारंस्मारमरोदी-त्तं वनवासे रतं भजे रामम् ॥७४५॥
समनुज्ञातस्सूतो-गुहनगरात्सायमेव यस्य पुरीम् ।
अह्नि तृतीयेऽविक्षत्तं वनवासे रतं० रामम् ॥७४६॥
शून्यामिव निश्शब्दां दृष्ट्वाऽयोध्यां यदीयसूतोपि ।
प्राविशदुद्विग्नमनास्तं वनवासे रतं० रामम् ॥७४७॥
अभियान्तं यत्सूतं रामः कुत्रेत्यपृच्छदथ लोकः ।
कांक्षितफलदातारं तं वनवासे रतं० रामम् ॥७४८॥
सूतस्तेभ्योऽशंसद्यं गंगातीरकानने त्यक्त्वा ।
अहमेवात्रागममिति तं वनवासे रतं भजे रामम् ॥७४९॥
येनानुज्ञातोहं शून्यं प्राविक्षमद्य साकेतम् ।
इत्यवदत्सूतस्तांस्तं वनवासे रतं भजे रामम् ॥७५०॥
इत्थं सुमन्त्रवचनं-श्रुत्वा साकेतवासिनो मनुजाः ।
यत्सन्दर्शनमीषुस्तं वनवासे रतं भजे रामम् ॥७५१॥
यन्नामस्मृतिहीनं जन्मकिमर्थञ्चमातृखेदकरम् ।
इत्यरुदंस्तत्र जनास्तं वनवासे रतं भजे रामम् ॥७५२॥
* येन सह वसतिहीना नस्मान्स्रष्टा किमर्थमसृजन्नहो ।
इत्यरुदंस्तत्र जनास्तं काननवासिनं भजे रामम् ॥७५३॥
येन सनाथानस्मान् न ससर्ज निर्दयो ब्रह्मा ।
इत्यरुदंस्तत्र जनास्तं काननवासिनं भजे रामम् ॥७५४॥
यस्यागमनात्पूर्वं-द्रष्टारः कथमथ वयमधुना ।
इत्यरुदंस्तत्र जनास्तं काननवासिनं भजे रामम् ॥७५५॥
साकेतचन्द्रशाला-मध्यस्था योषितो यदीयगुणान् ।
स्मारंस्मारं रुरुदुस्तं काननवासिनं भजे रामम् ॥७५६॥

जनपरिदेवनमित्थं श्रृण्वन्सूतो विवेश पिहितास्यः ।
यत्पितृगृहमध्यं द्राक् काननवासिनं भजे रामम् ॥७५७॥
अन्तः पुरवर्तिन्यो-नार्यो रुरुदुर्निरीक्ष्य यत्सूतम् ।
आयान्तं शून्यरथं त काननवासिनं भजे रामम् ॥७५८॥
अथ सूतोऽतीत्य तदा-सप्तमकक्ष्यामपश्यदुद्विग्नम् ।
यत्पितरं राजानं तं काननवासिनं भजे रामम् ॥७५९॥
यस्य गिरं स यथावत्सूतो राज्ञे व्यजिज्ञपन्निखिलाम् ।
कुण्ठितकण्ठो दुःखात्तं काननवासिनं भजे रामम् ॥७६०॥
येनोक्तं वृत्तान्तं-किञ्चिच्छ्रुत्वा सुमन्त्रमाह नृपः ।
त्वं सम्यग्वद पुनरिति तं काननवासिनं भजे रामम् ॥७६१॥
अथ सूतो यस्य गिरं विस्तरतः प्राह साञ्जलिस्सर्वाम् ।
राजानं श्रवणेच्छुं तं काननवासिनं भजे रामम् ॥७६२॥
अंबां सुमित्रयासह-तातश्च ब्रूहि कुशलमस्माकम् ।
इत्याह सयस्य गिरं तं काननवासिनं भजे रामम् ॥७६३॥
नैयग्रोधं क्षीरं-प्राप्य गुहानीतमादराज्जटिलः ।
योऽभूदित्याह स गां तं काननवासिनं भजे रामम् ॥७६४॥
आज्ञप्तो येनाहं-स्थित्वा दिवसान्बहून्गुहस्य गृहे ।
आगामित्याह नृपं तं काननवासिनं भजे रामम् ॥७६५॥
श्रुत्वा सूतोक्तिमिमां-यस्य पिता स्वं विनिन्द्य दुःखार्तः ।
गिरमाहतदा सूतं तं काननवासिनं भजे रामम् ॥७६६॥
दुष्टायाः कैकेय्या वाचाऽहं ज्येष्ठपुत्रमत्याक्षम् ।
इति यस्य पिताऽह गिरं तं काननवासिनं भजे रामम् ॥७६७॥
गुरुमन्त्रिषुनावोचं-केकयपुत्र्या दुरीहितं सर्वं ।
इति यस्य पिताऽहगिरं तं काननवासिनं भजे रामम् ॥७६८॥

मां रथमारोप्य त्वं रामं मेद्राक्प्रदर्शयाद्यवने ।
इति यस्य पिताऽह गिरं तं काननवासिनं भजे रामम् ॥७६९॥
इति विलपन्यस्यपिता-शयनीये द्राङ्निपत्य सोऽमुह्यत् ।
कौसल्यागृहमध्ये तं काननवासिनं भजे रामम् ॥७७०॥
तत्काले यन्माता-नय मामपि काननं सुमन्त्र द्राक् ।
इति गिरमाह रुदन्ती तं कानन० रामम् ॥७७१॥
नोचेत्पितृपतिसदनं-याम्यहमद्यैव सूत शृणु मम गाम् ।
इति यन्माताऽहगिरं तं कानन० रामम् ॥७७२॥
सानुजसीतं पुत्रं-पश्येयमहं यथातथाद्य कुरु । इति यन्माताऽहगिरं०
श्रुत्वा गिरमार्याया स्सूतोऽथ कृताञ्जलिर्बभाणेदम् ।
यत्प्रसुवं शोकार्तां तं काननवासिनं० रामम् ॥७७४॥
जहि मातर्मोहशुचौ-सुख्यास्ते ते सुतस्त्ववरजाभ्याम् ।
इत्याह सयत्प्रसुवं तं काननवासिनं० रामम् ॥७७५॥
वनभूमिं वैदेही गृहमिव मत्वा प्रमोदमावहते । इत्याह सयत्प्रसुवं०
कैकेयीदुर्वचनं-मनसि सुतस्तेन किञ्चिदपि मनुते ।
इत्याह सयत्प्रसुवं काननवासिनं भजे रामम् ॥७७७॥
वैदेहीमुखकमलं-शोभां वहतऽति भर्तृसान्निध्यात् । इत्याह सयत्प्रसु०
वैदेहीकान्तारे-दुष्टमृगेभ्यो बिभेति नोकिञ्चित् । इत्याह सयत्प्रसुवं०
श्रुत्वेमां सूतगिरं-यज्जनयित्री तदा शुचं विजहौ ।
कल्पद्रुं भक्तानां तं काननवासिनं भजे रामम् ॥७८०॥
अथ भूपं यन्माता-रुदतीवाक्यं जगाद शोकार्ता ।
स्मारंस्मारं पुत्रं तं काननवासिनं भजे रामम् ॥७८१॥
राजंस्त्वं पुत्रौ द्वौ-सीतासहितौ किमर्थमत्याक्षीः ।
इति यन्माताऽपृच्छत्तं० रामम् ॥७८२॥

राजन्विपिने सीता-यद् शीतोष्णे कथं सतीसहते ।
इति यन्माताऽपृच्छत्तं काननवासिनं भजे रामम् ॥७८३॥
मृष्टान्नं वैदेही-त्यक्त्वा वन्यं कथन्नु वै भुङ्क्ताम् ।
इति यन्माताऽपृच्छत्तं काननवासिनं भजे रामम् ॥७८४॥
यद्रूपणीगीतसुख-त्यक्त्वा शृणुयात्कथश्च सिंह्मरवम् ।
इति भूपमपृच्छत्सा तं काननवासिनं भजे रामम् ॥७८५॥
वर्षे पञ्चदशेऽहं-पश्यामि कथं वनात्समायान्तं ।
इति यं स्मृत्वाऽरोदीत्तं काननवासिनं भजे रामम् ॥७८६॥
अनुकूलो न पतिस्त्वं-पुत्रोपि वनं ययौ च मां त्यक्त्वा ।
इति यन्माताऽरोदीत्तं काननवासिनं भजे रामम् ॥७८७॥
यत्प्रसूवोक्तं वचनं-परुषं श्रुत्वा प्रमुह्य भूपालः ।
संज्ञामाप ततो द्राक् काननवासिनं भजे रामम् ॥७८८॥
यत्प्रसुवं दृष्ट्वाथ स्वेनकृतं पूर्वदुष्कृतं कर्म ।
अयतत राट् सचिवक्षुस्तं काननवासिनं भजे रामम् ॥७८९॥
रचितेंजलिरह्ममया-कौसल्ये त्वं प्रसादयेऽहं त्वाम् ।
इत्याह स यत्प्रसुवं तं काननवासिनं भजे रामम् ॥७९०॥
भर्ता खलु नारीणां गुणवानथवाऽपि निर्गुणो दैवम् ।
इत्याह सयत्प्रसुवं काननवासिनं भजे रामम् ॥७९१॥
नित्यं धर्मपरा त्वं नार्हस्येवं विनिन्दितुं रमणम् ।
इत्याह स यत्प्रसुवं तं काननवासिनं भजे रामम् ॥७९२॥
इति सा यत्पितृवाक्यं-श्रुत्वा राज्ञोंजलिं स्वहस्ताभ्याम् ।
शीर्ष्ण्याधायाऽऽह नृपं तं काननवासिनं भजे रामम् ॥७९३॥
शिरसाहं याचे त्वां नोहन्तव्या त्वयाऽद्य परुषगिरा ।
इति यन्माताऽऽह नृपं तं काननवासिनं भजे रामम् ॥७९४॥

सुत विरहमसहमानाऽत्रोचमहं नाथवाथमतिनीचाम्। इति यत्प्रभुवं०
अथ सूर्येऽस्तमिते निशि-शोकाधीनो निरस्य निद्रां राट्।
यत्प्रभुवं गिरमभणत्तं काननवासिनं भजे रामम् ॥७९६॥
अगुरुकल्याणि मदुक्ति-चिन्तापूर्वं प्रकथ्यमानां त्वम्।
इत्याह स यत्प्रभुवं तं काननवासिनं भजे रामम् ॥७९७॥
लोके कीर्तिरभून्मे बाल्ये भूपश्च शब्दवेधीति।
इत्याह स यत्प्रभुवं तं काननवासिनं भजे रामम् ॥७९८॥
व्यायामार्थं सरयू-तीरमगां दुष्टजन्तुहननेच्छुः। इत्याह स० रामम्
तत्राहं समुपागत-हिंस्राण्यहनञ्च शब्दवेधितया।
इत्याहसयत्प्रभुवं तं काननवासिनं भजे रामम् ॥८००॥
अश्रौषं तिमिरेऽहं कुम्भस्य रव प्रपूर्यमाणांबोः। इत्याह स यत्प्रभुवं०
मत्तगजभ्रान्त्याहं-बाणं न्यमुचं सुतीक्ष्णमेकं द्राक् इत्याह स० रामम्
हाहेति रवस्तत्र प्रादुरभूद्विद्धमर्ममुनिसूनोः। इत्याह स० रामम् ८०३
केन हतोऽस्म्यहमिषुणा निर्दयमनसेति वागभूत्काचित् इत्याह० रामम्
कस्यमया किं कृतमिति-वदतः कस्यापि वाचमश्रौष। इत्याह०रामम्
मुनिमनोर्मम हनना-त्किं फलमात्तं त्वयेति वागुदभूत्। इत्याह०रामम्
मद्धनने को लाभो ऽभूदिति मुनिपुत्र गां तदा श्रौषम्। इत्याह०रामम्
इत्थं करुणां वाचं-श्रुत्वाऽगां मुनिकुमारपतनभुवम्। इत्याह० रामम्
सरयूतीरेऽपश्यं मुनिबालं पतितकलशमत्रनिगतम्। इत्याह० रामम्
मामुद्वीक्ष्य स बालो वाचं क्रूरां प्रवक्तुमारेभे। इत्याह स० रामम्
किमपकृतं-तवराजन्निति मुनिपुत्रस्ममामपृच्छद्द्राक्। इत्याह० रामम्
मातापितरावन्धौ को रक्षेदित्यपृच्छदथ मां सः। इत्याह० रामम्
पित्रोर्जिहीर्षुरंभो-मामवधीस्त्वं नृपेति सोऽनिन्दत्। इत्याह० रामम्
इषुणैकेनाद्यत्वं-जघनिथमामित्यनिन्ददार्तस्सः। इत्याह०रामम् ८१५

गत्वामरितुसविधं-प्रार्थय शीघ्रं त्वमित्यभाणीत्सः । इत्याह० रामम्
नोचेन्ममापितरौ ते-दास्येते शापमित्युवाच स माम् ।
इत्याह स यत्प्रसुवं तं काननवासिनं भजे रामम्
राजन्नाहं द्विजनि-स्तद्धत्याभीर्नतेऽस्त्विति प्रोचे। इत्याह० रामम् ८१७
इत्युक्त्वो द्धृतबाण-स्समुखाद्रक्तं वमन्जहौ प्राणान् । इत्याह०रामम्
अथ जलपूर्णं घटमह मादाय द्राक्तमाश्रमं प्रापम् । इत्याह स०रामम्
अथ तत्पितरावन्धौ-वृद्धावुद्वीक्ष्य भीति मभजमहम् । इत्याह० रामम्
श्रुत्वा मम पदशब्दं-पुत्रंमत्वाऽऽइमांमुनिस्सोऽन्धः । इत्याह०रामम्
पुत्र चिरायसि किं त्वं त्यक्त्वाऽऽवामित्यवोचदथ स गिरम् ॥ इ०
अहमपि दृष्ट्वा तमृषिं-तव पुत्रो नाहमित्यवोचं गाम् इत्याह० रामम्
दशरथनामाऽहंराट् सरयूतीरे न्यवात्समित्यवदम् । इत्याह० रामम्
भगवंश्शापकरोऽहं-सुतमहनन्ते निशीतिगामवदम् । इत्याह० रामम्
अज्ञानात्कृतपापे-कोपं मयि परिहरेत्ययाचमहम् । इत्याह० रामम्
एकोहं तन्देशं तौनीत्वाऽस्पर्शयश्च तं पुत्रम् । इत्याह० रामम् ८२७
अहमवधिष धिया यदि-काकुत्स्थानामियात्कुलं नाशम् । इत्याह०
अथ तौ पुत्रशरीरं वृद्धावालिङ्ग्य रुरुदतुर्गाढम् । इत्याह० रामम्
निष्पापोसि कुमार त्वं गच्छ-स्वर्गमित्युवाच मुनिः । इत्याह० रामम्
मुनिपुत्रोथ स्वर्गं-शक्रेण सहारुरुक्षुरिदमूचे । इत्याह स० रामम् ८३१
अहमिन्द्रेण स्वर्गं यामि युवां यातमित्युवाच गिरम् । इत्याह०रामम्
इत्युक्त्वा पितरौ गां-दिव्यविमानं समारुरोह मुनिः । इत्याह०रामम्
कृत्वा पुत्रायोदक मूचे विहितांजलिं शुचा सच माम् । इत्याह०रामम्
जहि मां भूपाद्य त्वं-मरणेनोर्भीर्ममेति गिरमूचे । इत्याह० रामम् ८३५
अज्ञानादहनस्त्वं-हत्या दोषो न ते ऽस्त्विति प्रोचे । इत्याह० रामम्
पुत्रव्यसनेन मृति-र्भवतु तवापीत्युवाच मां स रुषा । इत्याह० रामम्

तच्छापान्ममतोषो-पुत्रकृतेऽभूत्तदा च कौसल्ये । इत्याह० रामम् ८३८
सच शापो व्यथयति-मामिति त शापं स्मराम्यहं चित्ते ।
इत्याह स यत्प्रसुवं तं काननवासिनं भजे रामम् ॥८३९॥
संप्राप्ते फलकाले कर्तुर्दुःखं ददाति दुष्कर्म । इत्याह० रामम् ॥८४०॥
त्वामपि सन्निकटस्थां-पश्यामि नचाहमद्य धीमोहात् । इत्याह० ८४१
साहाय्यार्थं पूर्व-मघवाऽऽह्वानं चकार दनुजयुधि । इत्याह० ८४२
वैवस्वतदूता मा-मद्याऽऽह्वानं हठात्प्रकुर्वन्ति । इत्याह० रामम् ८४३
शब्दस्पर्शरसादी-न्वेद्मि न चाहं दहत्ययं शोकः । इत्याह० रामम्
हाराम पुत्र राघव हाकौसल्ये सुमित्रयासहिते ।
इत्यरुदद्यस्यपिता तं काननवासिनं भजे रामम्
अथ यन्मातुः पुरतः-प्राणान्प्रजहौ स्मरन्सुतं राजा ।
लक्ष्मणसीतासहितं तं काननवासिनं भजे रामम् ॥८४३॥
कल्येऽहन्यपरस्मि-न्नाजग्मुर्वन्दिनोऽथ विख्याताः ।
प्रस्तोतुं यत्पितरं तं काननवासिनं भजे रामम् ॥८४४॥
सर्वेऽधिकारिणो द्रा-गाजग्मुस्स्वस्वकार्यकरणार्थम् ।
यत्पितृवासस्थानं तं काननवासिनं भजे रामम् ॥८४५॥
उदितेप्यादित्ये रा-डुत्तिष्ठन्नैव यत्पिता शयनात् ।
रघुवंशोदधिशशिनं तं काननवासिनं भजे रामम् ॥८४६॥
यत्पित्रन्तःपुरगा-नार्यो दृष्ट्वाथ भूपमप्राणम् ।
कौसल्यायै प्रोचुस्तं काननवासिनं भजे रामम् ॥८४७॥
कौसल्या ससुमित्रा-निद्रावशमेत्य यत्पितुर्मरणम् ।
नावेन्निशि दुःखार्ता तं काननवासिनं भजे रामम् ॥८४८॥
ससुमित्रा कौसल्या दृष्ट्वा भूपं व्यसुञ्च यत्तातम् ।
भूमौ पतिताऽरोदीत्तं काननवासिनं भजे रामम् ॥८४९॥

अन्तः पुरवर्तिन्य-स्सीमन्तिन्यस्तथैव कैकेयी ।
रुरुदुर्यत्पितृमरणे तं काननवासिनं भजे रामम् ॥८५०॥
यत्पितृशीर्षं स्वाङ्के कृत्वा रुदती बभाण कौसल्या ।
कैकेयीनिकटस्था तं काननवासिनं भजे रामम् ॥८५१॥
* केकयपुत्रि स कामा भव राज्यं भुङ्क्ष्व पुत्र सहिता त्वं ।
इति यन्माताऽरोदीत्तमरण्यस्थं सदा भजे रामम् ॥८५२॥
प्राप वनं पुत्रो मे भर्ताऽपि त्रिदिवमाप मां त्यक्त्वा ।
इति यन्माताऽरोदीत्तमरण्यस्थं सदा भजे रामम् ॥८५३॥
प्राणेशेनाहं द्राक्सहगमनं शास्त्रतः करोम्यधुना ।
इति यन्माताऽरोदीत्तमरण्यस्थं सदा भजे रामम् ॥८५४॥
दैवतमिह भर्तारं हित्वा का स्त्री जिजीविषेत्साध्वी ।
इति यन्माताऽरोदीत्तमरण्यस्थं सदा भजे रामम् ॥८५५॥
जनको वृद्धोल्पसुत-श्श्रुत्वा सीतां सुतां कथं सोढा ।
इति यन्माताऽरोदीत्तमरण्यस्थं सदा भजे रामम् ॥८५६॥
इत्थं विलपन्तीं तां-व्यपनिन्युर्व्यावहारिकाः पुरुषाः ।
यत्प्रसुवं कौसल्यां तमरण्यस्थं सदा भजे रामम् ॥८५७॥
अथ राज्ञोङ्गं तैल-द्रोण्यां सचिवा निवेशयाञ्चक्रुः ।
यन्मातुः पश्यन्त्यास्तमरण्यस्थं सदा भजे रामम् ॥८५८॥
कल्ये मार्कण्डेयो-मौद्गल्यो वामदेवजाबाली ।
प्रापुर्यत्पितृसदनं तमरण्यस्थं सदा भजे रामम् ॥८५९॥
कात्यायनोऽथ काश्यप गौतममुख्याद्विजातयोप्यन्ये ।
यत्पितृसदनमवापुस्तमरण्यस्थं सदा भजे रामम् ॥८६०॥
यत्कुलगुरुमूचुस्ते-प्रकृतं कार्यं वसिष्ठमामन्त्र्य ।
सचिवाभूदेवा अपितमरण्यस्थं सदा भजे रामम् ॥८६१॥

दशरथराट् स्वर्गमगाज्ज्येष्ठः पुत्रो वनं ययौ रामः । इति यद्गुरु-मूचुस्ते तमरण्यस्थं सदा भजे रामम् ॥८६२॥ अन्वसरत्सौमित्रि-र्ज्येष्ठं तं पितृगिरा वनं यान्तम् । इति यद्गुरु० भजे रामम् ॥८६३॥ भरतस्त्वानुजसहितो-मातुलसदनेऽद्य वर्तते तुष्टः । इति यद्गुरुमूचुस्ते० रामम् ॥८६४॥ अद्यायोध्याराज्यं-नाथविहीनं बभूव राज्ञि मृते । इति यद्गुरु० रामम् ॥८६५॥ नाराजके प्रदेशे-वस्तुं वाञ्छन्ति साधवो विबुधाः । इति यद्गुरु० रामम् ॥८६६॥ नाराजके हि राज्ये-भार्या भर्तुर्वशं गता भवति । इति यद्गुरु० रामम् ॥८६७॥ नाराजके चराष्ट्रे दोषान्वक्तुं प्रभुर्विरिञ्चोपि । इति यद्गुरु० रामम् ॥८६८॥ राजा धर्म स्सत्यं-राजा माता पिता च मनुजानाम् । इति यद्गुरु०रामम् ॥८६९॥ तस्मादिक्ष्वाकु कुले-कश्चिद्राजा विधीयतामधुना । इति यद्गुरु०रामम् ॥८७०॥ राज्ये रक्षकशून्ये-निवसन्प्राज्ञोपि नीचतामेति । इति यद्गुरु, रामम् ॥८७१॥ इत्थन्तेषां वचनं-श्रुत्वाऽथोतान्वसिष्ठ इदमूचे । यद्वं-शक्षेमेच्छुस्तमरण्यस्थं सदा भजे रामम् ॥८७२॥ भरतं सानुजमधुना दूतमुखादानयन्तु सचिवाद्राक् । इति यद्गुरुराह गिरन्तमरण्य०रामम् ॥८७३॥ विजयजयन्ताशोका-दूतैर्भरतं समानयन्तु द्राक् । इति यद्गुरु०रामम् ॥८७४॥ प्राहिण्वन्नथदूतान्भरताह्वानाय केकयस्य पुरम् । यद्गुरुवाक्याद्राक्ते तमरण्य० रामम् ॥८७५॥ देशानतीत्य *मार्गे-तेरुर्विविधानदीश्च ते दूताः । यत्तातसचिववचनात्तमरण्य०रामं हस्तिनपुर्यां गंगां-तीर्त्वा पाञ्चालदेशमापुस्ते । यत्तातसचिववचना-त्तमरण्य० रामम् ॥८७७॥ श्रान्तहयास्ते दूता-गिरिं वज्राख्यं पुरं दृशा पश्यन् । यत्तातसचिववचनात्तम० रामम् ॥८७८॥ रात्र्यां पत्तनमविशन्दूतास्ते साट्टगोपुरद्वारम् । यत्तातसचिव० रामम् ॥८७९॥ तस्यां रात्र्यां भरतो-यत्पितृमरणप्रसूचकं स्वप्नम् । अद्राक्षीच्छयन

गृहे तमरण्य० रामम् ॥८८०॥ मातर्वयस्य गोष्ठ्यां भरतोऽवादीत्स्व
* कीयदुस्स्वप्नम् । यत्पितृमरणोदर्कं तमरण्य० रामम् ८८१ अपि-
बत्तैलं तातो विहसन्नित्याह दृष्टदुस्स्वप्नम् । यत्पितृमरणो० रामम्
॥८८२॥ रथमारुरोह राजा-खरयुक्तं यातुमेव याम्यदिशम् । इति
यज्ज्ञाताऽहगिरं० रामम् ॥८८३॥ रामोऽहं वा राजा वा-सौमित्रिर्वा
* मरिष्यतीत्यूचे । यज्ज्ञाता सच सुहृदस्तमरण्य० रामम् ॥८८४॥
गर्दभयानस्वप्नो-द्राक्सविता दुःखमित्युवाच तदा । यज्ज्ञाता स च
सुहृदस्तमरण्य० रामम् ॥८८५॥ इत्थंब्रुवति स्वप्नं भरते गोष्ठ्यां तदा
* ऽविशन्दूताः । यत्पितृसचिवप्रहितास्त मरण्य० रामम् ॥८८६॥
प्रणिपत्याथो केकय-मूचुर्भरतं वसिष्ठवचनन्तत् । यत्पितृस ०रामम्॥
तव कुशलं प्राह गुरुस्सर्वेऽमात्यास्तथाऽहुरिति बभणुः। यत्पितृसचिव,
रामम् ॥८८८॥ वस्त्राण्याभरणानिच-गृह्णीष्वास्मत्त इत्यवोचन्नाम्।
यत्पितृसचिव० रामम् ॥८८९॥ त्वं मातुलाय दत्वा-निर्याहीत्यूचुरे-
व ते दूताः । यत्पितृसचिवप्रहितास्तमर० रामम् ॥९००॥ इत्थं वाचं
श्रुत्वा-भरतो दूतान्प्रवक्तुमारेभे । यत्पितृसचिवप्रहितास्तमरण्य०
रामम्॥९०१॥ अपिकुशलंदाशरथे-स्तन्मातुर्ब्रूतयूयमित्यूचे। यत्पितृ
सचिवप्रहितांस्तमरण्य० रामम् ॥९०२॥ कच्चिल्लक्ष्मणमाता-नीरोगा
ब्रूत यूयमित्यूचे । यत्पितृसचिवप्रहितांस्तमरण्यस्थं सदा भजे
रामम्॥ ९०३॥ चण्ड्या मम जनयित्र्या-अपि कुशलं ब्रूत यूयमित्यूचे।
यत्पितृसचिवप्रहितांस्त० रामम् ॥९०४॥ इत्थं पृष्टादूता-वाचं स-
प्रश्रयं तदा बभणुः । यस्य कनिष्ठं भरतं तमरण्यस्थं० रामम् ९०५
येषामिच्छसि कुशलं-ते सर्वे कुशलवन्त इति बभणुः । यस्यावरजं
दूतास्तमरण्य० रामम् ॥९०६॥ वृणुते त्वामद्य श्री-रथमारोहत्व-
मित्यवोचंस्ते । यदवरजं तं भरतं तमरण्य० रामम् ॥९०७॥ एवं

दूतैरुक्तो-मातामहमेत्य वचनमभणदिदम् । यद्भ्राता द्राग्भरतस्तमर-
ण्य० रामम् ॥९०८॥ राजन्हृदयमयोध्यां-गन्तुं त्वरते ममेत्यभा-
णीत्सः । यत्पितृगुरुवाक्छ्रवणात्तम० रामम् ॥९०९॥ पुनरहमेष्यामि
यदा-त्वं मां द्रष्टुं स्मरिष्यसीत्यूचे । यद्भ्राताभरतोऽसौ तमरण्य०
रामम् ॥९१०॥ इत्थं भरतेनोक्तः-केकयराजो बभाण दौहित्रम् ।
मूर्ध्न्याघ्राय यदनुजं तमरण्य० रामम् ॥९११॥ कुशलं ब्रूयाः
* पितरं-मातॄर्गुरुमन्त्रिवामदेवादीन् । इत्याह स यत्सहजं तमहं सेवे
जटाधरं रामम् ॥९१२॥ दौहित्रायाश्वपतिःप्रादाद्विविधानि वस्त्ररत्ना-
नि । यद्भ्रात्रे सन्तोषात्तमहं सेवे० रामम् ॥९१३॥ अन्तः पुर-
संवृद्धा-न्व्याघ्रसमान्मातुलोप्यदाच्छुनकान् । यद्भ्रात्रे तोषकरांस्तमहं
सेवे जटाधरं रामम् ॥९१४॥ यद्भ्राताऽनुजसहितो-बलगुप्तः
प्राङ्मुखोऽथराजगृहात् । प्रययौ चिन्ताविष्टस्तम० रामम् ॥९१५॥
सन्तीर्याऽथ सुदामा-मुख्या स्सरितश्शिलानदीं तीर्त्वा । यद्भ्राता-
ऽविशदटवीं तमहं० रामम् ॥९१६॥ विविधास्सरितो देशा-नति
वाह्याऽथो ततार यमुनां द्राक् । यद्भ्रातापि विवित्सूस्तमहं० रामम्
॥९१७॥ तत्रस्नात्वाऽथ जलं-पीत्वा प्रापद्रथेन बलगुप्तः । यद्भ्राता
गंगां तां तमहं सेवे जटाधरं रामम् ॥९१८॥ प्राग्वटदेशं गत्वा
तीर्त्वा गंगां सहानुजस्सबलः । प्रययौ यद्भ्राता द्राक्तमहं सेवेज०
रामम् ॥ ९१९ ॥ ग्राममतीत्य वरूथं-नाम्ना प्रययावतित्वरायुक्तः ।
यद्भ्राताऽनुजसहितस्तमहं से वे ज० रामम् ॥९२०॥ इत्थं मध्ये
मार्गं-रात्रीस्सप्तव्यतीत्य यद्भ्राता । कल्येऽयोध्यामैक्षत तमहं से वे
जटाधरं रामम् ॥९२१॥ सारथि मुद्वीक्ष्य तत-श्चिन्ताविष्टो बभाण
गिरमेताम् । यद्भ्राताऽस्वस्थमनास्तमहं० रामम् ॥९२२॥ अस्म-
दयोध्याऽपूर्वाऽरण्यानीवाद्य वर्तते कस्मात् । इति यद्भ्राताऽपृच्छ-

त्तमहं जटाधरं रामम् ॥१२२॥ भेरीकाहळवीणा-पटहमृदंगध्वनिः कुतो
*नासीत्। इति तं यज्ञ्रातोचे तमहं० रामम् ॥१२३॥ दुश्शकुनं मम
पुरतो-दुःखं जनयिष्यतीति शङ्केऽहम्। इति तं यज्ञ्रातोचे तमहं०
रामम् ॥१२४॥ त्वरयाऽऽनीतः कस्माद्गुरुणाऽहं सारथेऽद्य वद
शीघ्रम्। इति यज्ञ्राताऽपृच्छत्तमहं० रामम् ॥१२५॥ इति सूतं निगद-
* न्द्राग्दीनमना प्राविशत्स राजगृहम्। यज्ञ्राताऽनुजसहितस्तमहं०
रामम् ॥१२६॥ दीनमना नष्टसुखो-बाष्पमुखः प्राविशत्स भूपगृहम्।
यज्ञ्राताऽनुज सहितस्तमहं० रामम् ॥१२७॥ तत्रापश्यन्पितरं-यज्ञ्रा-
ता प्राविशत्स्वमातृगृहम्। पितृसन्दर्शनकामस्तमहं रामम् ॥१२८॥
यद्भक्तं कैकेयी-चिरकालप्रोषितं सुतं दृष्ट्वा। त्यक्त्वाऽऽसनमुदतिष्ठ-
त्तमहं, रामम् ॥१२९॥ तत्र स गत्वा मातु-श्चरणौ जग्राह भक्तितो
नम्रः। यद्भक्तोऽनुजसहितस्तमहं रामम् ॥१३०॥ यद्भक्तं कैकेयी-कु
शलं प्रष्टुं स्वकीयबन्धूनाम्। गिरमभणत्सन्तुष्टा तमहं रामम्,।१३१।
आर्यकमातुलमुख्या-स्तत्रत्याः कुशलिनोऽद्य किं भरत। इति यद्भक्त
मपृच्छत्तमहं सेव जटाधरं रामम् ॥१३२॥ इत्थं पृष्टो मात्रा-प्रत्यूचे
तां गिरं तदा प्राज्ञः। यज्ञ्राता पितृभक्तस्तमहं० रामम् ॥१३३॥
*कुशली तातांबायाः-कुशली मे मातुलस्सबन्धुगणः। इति तां यज्ञ्रातो
चे तमहं० रामम् ॥१३४॥ दृष्ट्वाद्दूतागमनं-त्वरमाणोऽहं समागतो-
ऽस्म्यधुना। इति तां यज्ञ्रातोचे तमहं० रामम् ॥१३५॥ शून्योऽयं
पर्यङ्क-स्स्वर्ण[illegible]स्ते कुतोऽद्य वद शीघ्रम्। इति तां यज्ञ्रातो० रामम्।
।१३६॥ तातो मसदनन्ते तत्याज वदांब कारणात् कस्मात्। इति
*यज्ञ्राताऽपृच्छत्तमहं० रामम् ।१३७। अथवा ज्येष्ठांबायाः-कौस-
ल्यायाः गृहेऽस्ति वा वद मे। इति यज्ञ्राताऽपृच्छत्तमहं० रामम् ।१३८।
नतिवन्द्याहं पदयो-श्शिरसदानीं तदाशिषंयायाम्। इति तां यज्ञ्रा-

तोचे तमहं० रामम् ॥९३९॥ यद्भ्रक्तेनेत्युक्त्वा प्रियमिव घोरं वचो बभाण तदा । निर्लज्जाकैकेयी तमहं० रामम् ॥९४०॥ या गति-रुक्ता नृणां-तां गति मेवागमत्तत्रापि पिता । इति सो चे यदवरजं तमहं० रामम् ॥९४१॥ वचनमिदं मात्रोक्तं-श्रुत्वा विललाप हा हतो ऽस्मीति । यद्भ्राताऽनुजसहितस्तमहं०रामम् ॥९४२॥ वस्त्रेणाच्छा-द्य मुखं भूमावरुदन्निपत्य चोच्चरवम् । यद्भ्राताऽनुजसहितस्तमहं० ॥९४३॥ अभिषेक्ष्यति रामं-राडिति मत्वाऽहं समागतोऽस्मि मुदा । इत्यरुदद्यद्भ्राता तमहं रामम् ॥९४४॥ राजा यज्ञं यक्ष्यत-इति मत्वा ऽहं त्वरागतोऽस्म्यधुना । इति यद्भ्राताऽरोदीत्तमहं रामम् ।९४५। मम यन्मनोभिलाषितं-नोत्पाद्यफलं तदन्यथाभूतम् । इति यद्भ्राता० रामम् ॥९४६॥ यद्भ्रक्तोऽथ रुदित्वा-चिरमेवं मातरं बभाण गिरं । बाष्पमुखो दुःखार्तस्तमहं रामम् ॥९४७॥ केनांबाद्य पिता मे-मृतिमाप व्याधिना च वद मे त्वम् । इति यद्भ्राताऽपृच्छत्तमहं सेवे०रामम् ॥ योमे भ्राता ज्येष्ठो-बन्धुः पित्रा समस्स कुत्र वद । इति यद्भ्राता, रामं॥ ॥९४९॥ नाथो मे ऽनाथस्य-क्वाद्यास्ते तं वदांब पश्यामि । इति तां यद्भ्रातोचे तमहं रामम् ।९५०। राज्ञा मृतिकालोक्तं-पश्चिमसन्देश-मद्य कथय मम । इति तां यद्भ्रातोचे तमहं० रामम् ॥९५१॥ एवं यद्भ्रातृगिरं-श्रुत्वा तथ्यं वचो बभाणेत्थम् । स्वार्थपरा कैकेयी तमहं रामम् ॥९५२॥ हारामेति प्रलप-न्हासीते लक्ष्मणेति राडमृत । इति यद्भ्रक्तं सोचे तमहं०रामम् ॥९५३॥ सीतासहितं रामं द्रक्ष्य-न्ति जना मुदेति राडमृत । इतियद्भ्रक्तं० रामम् ॥९५४॥ एतद्वचनं श्रुत्वा-यद्भ्राता प्राप्य शोकमतिदीर्घम् । कैकेयीं पुनरवदत्तमहं० रामम्॥ क्वेदानीं धर्मात्मा-सीतासौमित्रिसहित एवास्ते। इति यद्भ्राता पृच्छत्तमहं० रामम् ॥९५६॥ इति पृष्टो यद्भ्रात्रा-विप्रियवचनं सुख-

मदं मत्वा । कैकेय्यभणत्तोषात्तमहं० रामम् ॥९५७॥ वल्कलवसनो रामः काननमगमत्सदारसौमित्रिः । इति यद्भक्तं सोचे तमहं०रामम् ॥९५८॥ श्रुत्वेदं यद्भ्राता-ज्येष्ठचारित्रशंकया प्रसुवम् । गिरमारेभे वक्तुं तमहं सेवे जटाधरं रामम् ॥९५९॥ ब्राह्मणधनमहरद्वा-धनिक-*मपापं धनाशयाहन्वा । इति यद्भ्राताऽपृच्छत्तमहं० रामम् ॥९६०॥ ऐच्छत्परदारान्वा-कस्माज्ज्येष्ठो विवासितः पित्रा । इति यद्भ्राता-ऽपृच्छत्तमहं चीरांबरं भजे रामम् ॥९६१॥ इति पृष्ठायद्भ्राता-कैकेयी स्त्रीस्वभावतो वचनम् । वक्तुं प्रारभत सुतं तमहं चीरांबरं भजे रामम् *।९६२। ब्रह्मस्वाहरणाद्यान्दोषांस्तस्मिन्कदापि नास्मार्षम् । इति यद्भक्तं सोचे तमहं० रामम् ॥९६३॥ रामाभिषेचनमहं-श्रुत्वा राज्यं ह्ययाचिषं रमणम् । इति यद्भक्तं सोचे तमहं० रामम् ॥९६४॥ रामस्य विपिनवसतिं-भर्तारमयाचिषं च भवदर्थम् । इति यद्भक्तं, रामम् ॥९६५॥ अथ राजा सत्यवचास्स्वर्गमगान्मे वरद्वयं दत्वा। इति यद्भक्तं० रामम् ॥९६६॥ रामोऽप्यारण्यमगात्सहसीतस्सानुज-श्च पितृवाक्यात् । इति यद्भक्तं रामम् ॥९६७॥ निष्कण्टकमद्यत्वं राज्यमिदं भुङ्क्ष्व पुत्र सन्तोषात् । इति यद्भक्तं रामम् ॥९६८॥ तातं पुत्रेदानीं दह गुरुवाक्यात्प्रचोदितश्शीघ्रम् । इति यद्भक्तं०रामम्॥ अभिषिक्तो भव पुत्र-त्वं गुरुणा मेऽग्रतः मपश्यन्त्याः । इति यद्भक्तं० रामम् ॥९७०॥ श्रुत्वा पितरं वृत्तं-सानुजमार्यं विवासितं मात्रा । तामूचे यदवरजस्तमहं चीरांबरं भजे रामम् ॥९७१॥ अस्मत्पितरं *हत्वा-रामं ज्येष्ठं विवासितमकार्षीः । इति यद्भ्रातोचे तां तमहं० रामम् ॥९७२॥ अस्मत्कुलनाशाय-त्वं यतसे काळरात्रिरिव दुष्टा । इति यद्भ्रातोचे तां तमहं रामम् ॥९७३॥ ससुमित्रा कौसल्या-पुत्रौ स्मृत्वा शुचं कथं सोढा । इति यद्भ्रातोचे तां तमहं० रामम् ।९७४॥

ज्येष्ठांबाकौसल्या-त्वां भगिनीमिव पुपोष खलु पापाम् । इति यज्ञ्रातोचे तां० रामम् ।।९७५।। तस्याः पुत्रं रामं-वल्कलवसनं कथं त्वमद्राक्षीः । इति यज्ञ्रातोचे तां० रामम् ।।९७६।। त्वामहमद्य सकामां कुर्यां सुतगर्धिनीं कथं पापाम् । इति यज्ञ्रातोचे तां० रामम् ।।९७७। पूज्ये केकयवंशे-कथमसि जाता स्नुहिर्यथाऽऽम्रवणे । इति यज्ञ्रातोचे तां० रामम् ।।९७८।। आरब्धं व्यसनमिदं-ममजीवितनाशकृच्च-दुर्वृत्ते । इति यज्ञ्रातोचे तां० रामम् ।।९७९।। रामं निवृत्य विपिनात्तस्य भविष्यामि दासभूतोऽहं । इति यज्ञ्रातोचे० रामम् ।९८०।। तव कामपूरणमिदं-नो कुर्वेऽहं कदापि दुश्शीले । इति यज्ञ्रातोचे० रामम् ।।९८१।। राज्याद्भ्रंशस्वास्मात्कैकेय्यद्यैव भर्तृहन्त्री त्वम् । इति यज्ञ्रातोचे० रामम् ।।९८२।। कैकयि गच्छ नरकं-नेक्षस्व त्वं कदाऽपि पतिलोकम् । इदि यज्ञ्रातोचे० रामम् ।।९८३।। नाश्वपतेस्त्वं कन्यातत्र कुले कापि राक्षसीत्वमभूः । इति यज्ञ्रातोचे० रामम् ९८४ अरुदत्सुरभिर्दृष्ट्वा-कर्षन्तौ शावकौ च बहुपुत्रा । इति यज्ञ्रातोचे०रामम् ।।९८५।। एकः पुत्रो यस्यास्सापि विवत्सा कृता त्वयेदानीम् । इति यज्ञ्रातोचे० रामम् ।।९८६।। उक्त्वेत्थं निस्संज्ञोऽपतदुर्व्यां कीर्णकेशवसनोसौ । यज्ञ्रक्तोंबा पुरतस्तमहं० रामम् ९८७ संज्ञां लब्ध्वाऽथ चिरा-दुत्थायोद्वीक्ष्य मातरं निन्दन् । यज्ञ्रक्तो वच ऊचे तमहं० रामम् ।।९८८।। राज्यं न कामयेहं-जात्वप्यंबां न मन्त्रये *सचिवाः । इति तान्यज्ञ्रातोचे तमहं रामम ।९८९। देशेऽथ विप्रकृष्टेऽनुजसहितोऽहं न्यवात्समतितुष्टः । इति तान्यज्ञ्रातोचे, रामम् ।।९९०।। रामस्याभिषेकं वा-वनवसतिं वा न जात्वहं जाने । इति तान्यज्ञ्रातोचे तमहं, रामम् ।।९९१।। उच्चैः क्रोशत इत्थं-भरतस्य रवं तदाऽश्रुणोत्साध्वी । यन्मातासमुमित्रा तमहं रामम् ।।९९२।।

आगच्छदथ भरतः-केकयदेशात्पितुः क्रियां कर्तुम् । इति यन्माते
* चे तां तमहं चीरांबरं भजे रामम्॥९९३॥अथ सुमित्रे भरतं-पश्य
वत्सं समागतम् दूरात् । इति यन्मातोचे तां तमहं० रामम् ॥९९४॥
इत्युक्त्वा स सुमित्रा-मार्गे स्वे द्रष्टुमागतं भरतम् । यन्माता समपश्य
त्तमहं० रामम् ॥९९५॥ पर्यष्वजतरुदन्तीं-भूमौ पतितां समेत्य कौ-
सल्याम् । यद्भक्तोऽनुजसहितस्तमहं० रामम् ॥९९६॥ अथ यन्मा-
ताभरतं विलपन्तं सानुजं च संप्रेक्ष्य । दुःखाद्वाचमवोचत्तमहं०रामम्॥
राज्यमकण्टकमेतत्त्वन्मात्रा प्राप्तमद्य तव तुष्ट्यै । इति यन्मातोचे तं
तमहं० रामम् ॥९९८॥ तव माते यं मां च-प्रस्थापयितुं वनं करोतु
मतिम् । इति यन्मातोचे तं तमहं० रामम् ॥९९९॥ अथवा स्वयमे
वाहं-ससुमित्रा राममद्य पश्येयम् । इति यन्मातोचे तं तमहं०रामम्
॥१०००॥ अथवा स्वयमेवत्वं-नय मां रामस्य सन्निधिं विपिने ।इति
यन्मातोचे तां तमहं ०रामम् ।१००१।नाहं वसामि राज्ये रामविहीने
क्षणार्धमपि भरत। इति यन्मातोचे० रामम् ॥१००२॥ इत्थं विल-
* पन्तीं तां कौसल्यां प्रत्युवाच दुःखार्तः। यद्भक्तश्शपथगिरा तमहं
धृतचाप माश्रये रामम्।१००३। आर्येऽकिल्बिषमेनं कस्मान्मां गर्हसे
ऽम्ब तद्भृत्यम् । इति यद्भक्तोऽवादीत्तमहं० रामम् ।१००४। अथ च
तयोक्तं वचनं-श्रुत्वा दुःखाद्व्यथां गतोऽत्यन्तम् । स च यद्भक्तोऽरो
दीत्तमहं०रामम् ।१००५। इति तत्सविधे विलपन्मूर्च्छां प्राप्याथलब्ध
संज्ञोऽभूत् । यत्पदपंकजभृंगस्तमहं०रामम् ॥१००६॥ प्राह स शपथं
पुरतः कौसल्यायाश्चस्तदासाश्रुः । यत्पदपंकजभृङ्गस्तमहं०रामम् ॥
।१००७। यदनुमतेऽरण्यमगादार्यस्तद्धीः कुमार्गगा भवतु । इति शेपे
यद्भ्राता तमहं० रामम् ॥१००८॥ यस्यार्योऽनुमतेऽगात्सृष्टां गां हन्तु
सोऽपि पदघातैः । इति शेपे यद्भ्राता तमहं चीरांबरं भजे रामम् ॥

* यस्यार्योऽनुमतेऽगा-त्सोऽश्नातु वृथैव पायसादीनि । इति शेपे यद्भ्राता तमहं धृतचापमाश्रये रामम् ॥१०१०॥ यस्यार्योऽनुमते-ऽगाल्लोके सद्वेष्यतां भजत्वधुना । इति शेपे० रामम् ॥१०११॥ यस्यार्योऽनुमतेऽगा-दटतां पृथिवीं कपालपाणिस्सः । इति शेपे० रामम् ॥१०१२॥ यस्यार्योऽनुमतेऽगा-त्पानस्त्यक्षेषु लंपटस्स्यात्सः । इति शेपे० रामम् ॥१०१३॥ यस्यार्योऽनुमतेऽगाद्गुरुतल्पगपापभा-जनं स स्यात् । इति शेपे० रामम् ॥१०१४॥ यस्यार्योऽनुमतेऽगा-द्बहुपुत्रः क्लेशपीडितस्सस्स्यात् । इति शेपे० रामम् ॥१०१५॥ * इति रमणसुतविहीनां-यत्प्रसुवं मोच्य दुःखसन्तप्तः । भूम्यां न्य-पतद्भरतस्तमहं धृतचापमाश्रये रामम् ॥१०१६। इत्थं शपथैः कष्टै-श्शपमानं भ्रान्तचेतसं भरतं । यन्माताgive गिरमूचे तमहं० रामम् ॥ ॥१०१७॥ दुःखार्त्तं शपमान-श्शपथैर्भयः करोषि ममदुःखम् । इति यन्मातोचे गां तमहं, रामम् ॥१०१८॥ अथवत्सं स्वोत्संगं भरतं साऽऽनीय गाढमालिङ्ग्य । यन्माता प्रारोदीत्तमहं० रामम् ।१०१९। इत्थमशेषां रात्रिं शोकात्साश्रुर्निनाय कल्पसमाम् । यन्माता सा सुमित्रा तमहं० रामम् ॥१०२०॥ कल्ये गुरुर्वसिष्ठो-भरतं प्रेक्ष्याथ वाचमाहैवम् । यन्मातुः पुरतोऽसौ तमहं० रामम् ॥१०२१॥ शोकं-नालं भरत-त्वं कुरु संयानमुत्तरं राज्ञः । इति यत्कुलगुरुरवदत्तमहं० रामम् ॥१०२२॥ श्रुत्वा गुरुवाक्य-मथो सर्वं कार्यं सकारया-मास । यन्मातरि पश्यन्त्यां तमहं० रामम् ॥१०२३॥ उद्धृत्य तैल-पात्रा-च्छयने चाग्न्ये निवेश्य पितृकायम् । यद्भ्राताऽसव्यलपत्तमहं० रामम् ॥१०२४॥ राजन्व्यवसितमेत-न्न्याय्यं वामद्यनागते वदमे। * इति यद्भ्राताऽरोदीत्तमहं० रामम् ॥१०२५॥ रामं विवास्य वि-पिनं-स्वर्गं गन्तुं तवाद्य किं न्याय्यम् । इति यद्भ्राता व्यलपत्तमहं धृतचापमाश्रये रामं ॥१०२६॥ रामोऽस्माभिस्सहितः-कृत्यं ते कर्तुं-

महतीदानीम्। इति यद्भ्राता व्यलपत्तमहं धृतचापमाश्रयेरामम् १०२७ पुत्रो ज्येष्ठः प्रोक्त-शास्त्रेऽन्येकामजा इति प्रोक्ताः। इति यद्भ्राताऽव्य-लपत्तमहं० रामम् ॥१०२८॥ इत्थं विलपन्तं तं-कर्तव्यं प्रेतकार्यम-द्यखलु। इति यत्कुलगुरुरवदत्तमहं० रामं॥१०२९॥ अथ गुरुवचनं श्रुत्वा-चर्त्विक्प्रभृतीन्नुनोद भूदेवान्। यद्भक्तो बाष्पमुखस्तमहं० रामम् ॥१०३०॥ ऋ तेऽग्न्यागारमुख्या-राज्ञश्शालाबहिष्कृतानमीन्। जगृहुर्यद्भक्तयुनास्तमहं० रामम् ॥१०३१॥ शिबिकायां राजवपु-र्निक्षिप्योहुस्तदीयपरिवाराः। यद्भक्ताऽऽज्ञाप्रहितास्तमहं धृतचाप० * रामम् ॥१०३२॥ ऋत्विग्संघाराज्ञ-श्चितिमध्ये सन्यवेशयन्देहम्। यद्भक्तकुशलकामास्तमहं धृत० रामम् ॥१०३३॥ अग्निं दत्वा जेपु-श्शास्त्रोक्तं मन्त्रमृत्विजः केचित् यद्भक्तकुशलकामास्तमहं० रामम् ॥१०३४। सामानि सामगास्ते-कर्णश्राव्यं तदा जगुः केचित्। यद्भक्तकुशलकामास्तमहं० रामम् ॥१०३५॥ * राज्ञोन्तःपुरनार्य-स्स्मारं स्मारं गुणांस्तदा रुरुदुः। यद्भ्रातुस्समदुःखास्तमहं०रामं॥ ॥१०३६॥ अग्निचितं नृपतिं ताः-कौसल्याद्याः प्रसव्यमपि चक्रुः। यद्भ्रातुस्समदुःखास्तमहं० रामम् ॥१०३७॥ अथ विलपन्त्योनार्य-स्स्नात्वा सरयूतटाद्विनिर्गम्य। पुरमविशन्यद्भ्रात्रा तमहं० रामम् ॥ ॥१०३८॥ इत्थं गते दशाहे-यद्भक्तः प्राप्तशुद्धिरनुजेन। ऐच्छच्छ्राद्धं कर्तुं तमहं० रामम् ॥१०३९॥ द्वादशदिवसे प्राप्ते-श्राद्धं कर्माप्यका-रयद्विधितः। यत्कुलपुरोहितोद्भाक्तमहं० रामम् ॥१०४०॥ पुष्कल-मन्नं धनमपि-वासांसि क्षेत्रगोगृहाणि ददौ। विप्रेभ्यो-यद्भक्तस्तमहं० रामम्॥ कल्ये त्रयोदशे ह-न्त्या पचिता मूलशोधनं कर्तुं। यद्भ्राता ऽनुजसहितस्तमहं धृतचापमाश्रये रामम् ॥१०४२॥ कृत्वा त्वं कौस ल्यां पुत्रविहीनां गतोऽसि कुत्र पितः। इत्यरुदद्यद्भक्तस्तमहं० रामम् ॥१०४३॥ भस्मारुणमथ दृष्ट्वा दग्धास्थि स्थानमण्डलं राज्ञः

यद्भक्तोऽरुददुच्चैस्तमहं धृतचाप माश्रये रामम् १०४४स्मृत्वातातस्य गुणान्निस्संज्ञो भुवि पपात दुःखभरात् । यद्भक्तोऽनुजसहितस्तमहं, रामम् ॥१०४५॥ पित्रा भ्रात्रा शून्यां नाहमयोध्यां प्रविश्यवत्स्यामि इति यद्भक्तोऽवादीत्तमहं० रामम् ॥१०४६॥ इत्युक्त्वा भुवि पतितं विलपन्तं सानुजं समुत्थाप्य । यत्कुलगुरुरूचे गां तमहं० * रामम् ॥१०४७॥ अहनि त्रयोदशे ऽस्थ्नां निचये शिष्ट विलंबसे कस्मात् । इति यत्कुलगुरुरवदत्तमहं० रामम् ॥१०४८॥ त्रीणि द्वंद्वानि नरेःष्वविशेषत एव संप्रवृत्तानि । इति यत्कुलगुरु० रामम्॥ तेषु त्वमपरिहार्ये-ष्वेवं भवितुं न वेद्म्यहं हेतुं । इति यत्कुलगुरु० * रामम् ॥यत्सूतोऽथ सुमन्त्र-श्शत्रुघ्नं सर्व भूत जनिमरणे । सहजे इति गिरमवदत्तमहं० रामम् ॥१०५१॥ यद्भक्तमनुजसहितं प्रोत्थाप्याऽथो बभाषिरेऽमात्याः । अवशिष्टकार्यपूर्त्यै तमहं० रामम् ॥ अथ यात्रामिच्छन्तं-शोकाक्रान्तं समीक्ष्य यद्भक्तं । शत्रुघ्नो गिरमवदत्तमहं० रामम् ॥१०५३॥ रामो राज्यं त्यक्तुं-न्याय्यं स्त्रीविजित-तातवचनात्किं । इत्याह सयद्भक्त तमहं० धृत० रामम् ॥१०५४॥ * पितरं निगृह्य कस्माद्रामं नो लक्ष्मणोऽभ्यषेचयत । इत्याह स-यद्भक्तं तं हृदि कलयेऽटवीस्थितं रामम् ॥१०५५॥ इति संभाषण-काले-द्वास्थाः कुब्जामलंकृतां दृष्ट्वा । यदवरजायावोचस्तं हृदि० रामम् ॥१०५६॥ द्वास्थैरानीतान्ता-मुद्वीक्ष्याथो जगाद सभ्यान्गाम्। यदवरजोऽसहमानस्तं हृदि० रामम् ॥१०५७॥ दुःखनिदानं सेयं कर्मफलं सम्यगश्नुतामधुना । इति यदवरजो जगृहे तं हृदि कलये, रामम् १०५८॥ इति शत्रुघ्नगृहीतां-क्रोशन्तीं तां विमोचयामास । यन्माता कौसल्या तं हृदि कलयेऽटवीस्थितं रामम् ॥१०५९॥ अथ कुब्जां कर्षन्तं-निन्दन्तं स्वां मुहुश्च शत्रुघ्नम् । यद्भक्तायोचेऽबा-तं हृदि०रामम् ॥१०६०॥ त्वं पुत्राऽद्य निवारय शत्रुघ्नं मन्थरां वि-

निघ्नन्तं । इति सो चे यच्छ्रक्तं तं हृदिकलयेऽटवीस्थितंरामम् १०६१
यद्भक्तश्श्रुत्वा गां शत्रुघ्न स्त्री त्वया न हन्तव्या । इत्युक्त्वाऽह प्रमुवं तं हृदि० रामम् ॥१०६२॥ कैकेयि गच्छ दूरं-रामाद्भीत्या नहन्मि पापां त्वाम् । इति गिरमाह यदनुजस्तं हृदि कलये० रामम् १०६३
शत्रुघ्नोपि तदानीं ज्येष्ठगिराऽमुक्त-मन्थरां पापाम् । यत्पदसरसिज-भक्तस्तं हृदि, रामम् ॥१०६४॥ कल्ये चतुर्दशेहनि सर्वे पौरास्समेत्य सचिवैर्द्राक् । यद्भक्तं गिरमूचुस्तं हृदि० रामम् ॥१०६५॥ स्वर्गमगात्त्वत्तातो ज्येष्ठो रामोप्यगाद्वनं भ्रात्रा । इत्यवदन्यद्भक्तं तं हृदि० रामम् ॥१०६६॥ राज्यमराजकमद्य त्वं भव राजा हितार्थमस्माकम् इत्यवदन्यद्भक्तं तं हृदि० रामम् ॥ अथ तान्सप्रत्यवद-द्यद्भक्तश्शास्त्र संमतं वचनम् । द्राक्पौरान्सामात्यांस्तं हृदि० रामम् ॥१०६८॥ नाहं भोक्तुं राज्यं-कुशलो रामे विवासिते राज्ञा । इति यद्भक्तोऽभाणीत्तं हृदि० रामम् ॥१०६९॥ अथ यद्भक्तो दृष्ट्वा-सर्वं भाण्डं तदाभिषेचनिकम् । चक्रे प्रदक्षिणं द्राक्तं हृदि० रामम् ॥१०७०॥ न गिरमिमां यूयं मां-योग्या वक्तुं वनस्थिते ज्येष्ठे । इत्यवदद्यद्भक्तस्तं हृदि० रामम् ॥१०७१॥ पाल्याद्रामो राज्यं वनवासमहं करोमि तत्प्रतिभूः । इत्यवदद्यद्भक्तस्तं हृदि० रामम् ॥१०७२॥ सेनासहितो गत्वा-राममरण्यादिहानयाम्यधुना । इत्यवदद्यद्भक्तस्तं हृदि० रामम् ॥१०७३॥ न सकामां कैकेयीं-कुर्यामहं कदाऽपि पापिष्ठाम् । इत्यवदद्यद्भक्तस्तं हृदिकलयेऽटवीस्थितं रामम् ॥१०७४॥ क्रियतां मार्गस्सम्यक्-शिल्पिभिरित्याह मन्त्रिणस्साक्षात् । यस्याऽनयनार्थमसौ तं हृदि० रामम् ॥१०७५॥ अथ तद्वचनं श्रुत्वा-त्वरमाणाः कार्यकारिणोऽकुर्वन् । यस्यानयनाय स्तुतिं तं हृदि० रामम् १०७६
तक्षकवार्धकखनक-प्रमुखा मार्गं तदा समीचक्रुः । यत्प्रत्यागमनमुदा तं हृदि० रामम् ॥१०७७॥ छिन्दन्तो भिन्दन्तो-वृक्षांश्शैलांश्च

मार्गमपातेनु।यत्प्रत्यागमनमुदा तं हृदि कलयेऽटवीस्थितं रामम् ॥ ब्रह्म क्षत्र प्रमुखं-चातुर्वर्ण्यं सभां विवेशततः । यत्प्रत्यागमनमुदा तं हृदि० रामम् ॥१०७९॥ अथ गिरमाहवसिष्ठो-यस्य कनिष्ठं तदा सभा मध्ये । कालज्ञोऽपि विधिज्ञस्तं हृदि० रामम् ॥१०८०॥ दत्तं पित्रा भ्रात्रा-राज्यं भोक्तुं त्वमर्हसीत्यवदत् । यद्भक्तं स सभायां तं हृदि रामम् ॥१०८१॥ श्रुत्वागुरुवचनमथो-ध्यात्वा रामं हृदा च यद्भक्तः वाचं गुरुमूचे द्राक्तं हृदि० रामम् ॥१०८२॥ ज्येष्ठे जाग्रति कथमह मन्याय्यं राज्यपालनं कुर्याम् । इति गुरुमाह यदनुजस्तं हृदि० रामम् ॥१०८३॥ नाहं पापं कुर्या-मस्वर्ग्यं कीर्तिहानि कृच्च गुरो । इति यद्भक्तोऽरोदीत्तं हृदि० रामम् ॥ १०८४ ॥ कथमिक्ष्वाकोर्वंशे जातोहं पापमाचरेयमिदं । इति यद्भक्तोऽरोदीत्तं हृदि० रामम् ॥ आर्यं विनिवर्तयितुं-न समर्थ श्चेद्वनाद्वनस्थस्याम् । इति यद्भक्तोऽरोदीत्तं हृदि० रामम् ॥१०८६॥ आज्ञापयदथसूतो-यद्भक्तगिरा तदा मुदा सैन्यं । रथगजवाजियुतं द्राक्तं हृदिकलये० रामम् ॥१०८७॥ यस्यनिवर्तन यात्रां-श्रुत्वा नार्यो भटानथाऽत्वरयन् । सूताज्ञापन-काले तं हृदि ० रामम् ॥१०८८॥ सज्जं बलमथ दृष्ट्वा-त्वरयस्वरथं ममेति यद्भक्तः । आज्ञापयत सुमन्त्रं तं हृदि० रामम् ॥१०८९॥ सूताद्यारण्यगतं-राममिहानेतुमुद्यतोऽहं द्राक् । इति तं प्राह यदनु-जस्तं हृदि कलयेऽटवीस्थितं रामम् ॥१०९०॥ अथ यद्भक्तोक्तगिरं श्रुत्वा सर्वे तमन्वगुर्यानैः । गजतुरगाद्यैःस्तोषात्तं हृदि० रामम् ॥ ॥१०९१॥गंगातीरमविक्ष त्सैन्यं यद्भक्तपालितं त्वरया । रथगज-हयपत्त्याद्यंतं हृदि० रामम् ॥१०९२॥ अत्र स्थित्वा प्रातः-प्रतरि-ष्यामो नदीमिति प्रोचे । यद्भक्तस्सचिवान्गां तं हृदि० रामम् ॥ तत्र निविष्टां ध्वजिनीं दृष्ट्वा स्वज्ञातिबान्धवानूचे । दाशपतिर्यस्य सखा तं हृदि० रामम् ॥१०९४॥ आयाति कोविदार-ध्वजचिह्नो

दुःखचित्त इव भरतः। इति तान्यस्यसखोचे तं हृदिकलयेऽटवीस्थे तं रामम्॥१०९५॥ दाशान्बन्धयितुं वा-हन्तुं वा भ्रातरं समायाति। इति तान्यस्य सखोचे तं हृदि० रामम् ॥१०९६॥ राज्यश्रियं समग्रामन्विच्छन्भ्रातरं सहन्यात्किम्। इति यन्मित्रोऽशङ्कत तं हृदि० रामम् ॥१०९७॥ यूयं सर्वे नावां-रक्षायै वसत शस्त्रिबलसहिताः। इति यस्यसखाऽहगिरं तं हृदि० रामम् ॥१०९८॥ भक्तश्चेद्दाशरथौ वयमेनं तारयेम स बलं द्राक्। इति यस्यसखाऽहगिरं तं हृदि० रामम् ॥१०९९॥ इत्युक्त्वा मूलफलं मद्यं मांसं मधूनि संगृह्य। यद्भक्तमयात्सगुहस्तं हृदि० रामम् ॥११००॥ गुहमायान्तं श्रुत्वा-सूतमुखादाजुहाव तं प्रीत्या। रामसखं यद्भक्तस्तं हृदिकलये०रामम्॥ * ॥११०१॥ आगम्याथ प्रह्वो ज्ञातिभिरानीतमधुफलादिगुहः। दत्त्वोचे यद्भक्तं तं पितृवाक्ये स्थितं भजे रामम् ॥११०२॥ इह रात्रिं गमयित्वा-श्वो भवगन्तातराङ्गिणीं तीर्त्वा। इत्याह स यद्भक्तं तं पितृवाक्ये० रामम् ॥११०३॥ इत्युक्तो यद्भ्राता-तुष्टो वचनाद्गिरं तमाह पुनः। श्रुतपूर्वस्तव गुणइति तं पितृवाक्ये० रामम् ।११०४। अद्य भरद्वाजमुनेःकतरेण पथाऽऽश्रमं गमिष्यामि। इति यद्भक्तोऽपृच्छत्तं पितृवाक्ये० रामम् ॥११०५॥ तच्छ्रुत्वा दाशपतिर्दृष्ट्वा सैन्यं तदा यदनुजस्य। शङ्कितचित्तोऽपृच्छत्तं पितृवाक्ये स्थितं भजे रामम् ॥११०६॥ भ्रातुर्विषये दुष्टः-कच्चिन्नव्रजसि भरत वद सत्यम्। इति यस्य सखाऽपृच्छत्तं पितृ० रामम् ॥११०७॥ इति पृच्छन्तं गुहमथ-यद्भ्रातोचे वचोऽर्थवद्दुःखात्। मयि तव शङ्का कुत इति तं पितृवाक्ये० रामम् ॥११०८॥ ज्येष्ठो भ्राता पितृसम-इति शास्त्रीयं वचोऽप्यहं जाने। इतिगिरमाह यदनुजस्तं पितृवाक्ये० रामम् ॥११०९॥ ज्येष्ठं तं काकुत्स्थं-विनिवर्तयितुं प्रयाम्यहं विपिनं इति गिरमाह यदनुजस्तं पितृवाक्ये स्थितं भजे रामम् ॥१११०॥

नान्या बुद्धिः कार्या मयि गुह सत्यं ब्रवीमि रामसख । इतिगिर-माह यदनुजस्तं पितृवाक्ये स्थितं भज रामम् ॥१११॥ श्रुत्वेदं भरतवचो यत्राद्राज्यं जिहाससि प्राप्तम् । इति तं यस्य सखोचे तं पितृ०रामम् ॥११२॥ अथ यदवरजो रात्रौ निद्रां न प्राप किञ्चिदपि तल्पे । रामनिवर्तनचिन्तस्तं पितृ० रामम् ॥११३॥ तत्रगुहो यद्भक्तं-शोकाक्रान्तं सहानुजं दृष्ट्वा । आश्वासयदथ गीर्भिस्तं पितृ० रामम् ॥११४॥ तत्र तरुमूले ज्येष्ठो रात्रावत्रसद्विदेहजासहितः । इति यस्य सखोचे गां तं पितृ० रामम् ॥११५॥ कल्ये सोऽनुज-सहितो वल्कलवसनो जटाधरश्चाभूत् । इति यस्य सखोचे गां तं पितृ०रामम् ॥११६॥ गंगामथर्तीत्वाऽगा त्सीतासाहितोऽनुजेन ते ज्येष्ठः । इति यस्य सखोचे० रामम् ॥११७॥ श्रुत्वैवं गुहवचनं यद्भक्तं भुवि निपत्य निश्चेष्टम् । शत्रुघ्नोऽद्राक्षीद्राक्तं पितृ० रामम् ॥ ॥११८॥ आगत्य स विधर्मनं-दृढमालिङ्ग्याऽरुदत्सयद्भक्तम् । मातृजनानां पुरतस्तं पितृवाक्ये स्थितं भज रामम् ॥११९॥ यन्माताऽगत्यद्रागभरतं पप्रच्छदुःखसन्तप्ता । व्याधिः किं बाधत इति तं पितृ० रामम् ॥१२०॥ भर्ता मे नाकमगात् पुत्रश्च वनं त्वमेव मे प्राणः । इति तं यन्मातोचे तं पितृ० रामम् ॥१२१॥ रामे वा मैथिल्यां-सौमित्रौ वा श्रुतं किमश्राव्यम् । इति यन्माता-ऽपृच्छत्तं पितृवाक्ये स्थितं भज रामम् ॥१२२॥ आश्वास्यैनां भरतोऽपृच्छद्रामस्य रात्रि वृत्तान्तम् । यत्सखमतिदुःखार्तस्तं पितृ० रामम् ॥१२३॥रात्रावत्रसञ्जाता ऽनुजसीताभ्यां सहकृत्व तरुमूले । इति यत्सखमप्राक्षीत्तं पितृ० रामम् ॥१२४॥ कस्मिंश्छयने शिश्ये किं बुभुजे वद गुहाद्य मह्यं त्वम् । इति यदवरजोऽपृच्छत्तं पितृ० रामम् ॥१२५॥ यद्भक्तगिरं श्रुत्वा-तुष्टोऽभाणीत्तदा निषादेशः । रामस्य रात्रिचरितं तं पितृ० रामम् ॥१२६॥ उच्चावचमन्नम-

*स्वीकृतमेव व्रतस्य लोभिया। इत्याह सयदुक्तं तं पितृवाक्येस्थितं भजरामम् ॥११२७॥ देयं मया द्विजेभ्यो-नाहं गृह्णामि किञ्चिदित्युक्तं इत्याह स यदुक्तं तं पितृ, रामम् ॥११२८॥ लक्ष्मणदत्तं सलिलं पीत्वा कार्षीत्तदोपवास्यमसौ। इत्याह स यदुक्तं तं पितृ, रामम्॥ तत्पीतशेषममृतं-सीतासौमित्रिरप्यपात्तुष्ट्या। इत्याह स, रामम्॥ लक्ष्मणनिर्मितशयनं-सीतासहितो विवेश ते ज्येष्ठः। इत्याह स, रामम् ॥११३१॥ पादौ प्रक्षाळ्य तयो-रपचक्रामाथ लक्ष्मणोऽपि बहिः। इत्याह स, रामम् ॥११३२॥ तृणनिर्मिततल्पं त्वं-पश्य-पुरोवर्तिनीं गुदीमूले। इत्याह स, रामम् ॥११३३॥ सज्यं कृत्वा चापं-वृक्षं परितश्चचार सौमित्रिः। इत्याह स० रामम् ॥११३४॥ *श्रुत्वेदं गुहवचनंयदवरजः प्राहगांचजननीस्ताः। रामस्य शयनमिदमिति तं पितृ, रामम् ॥११३५॥ अद्य प्रभृतिशयिष्ये-भूमावथ वा तृणेषु नान्यस्मिन्। इत्याह यदनुजो गां-तं पितृ, रामम् ।११३६। अजिनजटाचीरधरः फलमूलाशी ध्रुवं भविष्यामि। इति यदुक्तोऽवादीत्तं पितृवाक्ये, रामम्॥ ११३७॥ आर्यार्थमरण्येऽहं-वत्स्यामि चतुर्दशाब्दपूर्त्यन्तम्। इत्याह यदनुजो गां तं पितृ, रामम्॥ आर्योलक्ष्मणसहितो-गत्वाऽयोध्यां बिभर्तुराज्यधुरम्। इत्याह यदनुजो गां तं पितृ, रामम् ॥११३९॥ इति मातृर्गिरमुक्त्वा-शत्रुघ्नं प्राह दुःखितो भरतः। यत्पदसेवाचिन्तस्तं पितृ, रामम्।११४०। शत्रुघ्न त्यज निद्रां गुहमाहूय शीघ्रमेव गत्वा त्वम्। इति गामाह यदनुजस्तं पितृ, रामम् ॥११४१॥ नाहं स्वपिमीदानी-मार्यध्यानान्न वच्मि किञ्चिदहम्। इत्याह स यदवरजं तं पितृ, रामम्॥ ॥११४२॥ इति संवदतोर्भ्रात्रो रामस्य गुहो वचो बभाणेदम्। यदुक्तं मुदितमनास्तं पितृ, रामम् ॥११४३॥ कच्चिद्गंगातीरेऽवात्सीस्सैन्ये नभरत रात्रिमिमाम्। इति यस्य सखाऽपृच्छत्तं पितृ०

रामं॥ अथ बन्धुजनेन गुहोनौकास्समुपाहरत्सकल्याणीः। यद्भक्तस्स्नेह वशात्तं पितृवाक्ये स्थितं भज रामम् ॥११४५॥ अथ सैन्यानुज-सहितो यद्भक्तो मातृबन्धुगुरु पूर्वम्। अतरन्नावा गंगां तं पितृ० रामम् ॥११४६॥ मैत्रमुहूर्ते प्रययौ-यद्भक्तस्सेवितुं भरद्वाजम्। दूरे निवेश्य सेनां तं पितृ० रामम् ॥११४७॥ पद्भ्यामथ यद्भक्तोऽवि-स्मृद्गुरुणा तदाश्रमं भक्त्या। रामस्थिति विविदिषया तं पितृ० रामं॥ ॥११४८॥ यत्कुलगुरुमथ दृष्ट्वा-त्रस्याद्रागुदचलत् भरद्वाजः शिष्यैः स्सह पूजयितुं तं पितृ० रामम् ॥११४९॥ यद्भ्रात्रा स भ्रात्रा-विहि-तनतिस्तात्रपूजयत्समुदा। शिष्यानीतैः पाद्यैस्तं पितृ० रामम् ॥ ॥११५०॥ कुशलमुभावप्राष्टा-मन्योन्यं तौ तपोवने राज्ये। यत्कुल गुरुपूजान्ते तं पितृ० रामम् ॥११५१॥ यत्स्नेहबन्धनात्तं-भरतं पप्र-* च्छ हेतुमागमने। स भरद्वाजमहर्षिस्तमृषिध्येय सदा भज रा॰म्॥ ॥११५२॥ वनमागतमद्य त्वां-दृष्ट्वा स्वान्तं ममापि नाशुध्यत्। इति स यद्वरजमूचे तमृषिध्यय० रामम् ॥११५३॥ भोक्तु ...-मकण्टक-मद्य त्वं पापमाचरिष्यसिवा। इति सयद्वरजमूच० रामं॥ स्त्रीजिततातस्य गिरा-राज्यविहीनं करोषि किं रामे। ...ि स य० ॥११५५॥ इत्थं तत्कटु-वचनं श्रुत्वा पर्यश्रुलोचनस्तमृषिम्। ...क्तः प्रत्यवदत्तमृषि० रामम् ॥११५६॥ यदि मां भगवानेवं-मनुते मम जन्म निष्फलं भवति। इति तं यद्भ्रातोच तमृषि० ...मम ॥११५७॥ माता मे पापिष्ठा यद्वोचत्तन्न मेऽद्य कुशल करम्। इति तं०रामम्॥ आर्यं प्रतिनेतुमहं-काननमागच्छमद्य हे भगवन्। ...ति तं यद्भ्रातो चे तमृषि० रामम् ॥११५९॥ अथवा नाहं यास्याम्यधुनाऽयोध्यां विहीनरामपदाम्। इति तं य० रामम् ॥११६०॥ आ...ो रामो भगव-न्काऽस्ते मे दर्शनार्थिने वदभो। इति तं य० रामम्॥११६१॥ इत्थं भरतेन तदा-पृष्टोहृष्टो मुदा भरद्वाजः। यद्भक्तं प्रत्यवदत्तमृषि० रामम् ॥११६२॥ जाने तव हृदयगतं-भावं दार्ढ्याय वाक्यमिद-

मवद्म । इत्याह स यद्भक्तं तमृषिध्येयं सदा भजे रामम् ॥ जाने रामं सीतानुजसहितं चित्रकूटकृतवासम् । इत्याह स यदवरजं तमृषिध्येयं सदा भजे रामम् ॥११६४॥ अद्य स्थित्वाऽद्य स्त्वं गन्तासि गिरिं मयाकृतातिथ्यः । इत्याह स यद्भक्तं० रामम् ॥११६५॥ सेनान्विताय तुभ्यं कर्तुं वाञ्छाम्यहं मुदाऽऽतिथ्यम् । इत्याह स य० रामम् ॥११६६॥ आनयतां सेनां द्राक् प्रीत्याभुक्त्यै मदाश्रमाय त्वम् । इत्याह स य० रामम् ॥११६७॥ इत्युक्त्वाऽथ महर्षि-र्यद्भक्तं स्वीयमग्निहोत्रगृहम् । माविक्षन्मुदितमनास्तमृषिध्येयं सदा भजे रामम् ॥११६८॥ ध्यात्वा सर्वान्देवा-नाह्वयदातिथ्यमाशु कारयितुम् । यद्भक्ताय महर्षिस्तमृषिध्येयं० रामम् ॥११६९॥ कल्पतरुं कामदुघं नन्दनवनमप्यथाऽह्वयन्मौनी । यद्भक्तमुदे तपसा तमृषिं० रामम् ॥११७०॥ विविधं भक्ष्यं लेह्यं चोष्यं खाद्यं तदासृजन्मौनी । यद्भक्तमुदे तपसा तमृषिं० रामम् ॥११७१॥ मद्यनदीराज्यनदीस्तैलनदीराम्रपुण्यफलवृक्षान् । असृजद्यद्भक्तमुदे तमृषि० रामम् ॥११७२॥ तद्ध्यानादिंद्राद्या-मरुतोप्याजग्मुराश्रमं तस्य । यद्भ्रातुस्तुष्ट्यर्थं तमृषि० रामम् ॥११७३॥ रंभाद्या अप्सरसोप्याजग्मुर्वैणिकैस्तदा वासम् । यद्भ्रातुस्तुष्ट्यर्थं० रामम् ॥११७४॥ एतैस्सभरद्वाज-स्सैन्यं यद्भक्तपालितं तृप्तम् । चक्रे सन्तुष्टमनास्तमृषि० रामम् ॥११७५॥ यद्भक्तसैन्यमत-त्तृप्तं बहुधा मुनिं प्रशश्लाघ । कथमिदमृषिणा कृतमिति तमृषि० रामम् ॥११७६॥ अथ यद्भक्त सबलं-गमिता रात्रिस्सुखं त्वया भरत । इति सम पृच्छत्स मुनिस्तमृषि० रामम् ॥११७७॥ सामात्यबन्धुवर्ग-स्सबलोहं तृप्तिमाप मुषिपूज्य । इति तं यद्भ्रातोचे तमृषि० रामम् ॥११७८॥ भगवन्सविधं भ्रातु-र्गच्छाम्यहमद्य करुणया भवतः । इति तं यद्भ्रा० रामम् ॥११७९॥ मन्दाकिनीति नाम्ना-तटिनी सार्धैकयो

वनेऽस्तीति। ऋषिरवदद्यद्भक्तं तमृषिध्येयंसदाभजे रामम्. तत्परतीरे रामो-निवसति रम्ये स चित्रकूटगिरौ। इत्याह स यद्भक्तं तमृषिध्येयं सदा भजे रामम् ॥११८०॥ दक्षिणमार्गेणेतो-गंगां तीर्त्वा प्रयाहि वनमार्गे। इत्याह सय० रामम् ॥११८१॥ अथ कौसल्यापि तदा-ससुमित्रा तं ननाम मुनिमान्यम्। यस्यभ्रातरि पश्यति तमृषिध्येयं सदा भजे रामम् ॥११८२॥ केकयराजसुताप्यथ-लज्जाविष्टा ननाम मुनिवर्यम्। यस्य भ्रातरि पश्यति तमृषि० रामम् ॥ मातृविशेषं ज्ञातुं मुनिमिच्छन्तं वचो बभाणेदम्। यद्भक्तो विहिताञ्जलि तमृषि० रामम् ॥११८४॥ आर्या राघवजननी-कौसल्येयं मुनेसुमित्रेयम्। इति यदवरजोऽभाणीत्तमृषि० रामम् ॥११८५॥ एतामकृत प्रज्ञां-विद्धि त्वं मातरं नृशंसां मे। इति यदवरजो० ॥११८६॥ एतां व्यसननिदानं-कैकेयीं विद्धिमातरं मम भो। इति यदवरजो० रामम् ॥११८७॥ इत्युक्त्वा तिष्ठन्तं यद्भक्तं निश्वसन्तमभिवीक्ष्य। आह भरद्वाजमुनिस्तमृषि० रामम् ॥११८८॥ दोषं त्वं कैकेय्यां मारोपय वत्स रामवनवासात्। इत्याह सयद्भक्तं तमृषि० रामम् ॥११८९॥ एतद्भविष्यति द्रा-ग्देवासुरमौनिनां सुखोदर्कम्। इत्याहसयद्भक्तं तमृषिध्येयं सदा० रामम् ॥११९०॥ कृत्वा प्रदक्षिणमृषिं-त्वभिवाद्याऽऽमन्त्र्य सैन्यसहितोऽसौ। यद्भक्तः प्रययौ द्राक्तमृषि० रामम् ॥११९१॥ काननसृत्या गत्वा मुन्युक्तं चित्रकूटगिरिसविधम्। यद्भक्तो गुरुमवदत्तमृषि० रामम् ॥११९२॥ मुनिगदितं देशन्तं प्राप्ताहि गुरो वयं नदीजुष्टम्। इति यद्भक्तोऽवोचत्तमृषि० रामम् ॥११९३॥ तापसवसतेर्योग्यो-रम्योयं चित्रकूटगिरिवर्यः। इति यद्भक्तोऽवोचत्तमृषि० रामम् ॥११९४॥ दृश्येते पुंव्याघ्रौ-तावत्र यथा तथा विचिनुयाम। इति यद्भक्तोऽवोचत्तमृषि० रामम् ॥११९५॥ अथ ददृशुर्निर्भीकाः-पुरुषा विपिनं प्रविश्य धूम

चयम्। यद्वरजाज्ञा तुष्टास्तमृषिध्येयं सदा भजे रामम् ।। तद्वचसा यद्वरजो-नाग्निस्तिष्ठत्यमानुषे देशे । इति मत्वातुष्टोभूत्तमृषिध्येयं सदा भजे रामम् ।।११९७।। सैन्यान्यथ दृष्ट्वा द्राक्कैतो गन्तव्यमद्य युष्माभिः । इति यद्भक्तोऽवादीत्तमृषि० रामम् ।।११९८।। अथवा रामसमानै-स्स्थातव्यं मुनिभिरत्र कृतवासैः । इत्यमनुत यद्भक्तस्तमृषि० रामम् ।।११९९।। अथ संपश्यन्धूमं-सैन्यं सन्यस्य तत्र ममनेच्छुः । प्रययौ यद्भ्राता द्राक्तमृषि० रामम् ।।१२००।। यश्चित्रकूट-सानौ-निवसन्सीतां कदाचिदति तुष्टः । अवदत्तुष्टां वाचं तं वनसञ्चारिणं भजे रामम् ।।१२०१।। राज्यभ्रंशनमेतद्भद्रे मां बाधते न किञ्चिदपि । इति यस्सीतामवदत्तं० रामम् ।।१२०२।। पश्येम मचलसानुं नानाविधधातुरञ्जितं भद्रे। इति यस्सीतामवदत्तं० रामम्।। शैलप्रस्थे रम्ये-रममाणान्पक्षिणोऽद्य पश्यत्वम् । इति यस्सीतामवदत्तं० रामम् ।।१२०४।। पुष्पोद्भूतो गन्धो लोके कं न प्रहर्षयेत्सीते। इति यस्सीताम० रामम् ।।१२०५।। सीते त्वत्सहवासः-कानन वासेऽपि मे मुदं तनुते । इति यस्सीताम० रामम् ।।१२०६।। कानन-वासेप्यनुज-श्शुश्रूषामावयोस्सदाकुरुते । इति यस्सीता० रामम् ।। ।।१२०७।। अमृतोपमसलिलवती-मन्दाकिन्यत्र राजते पश्य । इति यस्सीता० रामम् ।।१२०८।। अत्र वसन्बहुकालं-नाहमयोध्यां स्मरामि मनसापि । इति यस्सीता० रामम् ।।१२०९।। अत्र जटावल्कधरा-मुनयोप्यवगाह माचरन्त्युषसि । इति यस्सीता० रामम् ।। ।।१२१०।। दर्शनमगनद्योर्मे-पुरवासादधिकतोषमातनुते । इति यस्सीता० रामम् ।।१२११।। इत्थं सीतासहितो-गिरिसानुस्थो ददर्श धूळिचयम् । भरतानीकोत्थं यस्तंवनसञ्चारिणं भजे रामं ।। ।।१२१२।। श्रुत्वा यस्तुमुलरवं-सैन्योद्भूतं पतत्रिमृगभयदम् । लक्ष्मण मूचे वाचं तं वन० रामम् ।।१२१३।। सौमित्रे श्रृणु शब्दं मृगाय

भ्रातश्च कस्यचिद्राज्ञः । इति योऽनुजमाह गिरं तं वनसञ्चारिणं भजे रामम् ॥१२१४॥ सैन्यं कस्येति त्वं-धृतचापः पश्य सावधानमतिः । इति योऽनुजमाह गिरं तं० रामम् ॥१२१५॥ इत्युक्तो यद्भ्राता सम्यक्पश्यंस्तदाऽभणज्ज्येष्ठम् । आयाति भरत इति गां तं वन० रामम् ॥१२१६॥ कैकेयीसुत आवां-हन्तुं स्थिरराज्यकाम आयाति । इति गिरमाह यमनुजस्तं वन० रामम् ॥१२१७॥ आयात्यार्य स भरतो-यस्य रथः कोविदारकेतुधरः इति गिरमाह यमनुज० रामम् ॥१२१८॥ रथगजतुरगपदाति-स्कन्धस्थोऽयं विभाति दुष्टमनाः । इति गिरमाह य० रामम् ॥१२१९॥ आवां कर धृतचापावंद्यगिरिं संश्रयावहै राम । इति गिरमाहय० रामम् ॥ ॥१२२०॥ अथवाऽऽवांतिष्ठावस्सन्नद्धावत्र सज्यधनुषौ द्राक् । इति गिरमाह यदनुज० रामम् ॥१२२१॥ त्वद्विषये पापकृत-स्तस्य वधेऽहं न पापमाभिवीक्षे । इति गिर० रामम् ॥१२२२॥ एतस्मिन्निहत त्वं-कृत्स्नं राज्यं वहार्य निश्शङ्कम् । इति गिर० रामम् ॥ अद्य ससैन्यं भरतं-हत्वा धनुषोऽनृणो भविष्यामि । इति गिर० रामम् ॥१२२४॥ इत्थं सक्रुद्धमनुजं-यः परिसान्त्व्याथ वाचमवददिमाम् । माभरतेऽमर्षोऽस्त्विति तं वन० रामम् ॥१२२५॥ प्राज्ञं भरतं हत्वा-राज्ये नाहं करोमि कं धर्मम् । इति योऽनुजमभणद्गां तं वन० रामम् ॥१२२६॥ राज्यं भरतो बिभृया ल्लक्ष्मणनाहं प्रयामि साकेतम् । इति योऽनुजमाह गिरं तं०रामम् ॥१२२७॥ अनृणं पितरं कृत्वा ह्यहमप्यनृणो भवामि वनवासात् । इति योऽनुज० रामम् ॥ ॥१२२८॥ धर्मार्थकामभूमी भवतामर्थे वहामि सत्यमहम् । इति योऽनुज० रामम् ॥१२२९॥ भ्रातॄणां संग्रहणे-सुखमहमुद्दिश्य राज्यकामोऽस्मि । इति योऽनुज० रामम् ॥१२३०॥ भरतमृतौ कैकय्या माक्रोशन्त्यां किमर्थमिहराज्यं । इति योऽनुज० रामम् ॥ भरतं त्वां

शत्रुघ्नं मानदहित्वा कथं भवेच्चसुखम् । इति योऽनुजमभणद्यं तं वनसं चारिणं भजे रामम् ॥ स्नेहेनाक्रान्तमना-द्रष्टुमिहाऽऽयाति सानुजस्सोऽस्मान् । इति योऽनुज० रामम् ॥१२३३॥ कैकेयीं सविनिन्दंस्तात गिराऽऽयाति राज्यदो मह्यम् । इति योऽनुज० रामम् ॥१२३४॥ भरते निष्ठुरवाचं-त्यज वृक्षाग्रात्क्षणात्त्वमवरोहः । इति योऽनुज० रामम् ॥१२३५॥ इत्युक्तस्सौमित्रि-र्लज्जाविष्टोऽवरुह्य वृक्षाग्रात् । यत्सविधेऽवातिष्ठत तं वन० रामम् ॥१२३६॥ भरतोक्तश्शत्रुघ्नो दाशपतिश्चापि बन्धुभिस्साकम् । यं विचिनोद्गिरिविपिने तं वन० रामम् ॥१२३७॥ द्रक्ष्यामि कदाचरणा-वार्यस्याहं ममाद्य तुष्टिकरौ ॥ इति यं भरतो व्यचिनोत्तं वन० रामम् ॥१२३८॥ सिद्धार्थस्सौमित्री-राजीवाक्षं ससीतमुपचरति । इत्युक्त्वा यं व्यचिनोत्तं रामम् ॥ ॥१२३९॥ सेनान्निवेश्य मातॄरानयशीघ्रं गुरोत्वमित्युक्त्वा । पुरतोऽगाद्यद्भक्त स्तं वन० रामम् ॥१२४०॥ गच्छन्भरतःपुरतोमुन्युटजानां ददर्श मध्यस्थाम् । विपिने यत्पर्णकुटीं तं, रामम् ॥१२४१॥ उटजाद्बहिरद्राक्षी द्वल्कलमजिनं द्रुमेषु निक्षिप्तम् । यस्यावरजोभरत स्तं० रामम् ॥१२४२॥ अत्रार्यः पुंव्याघ्रो-वसतीत्यहमद्य निश्चिनोम्यनुज । इत्याह यदनुजो गां तं वन० रामम् ॥१२४३॥ अत्रार्यो व्यसनमिदं सहते बत मत्कृतेऽपि शत्रुघ्न । इति यद्भक्तोऽरोदी त्तं० रामम् ॥१२४४॥ इत्थं भरतो विलपन्महतीं पुण्यां ददर्श पर्ण कुटीम् । यस्य स सीतस्य तदा तं वन० रामम् ॥१२४५॥ स निरीक्ष्य मुहूर्तमथोराममपश्यन्निविष्टमुटजे तम् । यद्भ्राता धर्मात्मा तं वन० रामम् ॥१२४६॥ दर्भास्तृत भूस्थल्या-मुपविष्टं सानुजं सपत्नीकम् । यमपश्यद्भ्रातृभरत स्तं वन० रामम् ॥१२४७॥ दृष्ट्वा तं मुनिवेषं विलपन्वाचं जगाद यद्भ्राता । बाष्पैस्संरुद्धगळ स्तं वन० रामम् ॥१२४८॥ क्षौमांबरयोग्यकटौ वल्कं वस्तेऽद्य मत्कृते ह्यार्यः ।

इति यं दृष्ट्वाऽरोदीत्तं वनसंचारिणंभजेरामम् ॥ नवरत्नखचितमकुटं भर्तुं योग्ये विभान्ति शिरसि जटाः । इति यं दृष्ट्वाऽरोदीत्तं ,रामम् ॥ ॥१२५०॥ इत्थं भरतस्सरुदन्भूमावपतद्यदीयचरणौ द्वौ । अप्राप्यार्येति वदंस्तं भरत प्रार्थितं भज रामम् ॥१२५१॥ यस्य ववन्दे चरणा-वथ शत्रुघ्नो रुदन्सबाष्पगळः । वाचं वक्तुमनीश स्तं भरत० रामम् ॥१२५२॥ अथ तौ स्वकरेणोभा-वालिङ्ग्याश्रूण्य-वर्तयद्दृष्ट्योः । भ्रात्रोर्विश्वासाद्य स्तं० रामम् ॥१२५३॥ अथ गुह सुमन्त्रमुख्या न्नागरिकान्वीक्ष्य यस्य सहवासात् । रुरुदुर्विपिनस्था अपि तं भरत० रामम् ॥१२५४॥ आघ्राय शिरसि भरतं स्वाङ्के विनिवेश्य पर्यपृच्छद्यः । विपिनागमननिमित्तं तं भरत० रामम् ॥ ताते जीवति नगरे-भवदागमनं नहेतुमिह पश्ये । इति योऽवरजम पृच्छत्तं० रामम् ॥१२५६॥ कच्चिददात्ते राज्यं-धर्मज्ञस्सत्यवाङ्-ममाद्य पिता । इति योऽवरजमपृच्छ त्तं भरत० रामम् ॥१२५७॥ सौम्य न राज्यं भ्रष्टं-कच्चित्ते बालिशस्य रिपुभीत्या । इति योऽव-रज० रामम् ॥१२५८॥ शुश्रूषसेऽद्य तातं कच्चिद्वृद्धं वदाद्य भरत त्वम् । इति योऽवरज० रामम् ॥१२५९॥ मूर्खसहस्रेभ्यस्त्वं पण्डि-तमेकं समिच्छसि हि कच्चित् । इति योऽवरज०रामम् ॥१२६०॥ नैषीर्निद्रावशमथ-कच्चित्काले प्रबुध्यसे कच्चित् । इति योऽवरज० रामम् ॥१२६१॥ कच्चित्सुमित्रयाऽऽर्या-सुखिनी कच्चित्प्रमोदते ते-ऽम्बा । इति योऽवरज० रामम् ॥१२६२॥ काले वेतनदायी-कच्चित्त्वं भवसि सैन्यनिवहस्य । इति योऽवरज० रामम् ॥१२६३॥ कच्चित्सफलावेदा-दाराश्च तथा श्रुतं च ते सफलम् । इति योऽवरज० रामम् ॥१२६४॥ भोज्यं स्वादुकृतं त्वं-कच्चिन्नाश्नासि रहसि भूत्वैकः । इति योऽवरज० रामम् ॥१२६५॥ श्रुत्वेमां यस्य गिरं-प्रत्यवदत्सा-ञ्जलिर्गिरं भरतः । आश्रितजनकल्पद्रुं तं भरत० रामम् ॥१२६६॥

ज्येष्ठः खलु राजपदं-भजते राज्यस्य पालनाल्लोके । इत्यवदद्यं भरत स्तं भरतप्रार्थितं भजे रामम् ॥१२६७। मुख्यं धर्मं त्यक्त्वा किं कुर्यां राजधर्मवहनेन । इति यं स प्रत्यवद त्तं० रामम् ॥१२६८॥ कैङ्कर्यार्थं राज्यं त्यक्तव्यं वा भवान्वदतु शास्त्रम् । इति यं स प्रत्यवद त्तं० रामम् ॥१२६९॥ आगच्छायोध्यां द्रागद्य मयैवाभिषेचयात्मानं इति यं स प्रत्यवदत्तं० रामम् ॥१२७०॥ मयि केकयदेशस्थे त्वय्यपि वनगे पिता दिवं प्रागात् । इति यं स प्रत्यवद त्तं० रामम् १२७१ उत्तिष्ठार्य क्रियता-मुदकं पितुरद्य दत्तमावाभ्याम् । इति यं स प्रत्य० रामम् ॥१२७२॥ प्रियदत्तं पितृलोके-ऽक्षय्यं भवतीत्युशन्ति विद्वांसः । इति यं सप्र० रामम् ॥१२७३॥ शोचंस्त्वामेवार्य-नाकमगात्त्वयि निविष्टधीस्तातः । इति यं सप्रत्यवदत्तं० रामम् ॥१२७४॥ भरतोक्तां मृतिवार्तां-श्रुत्वा तातस्य मूर्च्छितो भूत्वा । निपपातधरण्यां यस्तं० रामम् ॥१२७५॥ भुवि पतितं यं दृष्ट्वा-सह वैदेह्या रुदंश्च भरताद्याः विस्मृतदेहास्सर्वे तंभरत० रामम् ॥१२७६॥ सञ्ज्ञां लब्ध्वाऽथ पुन-र्योऽवादीद्भरतमश्रुपूर्णमुखम् । बाष्पस्थगितग्रीव स्तं भरत० रामम्॥ तस्य मया किं कार्यं-यद्दुर्जातेन संस्कृतो न पिता । इति यो भरत मवादीत्तं भरत० रामम् ॥१२७८॥ भरत त्वं सिद्धार्थः-पितृसंस्कारं सहानुजो कार्षीः । इति योऽ[illegible] नं भरत० रामम् ॥१२७९॥ शून्यां राज्ञायोध्यां-नाहं प्रविशामि चिरदुःखकरीम् । इति योऽनु-जमाह गिरं तं भरत० राम[illegible] ॥१२८०॥ [illegible] वनवासे-प्यत्रैवाहं वसामि तुष्टमनाः । इति योऽनुजमाह गिरन्तं भरत० रामम १२८१ गिर मुक्त्वेत्थ भरतं-यः पत्नीमाह दुःखदं वचनम् । श्वशुरोऽम्रियत तवेति [illegible] तं भरत० राम[illegible] ॥१२८२॥ इत्थं रोदनपूर्व-वकारं यं निरीक्ष्य वैदेही । अरुदद्भृशमन्ततरां तं भरत० रामम् ॥१२८३॥ अथ सीतां विलपन्ती-माश्वास्योवाच लक्ष्मणं वाचम् । यस्तातनृप्ति-

कामस्तं भरतप्रार्थितं भजे रामम् ॥१२८४॥ आनयवल्कलमुत्तर-
मैङ्गुदपिण्याकमाहरद्राक्त्वम्। इति योऽनुजमाह गिरन्तं भरतप्रार्थितं
भजेसदारामम् ॥१२८५॥ सीताव्रजतु पुरस्तादनु सृत्य त्वं प्रयाह्य-
शाहमपि । आयामीत्यवदद्यस्तं भरत० रामम् ॥१२८६॥ यं सूतो
ऽवातारय-दालम्ब्य नदीं तदाऽनुजैस्सहितम् । कालविदाश्वास्य
तदा तं भरत० रामम् ॥१२८७॥ अम्भः पूरितमञ्जलि-मादाय रुद-
न्वचो बभाषे यः । पितरिदमुदकं तेऽस्त्विति तं भरत० रामम् ॥
॥१२८८॥ अथ गत्वा तीरं यो-हस्ते पिण्याकमैङ्गुदं बभ्रे । बदरी-
मिश्रं तु तदा तं भरत० रामम् ॥१२८९॥ भुङ्क्ष्वेदमद्य राजन्वय-
मेतादृशमन्नमश्नीमः । इति दर्भे तद्योदात्तं भरत० रामम् ॥१२९०॥
आरुह्य महीध्रं यः-पर्णकुटीद्वारमागतोऽरोदीत् । सीतासौमित्रियुत स्तं
भरत० रामम् ॥१२९१॥ सैन्यं प्रययौस्थाना-द्भरतं रामेणसङ्गतं
मत्वा । द्रष्टुं यत्पर्णकुटीं तं भरत० रामम् ॥१२९२॥ आसीनमुटज
भूमौसमपश्यन्भरत सैनिकाः पुरुषाः । तोषाद्यं साञ्जलयस्तं भरत,
रामम् ॥१२९३॥ राज्ञो दारान्पुरतः-कृत्वा यं द्रष्टुमागतोऽथगुरुः
भरतेऽनुजपौरयुते तं भरत० रामम् ॥१२९४॥ यन्माताऽऽगच्छन्ती
मार्गेमन्दाकिनीं नदीं दृष्ट्वा । आहसुमित्रां वाचं तं भरत० रामम् ॥
॥१२९५॥ तव पुत्रस्सलिलमितो-ज्येष्ठस्य वहत्यजस्रमविभक्त्या ।
इति यन्मातोचे तां तं भरत० रामम् ॥१२९६॥ पश्यात्र दक्षिणाग्रे
दर्भे निक्षिप्तमैङ्गुदं पिण्डम् । इति यन्मातोचे तां तं भरत० रामम्॥
भोक्तुश्चतुर्भिरुदधिभि-रावृतभूमेरयं कृतः पिण्डः । इति यन्माताऽ-
रोदीत्तं भरत० रामम् ॥१२९८॥ रामेण दत्तमैङ्गुद-पिण्डं सं वीक्ष्य
मन्मनः क्थ ते । इति यन्मातारोदीत्तं० रामम् ॥१२९९॥ तामा-
श्वास्य सपत्न्यः-पुरतः कृत्वोटजस्य मध्यगतम् । ददृशुः कृशगात्रं यं
* यं तं भरत० रामम् ॥१३००॥ तासां विलपन्तीनां-सहसाचो

त्थाय पादकमलानि । जग्राह कराभ्यां यस्तं धृतमुनिवेषमाश्रये रामम् ॥१३०१॥ सौमित्रिस्सर्वासां मातॄणामभ्यवादयद्भक्त्या । यत्पत्न्यां प्रणमन्त्यां तं धृतमुनिवेषमाश्रये रामम् ॥१३०२॥ तां दृष्ट्वा कृशगात्रीं रुरुदुस्सर्वा विदेहराजसुताम् । यत्पुरतो नृपपत्न्यस्तं धृत० रामम् ॥१३०३॥ अथ यो वसिष्ठपादौ जग्राहासाद्य तेन विहिताशीः। तत्रोपविवेश मुदा तं धृत० रामम् ॥१३०४॥ अथ भरतः पर्णगृहे सानुजसचिवस्ससैनिकोऽविक्षत् । यत्सविधेऽजलिसहित स्तं धृत० रामम् ॥१३०५॥ अथ यो भरतमपृच्छद्बहुसविधे त्वं किमर्थमागच्छः। इति धर्मज्ञोऽवरजं तं धृत० रामम् ॥१३०६॥ राज्यं राज्ञाहीनं त्यक्त्वेह त्वं किमर्थमागच्छः। इति योऽवरजमपृच्छत्तं धृत० रामम् ॥१३०७ चीरजटाजिनधरणे विपिनागमने च कारणं वद मे । इति योऽवरजमपृच्छत्तं० रामम् ॥१३०८॥ सर्वं तद्वद भरते त्युक्तो विहिताञ्जलिस्सगामूचे । धर्मज्ञं यं भरतस्तं धृत० रामम् ॥१३०९॥ कैकेयी दुष्टधिय स्तातस्योभौ वचो न गृह्णाव । आवामिति स यमभणत्तं धृत० रामम् ॥ पापेयं भर्तारं विगतासुं त्वां च वन्यकृतवासम् । अकरोदिति स यमभणत्तं० रामम् ॥१३११॥ विधवेयं ममभाता निरये घोरे पतत्वलं पापैः । इति यं सगिरं प्रोचे तं धृत० रामम्॥१३१२॥ आर्याद्य दासभूतं मात्यज तव पादपद्मभृङ्गं माम्। इति यं सगिरं प्रोचे तं धृत० रामम् ॥१३१३॥ अनुसृत्य वंशवृत्तं ज्येष्ठो राज्यं गृहाण धर्मज्ञ । इति यं सगिरं प्रोचे तं धृत० रामम् ॥१३१४॥ सचिवैरेभिस्साकं शिरसाऽद्याहं प्रणौमि तव पदयोः।इति यं सगिरं० रामं॥ ॥१३१५॥ नान्यां त्वदृते भ्रातः पश्यामि गतिं त्रिलोकमध्येऽहम् । इति यं सगिरं० रामम् ॥१३१६॥ इति भरतं प्रणमन्तं प्रेम्णा परिरभ्य वाचमभणद्यः । आश्रितरक्षणधुर्यस्तं धृत० रामम् ॥१३१७॥

अति बाल्याज्जननीत्वं-नार्हस्येवं विनिन्दितुं क्रोधात् । इति भरत-
मवादीद्यस्तंधृतमुनिवेषमाश्रयेरामम्॥माता पित्रोर्वार्तांत्यक्त्वा नान्य-
त्करोम्यशास्त्रीयम् । इति भरतमवादीद्यस्तं धृत० रामम्॥१३१९॥
परिपालय राज्यं त्वं-प्रविशाम्यहमद्यदण्डकारण्यम् । इतिभरतमवा
दीद्यस्तं० रामम् ॥१३२०॥ तातकृतौ भागौ नौ-कुर्वस्स्वीकृत्य पित
रमपि तुष्टम् । इति भरतमवादी० रामम् ॥१३२१॥ कल्ये मन्दाकि-
न्यां स्नात्वा-जप्त्वाऽथ भरतगुर्वाद्याः । यस्योटजमागुस्ते तंधृतमुनि-
वेषमाश्रये रामम् ॥१३२२॥ मध्ये सभमथ भरतो-यंप्रणिपत्येदमब्र-
वीद्वाक्यम् । मूर्ध्नि कृताञ्जलिबन्धस्तं धृत० रामम् ॥१३२३॥
सान्त्वितया मन्मात्रा दत्तमिदं मे ददामि राज्यं ते । इति भरतो
यमवादीत्तं धृत० रामम् ॥१३२४॥ अश्वगतिर्नखरस्य-स्यादि ति-
लोकप्रथां त्वमपि वेत्सि । इति भरतोय० रामम् ॥१३२५॥ गरुड-
गतिःकलविंके यदि सामर्थ्यं तवाऽपि मयि सुलभं । इति भरतो-
यमवादीत्तं ० रामम् ॥१३२६॥ पङ्गुर्यद्वृक्षागस्थितफलभोक्ता भवा-
मि राजाऽहं । इति भरतो यमवादीत्तं धृत० रामम् ॥१३२७॥इत्थं
विलपन्तं यो-भरतमवोचद्गिरश्रुदुःखहराम् । पौरजनसचिवमध्ये
तं धृत० रामम् ॥१३२८॥ ईश्वरवशगास्सर्वे-कस्यापि नरस्य दैवतं
वशगम् । न स्यादिति योऽभाणीत्तं धृत० रामम् ॥१३२९॥जातस्य
च मरणं ध्रुवमिति विद्वांसः फणन्त्यभिज्ञगिरम् । इति योऽवरजम-
वादीत्तं० रामम् ॥१३३०॥ संयोगाः कथ्यन्ते-सूरिभिराप्तैश्च विप्र-
योगान्ताः । इति योऽनुजमवदद्वां तं धृत० रामम् ॥१३३१॥ नन्द-
न्त्युदिते सूर्येऽस्तमिते च नरास्स्वदेहनाशं नो । गणयन्तीत्यवदद्यस्तं
धृत, रामम् ॥१३३२॥ एवं स्त्रीपुत्राद्या-मिळिता भूत्वा पृथक्पृथग्या-
न्ति । इत्यनुजं योऽवादीत्तं धृत० रामम् ॥१३३३॥ अस्मत्तातस्स्वर्गं
यज्ञैरिष्ट्वा यशस्व्यगात्स्वर्गम् । इत्यनुजं योऽवादीत्तं० रामम् १३३४

* पूर्णायुरिह स राज्यं-भुक्त्वा स्वर्गं जगाम नहि शोच्यः। इतियो ऽनुजमाह गिरं तं धृतमुनिवेषमाश्रये रामम्॥१३३५॥ गत्वाऽयोध्यां पालययामि च वचसा पितुस्त्वहं विपिनम्। इति योऽनुज० रामं॥ पितृशासनमावाभ्यां-समनुष्ठेयं यथार्थमिह विद्वन्। इति योऽनुज० रामम् ॥१३३७॥ इत्थं प्रोक्त्वा विरते-यस्मिन्प्रोवाच दुःखितोभरतः बाष्पपरिप्लुतनेत्र स्तं धृत० रामम् ॥१३३८॥ मद्धेतोर्मम मात्रा कृतमद्यैतन्निकृन्तति स्वान्तम्। इति यं समाह गिरं तंधृत० रामम्॥ ॥१३३९॥ धर्मेणास्मि निबद्ध-स्तदिमां नो हन्मि मातरं पापाम्। इति यं स प्राह गिरं तं धृतमुनिवेष० रामम् ॥१३४०॥ कैकेयीं मां पितरं-सुहृदो बन्धूंश्च पाहि नस्सर्वान्। इति यं समाह गिरं तंधृत, रामम् ॥१३४१॥ क्वारण्यं क्वक्षात्रं क्वजटावल्के क्व राज्यभरणमहो। इति यं समाह गिरं, रामम् ॥१३४२॥ वर्णचतुष्टयमध्ये-भूपालन-मुत्तमं द्वितीयस्य। इति यं स प्राह गिरं तं धृत० रामम् ॥१३४३॥ आश्रममध्ये श्रेष्ठं-गार्हस्थ्यं शास्त्रसंमतं ब्रुवते। इति यं स प्राह गिरं तं धृतमु० रामम् ॥१३४४॥ पित्र्यं राज्यमकण्टक-मनुशाधित्वं सुहृद्भिरभिषिक्तः। इति यं स० रामम् ॥१३४५॥ करुणां मयि कृपणे त्वं कुरुकल्याणीं विदेहजा जाने। इति यं स० रामम् ॥१३४६॥ इत्यनुजेनोक्तो यः-कृत्वा नधियं स्वराज्यभरणार्थाम्। अवदद्भरतं खिन्नं तं धृत० रामम्॥१३४७॥उपपन्नं तव वाक्यं-दाशरथेः किन्तु मद्वचश्शृणुयाः। इति योऽनुजमाह गिरं० रामम् ॥१३४८॥ भ्रातः पिता पुरा तव-मात्रर्थे राज्यशुल्कदोभून्नु। इति योऽनुजमा०रामम्॥ * देवासुरसंग्रामे-त्वन्मात्रे राड्वरद्वयं प्रददौ। इति योऽनुजमाहगिरं तं सत्यधृतिं भजे सदा रामम् ॥१३५०॥ तस्मादद्यवरद्वय-मेतद्राजा ददौ तव जनन्यै। इति योऽनुजमाह गिरं तं० रामम् ॥१३५१॥ तस्मादावां पितरं-कुर्वस्सत्यार्थ वाचकं तुष्टौ। इति योऽनुजमाह

गिरं तं सत्यधृतिं भजे सदा रामम् ॥१३५२॥ मोचय राजानमृणा तुष्टां कृत्वा स्वमातरं भरत । इति योऽनुजमाह गिरं तं, रामम् ॥ ॥१३५३॥ पुन्नाम्नो नरकाद्रात्त्राणादावां भवाव राट्पुत्रौ । इतियो ऽनुजमाह गिरन्तं, रामम् ॥१३५४॥ जाबालिस्तत्र गिरं-धर्मापेतां जगाद धर्मरतम् । भरताश्वासकृतं यं तं, रामम् ॥१३५५॥ माभूत्ते बुद्धिरियं-दशरथसूनोर्निरर्थिकाऽश्राव्या । इत्याह द्विजानियं तंरामं ॥ कस्य पुमान्को बन्धुः-कस्याप्यकेन किं वदाद्य त्वम् । इत्याह द्विज-नियं तं, रामम् ॥१३५७॥ जायत एको जन्तुर्नश्यत्येकस्स एव कालगतौ । इत्याह द्विज, रामम् ॥१३५८॥ मत्तातो मन्माते त्यशिवा बुद्धिर्भवत्यहो नृणाम् । इत्याह द्विज, रामम् ॥१३५९॥ पित्र्यंराज्यं त्यक्त्वा-नार्हसि कष्टं वनं त्वमभिगन्तुम् । इत्याह द्विज, रामम् ॥ ॥१३६०॥ दशरथराजस्य च ते-कस्संबन्धस्स एक एकस्त्वम् । इत्याह द्विज, रामम् ॥१३६१॥ शुक्लं रुधिरं मातरि-संपृक्तं भवति जन्मने पुंसः । इत्याह द्विज, रामम् ॥१३६२॥ केनापि भुक्तमन्नं तृप्त्यै भूयात्कथं तदन्यस्य । इत्याह द्विज, रामम् ॥१३६३॥ गृह-गतपुंसा भुक्तं-पाथिकक्षुद्वारणाय किं भूयात् । इत्याह द्विज, रामम्॥ ॥१३६४॥ दीक्षस्व देहि धनमिति विहिता मेधावित्रिभिर्बहुग्रन्थाः । इत्याह द्विज, रामम् ॥१३६५॥ स्वीकुर्याः प्रत्यक्षं-सन्त्यजबुध्या परोक्षमतिनिन्द्यम् । इत्याह द्विज, रामम् ॥१३६६॥ त्वं परिपालय राज्यं-पित्र्यं भरतप्रसादितो धर्मात् । इत्याह द्विज, रामम् ।१३६७। श्रुत्वेदं जाबाले-र्निर्मर्यादं वचः प्रकोपयुतः । ऊचे तं वाचं यस्तं, रामम् ॥१३६८॥ कार्योपमितमकार्यं-पथ्योपममेव भाषसेऽपत्थ्यम् । इति तं गिरमूचे यस्तं, रामम् ॥१३६९॥ त्वद्वचनादहमेवं यद्यभवं लोक निन्द्य एवस्याम् । इति तं गिरमूचे यस्तं सत्यधृतिं भजेसदा रामम् ॥१३७०॥ अहमेवंचेदभवंलोकस्स्वच्छंदवृत्तिभाक्चभवेत् ।

इति तं गिरमूचे यस्तं सत्यधृतिं भजे सदा रामम् ॥१३७१॥
लोकंपातिस्त्वेकोह्यन्यः पालयति वंशमात्मीयम्। इति गिरमूचे यस्तं
तंसत्य,रामम्१३७२मज्जतिनिरये-कश्चित्कश्चित्स्वर्गे महीयते पुरुषः।
इति यो द्विजमाकुध्यस्तं सत्य, रामम् ॥१३७३॥ शतमिष्ट्वा यज्ञाना
मिन्द्रो राजा त्रिविष्टपस्यासीत्। इत्याह द्विजनिं यस्तं सत्य, रामं॥
स्थितिमाश्रुत्यारण्ये-राज्ञस्सविधे कथं न कुर्याताम्। इति यो द्विज-
माह गिरं तं सत्य, रामम् ॥१३७५॥ इत्थं रुषा वदन्तंयं जाबालि
स्समीक्ष्य सानुनयम्। आस्तिकमवदद्वचनं तं सत्य, रामम्।१३७६।
भवतो निवर्तनार्थं-नास्तिकवचनं मयोक्तमधुनेति।जाबालिर्यमवादीत्तं
सत्य, रामम् ॥१३७७॥ जाबालिरास्तिकोयं-सर्वं जानाति वृत्तमा-
चरितुम्। इति यं कुलगुरुरूचे तं सत्य, रामम् ॥१३७८॥ अद्य
स्मृत्वा पूर्वा-न्राज्ञस्त्वं पाहि राज्यमक्षय्यम्। इति यं कुलगुरुरूचे,
रामम् ॥ १३७९ ॥ गुरवस्त्रय एवैते-माताऽऽचार्यः पिता च शास्त्रो-
क्ताः। इति यं कुलगुरुरूचे तं सत्य, रामम् ॥१३८०॥ प्रज्ञादाना
च्छ्रेष्ठो-गुरुरेवोक्तस्समस्तशास्त्रेषु। इति यं कुलगुरु, रामम् ॥१३८१॥
मम वचनाद्धर राज्यं-न त्याज्यं तत्त्वया च बुद्धिमता। इति यंकुल
गुरु, रामम् ॥१३८२॥ भरतस्य प्रार्थनया-स्वीकुरु राज्यं ममापि
तुष्ट्यै त्वम्। इति मृदुगुरुणोक्तो य स्तं सत्य, रामम् ॥१३८३॥
राज्ञो जनयितु राज्ञां-मिथ्या नो भरतकर्तुमर्हमीष्टे। इति योऽवरज-
मवादी त्तं सत्य, रामम् ॥१३८४॥ इत्युक्तोऽथ स भरतो-व्यास्तर
भूम्यां सुमन्त्रदर्भान्द्राक्। इत्यवदद्यत्पुरत स्तं सत्य, रामम्।१३८५।
यावन्न प्रतियास्य-त्यार्यस्तावच्छयेऽहमत्रभुवि। इत्याह स यत्पुरतस्तं
सत्य, रामम् ॥१३८६॥ दर्भास्तृतभूमिं यो-दृष्ट्वा प्रोचे वचो गिरं
न्याय्यम्। न क्षात्रोऽयं विधिरिति तं सत्यधृतिं भजे सदा रामम् ॥
नरशार्दूलोत्तिष्ठ-त्वं पात्रं नासि भूमि शय्यायाः। इति योऽनुजमाह

गिरं तं सत्यधृतिं भजे सदा रामम् ॥ अथ पौरा भरतं तं-साध्यो न भवेन्निवर्तनोद्योगः । यस्यार्यस्येत्यूचुस्तं सत्यधृतिं भजे सदा रामम् ॥१३८९॥ अथ यस्य गिरा भरतस्स्पृष्ट्वा ज्येष्ठं जलं चगिर-मूचे । परिषण्मध्ये विनयार्त्तं सत्य, रामम् ॥१३९०॥ काननसञ्चार महं-प्रकरोमि भवान्प्रयातु साकेतम् । इत्यनुजो यमवादी तं सत्य, रामम् ॥१३९१॥ अनुजोक्तिं श्रुत्वा यो गिरमवदत्तस्य तुष्टिकामो द्राक् । उपधिर्नात्रोचित इतितं सत्य, रामम् ॥१३९२॥ पित्राविक्रीतं वा क्रीतं वा तत्सुतेन सोढव्यम् । इति योऽनुजमाह गिरं तं सत्य, रामं ॥ त्वयि बुद्धिस्सहजाऽऽस्तेराक्षितुमेकस्समर्थ एव भुवम् । इति योऽनुज , रामम् ॥१३९४॥सचिवैर्मित्रैरार्यैः-कार्यं संमन्त्र्यकारय क्षिप्रम् । इति योऽनुज, रामम् ॥१३९५॥ इत्थं प्रवदन्तं यं-भरतोऽयाच कृत्वां च रक्षायै । मे देहि पादुके इति तं सत्य, रामम् १३९६ लोकक्षेमार्थममूपद्भ्यामारुह्य पादुके द्वे त्वं । देहीति स यमयाचत तं सत्य, रामम् ॥१३९७॥ पंञ्चदशेब्दे प्रथमे-दिवसेतवदर्शनं प्रतीक्षेऽहम् । इत्याह यमनुजो गां तं सत्य, रामम् ॥१३९८॥ नोचेदेतं देहं-कुर्वेऽनलसादिदं वचस्सत्यम् । इत्याह यमनुजो गां तं सत्य, रामम् ॥ अस्तु तथेत्युक्त्वा तं-शत्रुघ्नं चापि तौ परिष्वज्य । योगिर-माह प्रीत्या तं सत्य, रामम् ॥१४००॥ कैकेय्यीं रक्षत्वं-मारोषं कर्तु-मर्हसि प्राज्ञ । इति योगिरमाह मुदा तं सत्य, रामम् ॥१४०१॥ तद्विषये वैदेह्या-शप्तोसि त्वं मयाऽद्य रघुकुलज । इति यो गिरमाह रामम् ॥१४०२॥ अथ बाष्पक्लिन्नाक्षं भ्रातरमुक्त्वैव मादराद्योद्राक् विससर्जाऽश्रितधैर्यस्तं सत्य, रामम् ॥१४०३॥ अथ यस्य पादुकेद्वे संपूज्य गजस्य मस्तके धृत्वा । प्रययौ नगरं भरतस्तं सत्यधृतिंभजे सदा रामम् ॥१४०४॥ कृत्वा प्रदक्षिणं यं धृत्वा ते मूर्ध्नि सानुजो-ऽयोध्याम् । रथमारुह्य प्रययौ तं सत्य, रामम् ।१४०५। यत्सविधा

दविशदथो सेनासहितस्तमाश्रमं रथगः। सभरद्वाजस्य मुनेस्तं सत्य धृतिंभजेसदा रामम् ॥प्रणमन्तं यद्भक्तं दृष्टो वा राम इत्यपृच्छदृषिः॥ सन्तोषात्प्रथिततपास्तं सत्य, रामम् ॥१४०७॥ इत्थं पृष्टो मुनिना दृष्टो रामस्त्वदीयया वाण्या। इति मुनिमाह यदनुजस्तं सत्य,रामं १४०८ गुरुणा करुणा निधिना कृ।गन मया च याचमानोऽभूत्। * इति मुनिमाह यदनुजस्तं सत्य, रामम्।१४०९। अधिरुह्य पादुके द्वे प्रादाद्राज्यस्य पालनार्थमिमे। इति मुनिमाह यदनुजस्तं भक्तेष्टप्रदं रामम् ॥१४१०॥ तद्दत्तपादुके द्वे संगृह्याहं प्रयामि साकेतम्। इति-मुनिमाह यद, रामम् ॥ कृत्वा प्रदक्षिणमृषिं तेन विसृष्टस्ततार का-लिन्दीं। यद्भक्तस्स्वानुचरैस्तं भक्तेष्टप्रदं, रामम् ॥१४११॥ अथ श्रृङ्गिबेरपत्तन-मध्याद्दृष्ट्वा सुदुःखितोऽयोध्याम्। सारथिमाहयदनुज स्तं, रामम् ॥१४१२॥ पश्य मां त्वमयोध्यां-त्यक्तामार्येण सारथे शून्याम्। इति गिरमाह यदनुजस्तं, रामम् ॥१४१३॥ मद्भ्रात्रा सहनूनं साकेतश्रीर्विवेश विपिनतलम्। इति गिरमाह, रामम्॥ ॥१४१४॥ इति बहुविधगिरमुक्त्वाऽयोध्यां नगरीं प्रविश्य यद्भक्तः॥ सचिववरान्गिरमवदत्तं रामम् ॥१४१५॥ आरामागमनमहं नन्दि-ग्रामे वसामि दुःखसहः। इति तानाह यदनुजस्तं, रामम्॥१४१६॥ मातॄरथ साकेतं त्यक्त्वा प्रायात्सहानुजस्सरथी। तंग्रामं यदवरज-स्तं, रामम् ॥१४१७॥ राज्यमिदं भ्रात्रा मम दत्तं निक्षेपवत्स्वयं तोपात्। इति तानाह यदनुजस्तं भक्तेष्टप्रदं भजे रामम् ॥१४१८॥ अग्रेते शंनूणां-कुर्वाते पादुके च तद्दत्ते। इति तानाह यदनुज स्तं भक्तेष्ट, रामम्॥१४१९॥ छत्राद्युपचारार्हे-मच्छीर्षस्थे च पादुके भवतः इति तानाह यदनुजस्तं, रामम् ॥१४२०॥ पायामहमार्योक्त्या राज्यमिमे पादुके पुरस्कृत्य। इति तानाह, रामम्॥१४२१॥ इत्यु-क्त्वा तान्भरतो-भृत्यानीता ददर्श सामग्रीः। यत्पादुकयोः पार्श्वे तं,

भक्तेष्टप्रदं भजे रामम् ॥१४२२॥ अभिषिच्य पादुके द्वे-तत्रनिवेद्या र्थमन्वहं बभ्रे । यद्भक्तो राज्यधुरं तं भक्तेष्टप्रदं भजे रामम् १४२३ अथ भरते प्रतियाते-गिरिवासं यं निरीक्ष्य मुनयस्ते । अवदन्गिर-मन्योन्यं तं भक्ते० रामम् ॥१४२४॥ तान्दृष्ट्वा विहिताञ्जलि-रभण द्वाचं विशंक्य किञ्चिन्नः । वक्तव्यं ब्रूतेति च तं भक्ते० रामम् १४२५ कच्चिद्दोषो दृष्ट-स्सीतायां वाऽनुजेऽथ मयि किं स्यात् । इति पप्रच्छ मुनीन्यस्तं भक्ते० रामम् ॥१४२६॥ अथजरयाक्रान्ततनुः-कुलपति-रूचेऽर्थवद्वचो मुनिराट् । शुश्रूषुं यं दृष्ट्वा तं भक्ते० रामम् ॥१४२७ नाहं पश्याम्यगुणा-न्युष्मासु तथापि वच्मिश्शृणु वचनम् । इति यं गिरमाह मुनिस्तं० रामम् ॥१४२८॥ रावणसहजः कश्चि-द्वसति जनस्थाननाम्नि देशेऽस्मिन् । इति यं गिरमाह मुनिस्तं भक्ते०रामम्॥ उत्पाट्य तापसौधा-न्भक्षयते नित्यमेव पापिष्ठः । इति यं गिरमाह मुनिस्तं भक्ते० रामम् ॥१४३०॥ अद्य त्वधिकां कुरुते-हिंसां पापी त्वदागमप्रभृति । इति यं गिरमाह० रामम् ॥१४३१॥ स्रुग्भाण्डादी न्भिन्ते-चाग्नीन्सेचयति वारिभिः पापी । इति यं गिरमाह०रामम्॥ तमिमं देशं त्यक्त्वा-ऽन्यत्र गतिं चिन्तयन्ति मुनयोऽमी । इति यं गिरमाह मुनिस्तं भक्तेष्टप्रदं भजे रामम् ॥१४३३॥ अस्माभिस्सह-सीतानुजसहितस्त्वं सुखेप्सुरायाहि । इति यं गिरमाह० रामम्॥ उक्त्वेत्थं यं प्रययौ-स्वकुलैस्सार्धं पुराणदेशं स्वम् । कुलपतिरथ वृद्धमुनिस्तं भक्ते० रामम्॥१४३५॥ ऋषिसङ्घे प्रतियाते-तत्रनिवासे ददर्श बहुदोषान् । यस्सीतानुजसहितस्तं भक्ते०रामम् ॥१४३६॥ साकेताद्भरताद्या-देशमिमं ते पुनस्सदाऽयान्ति । इति चिन्तावान्यो भूत्तं भक्ते० रामम् ॥१४३७॥ अथ गच्छामो वयमप्यन्यं देशं सुभिक्षमिति मत्वा । अत्र्याश्रममापद्यस्तं भक्ते० रामम् ॥१४३८॥ अनसूयासहितमृषिं-सानुजसीतोऽभिवन्द्य योऽत्रिं द्राक् । आतिथ्य-

मवाप मुदा तं भक्त॰ रामम् ॥१४३९॥ अभिगच्छतु वैदेही वृद्धाम क्रोधनां च मत्पत्नीम् । इतिगिरमूचे यमृषिस्तं भक्तेष्टप्रदं भजे रामम् ॥ ॥१४४०॥ त्वमपि श्रेयः कामा-शीघ्रं गत्वा तपस्विनीं पश्य । इति पत्नीमभणद्यस्तं भक्ते॰ रामम् ॥१४४१॥ अभिवाद्य च यत्पत्नी साञ्जलिबन्धाह्यपृच्छदारोग्यम् । अनसूयामतिवृद्धां तं भक्त॰रामम्। अथ सीतामनसूयां-यस्य सतीं वीक्ष्य धर्मशीलवतीम् । ऊचे गिर-मनसूया तं भक्ते॰ ॥१४४३॥ त्यक्त्वासीते बन्धूनैश्वर्यं चाद्य भर्त्रे-धीनासि । इति सा यत्स्त्रियमभणत्तं भक्ते॰ रामम् ॥१४४४॥ स्त्रीणां पतिव्रतानां-दुश्शीलोवापि दैवतं भर्ता । इति सा यत्स्त्रिय-मभणत्तं भक्ते॰ रामम् ॥१४४५॥ विमृशन्तीनान्यदतो-दैवं जाने स्त्रियाः पतिं त्यक्त्वा । इति सा यत्स्त्रियमभणत्तं भक्ते॰ रामम् ॥ ॥१४४६॥ पितृवाक्याच्छ्रितविपिनं-राज्याविहीनं पतिं त्वमनुवससि इति सा य॰ रामम् ॥१४४७॥ इत्यनसूयावचनं-श्रुत्वागिरमाह तां विदेहसुता । यत्पत्नी धर्मज्ञा तं भक्तेष्टप्रदं भजे रामम् ॥१४४८॥ अनुशिष्टामात्राहं-पूर्वमिदानीं दृढीकृतो धर्मः । इति तामभणद्यत्स्त्री * तं भक्तेष्ट ,रामम् ॥१४४९॥ सावित्री शिश्रूषां-भर्तुः कृत्वा महीयते स्वर्गे । इति तामभणद्यत्स्त्री तं भक्ते॰ रामम्॥१४५०॥ भर्तारं रो-हिण्यपि-चन्द्रं हित्वा कदापि नो वसति । इति तामभणद्यत्स्त्री॰ रामम् ॥१४५१॥ एवं नार्यः काश्चि-त्पतिदेवास्सन्ति भूतलेऽद्यापि। इति तामभणद्यत्स्त्री तं भक्ते॰ रामम् ॥१४५२॥ श्रुत्वा ततोगिरंतां-द्राङ्मूर्ध्न्याघ्रायपत्सतीं प्रोचे । अनसूया सन्तुष्टा तं भक्ते॰ रामम् ॥ सफलं ते हर्षमहं-करवाणि गृहाण मङ्गलद्रव्यम् । इति सो चे यत्पत्नीं तं भक्ते रामम् ॥१४५४॥ नियमैर्विविधैः प्राप्तं-महदस्ति तपोमयीति यत्पत्नीम् । अभणद्गिरमनसूया तं भक्ते॰ रामम् ॥१४५५॥ इति मुनिपत्नीदत्तंसा तत्तोषात्प्रगृह्य शुशुभेऽलम् । यत्पत्नी वनवासे तं, रामम् ।

* विहिताञ्जलिमनसूया-यत्पत्नीं तां स्वयं वरस्य कथाम् । विवि
* दिषया समपृच्छत्तं भक्तहृदिस्थमाश्रये रामम् ॥१४५७॥ इतिपृष्टा
यत्पत्नी-स्वोत्पत्तिं वीर्यं शुल्कतां स्वीयाम् । अवदन्मुनिभार्यायै तं
* मुनिसंघस्तुतं भजे रामम् ॥१४५८॥ अथ मिथिलालंकारं-रामा-
गमनं महर्षिणा साकम् । यत्पत्न्यवदत्तस्यै तं मुनिसेव्यं भजे सदा
रामम् ॥१४५९॥ शिवधनुषोभङ्गमथो-येन सनाथत्व संभवं स्वस्याः
यत्पत्न्यभणत्तस्यै तं मुनि० रामम् ॥१४६०॥ उक्तस्वोद्वाह कथां
यत्पत्नीं सा सुगाढमालिङ्ग्य । अतुषत्पुलकितगात्री तं मुनि०रामम्
* ॥१४६१॥ अथ भूषितगात्रीं यो-दृष्ट्वा सन्तोषसागरे मग्नः ।अभ-
वल्लक्ष्मणसहितस्तमहं शरणं भजे सदा रामम् ॥१४६२॥ अथ
रात्र्यां व्युष्टायां-तापससङ्घास्समेत्य गिरमूचुः । यंराक्षसमूलहरं तमहं
शरणं भजे सदा रामम् ॥१४६३॥ मार्गेणानेन वनं-दुर्गं गन्तुं क्षमं
हि भवतोऽद्य । इत्यवदन्नृषयो यं तमहं शरणं० रामम् ॥१४६४॥
श्रुत्वा तेषां वचनं-सानुजसीतो विवेश विपिनं यः । लोकानां क्षेमार्थं
तमहं शरणं० रामम् ॥१४६५॥ कौसल्यानन्दकरं-साकेतनिवासि-
* लोकतृप्तिकरम् । मद्रोगप्रशमकरं तं श्रीरामं भजामि शरणमहम् ॥
* ॥१४६६॥ आश्रितजनपापहरं- संश्रितजनतापमूलखननपरम् ।
भक्तेभ्यो दत्तवरं तं श्रीरामं भजामि शरणमहम् ॥१४६७॥

जानकी मुखपद्मेनं कौसल्यानन्ददायिनम् ।
भजतां सुकृताधीनं तं श्रीरामं भजाम्यहम् ॥१४६८॥

॥ इत्ययोध्याकाण्डकथासहिता रामस्तुतिस्संपूर्णासीत् ॥

॥ मङ्गळ श्लोकाः ॥

त्यक्तायोध्याभिषेकाय भक्ताकांक्षितदायिने ।
सक्ताय योगिनां स्वान्ते रामायास्तु सुमङ्गळम् ॥१॥
चित्रकूटनिवासाय तत्रस्थानां महात्मनाम् ।
पात्राय नेत्रबृन्दानां रामायास्तु सुमंगळम् ॥२॥
भरताय स्वभक्ताय पादुकाद्वयदायिने ।
विरक्ताय पुरप्राप्तौ रामायास्तु सुमङ्गळम् ॥३॥
ऋषीणां वाक्यतस्त्यक्त चित्रकूटोटजाय च ।
कृतात्र्याश्रम वासाय रामायास्तु सुमङ्गळम् ॥४॥
यतिरामानन्देन ग्रथिता रामस्तुतिस्त्वियं भक्त्या ।
मुक्त्यामासक्तधियाऽयोध्याकाण्डस्थगाथया जीयात् ॥

हरिः ओम् । शुभमस्तु ॥





॥ ॐ श्रीरामतारकब्रह्मणे नमः ॥

इमौ च रामस्तुत्याख्य ग्रंथांतर्भूतौ

# ॥ आरण्य किष्किन्धाकाण्डौ ॥

श्रीशृंगगिरि मठस्थव्याख्यानसिंहासनाधीश्वराणां श्रीसच्चिदानंद-
शिवाभिनव नृसिंहभारतीस्वामिनां तच्छिष्य श्रीचंद्रशेखर-
भारतीस्वामिनां च पदसरसिज द्विरेफायमाणस्वांतेन तत्कृपा
वीक्षणकण समासादितसरस्वतीप्रसादविशदमतिना

## रामानंदसरस्वत्याख्यपरिप्राजाग्रथीतौ

तत्र च साधुजनहिंसक खरदूषणादिवध पूर्वकलोकक्षेमंकरकथालं-
कृतः आरण्यकांडः तिरुक्करुहावूर्नामका ग्रहारस्थ ठियलित्युप
पदभूषितसुब्बार्यप्रेषितेन द्रव्येण सुग्रीवसख्यादिकथा
भूषितश्च किंष्किन्धाकाण्डस्तद्ग्रामवास्तव्यमहा-
जन प्रेषितेन च द्रव्येण ।

॥ श्रीविद्या मुद्रणालये आयसाक्षरैर्मुद्रापितौ ॥
प्राकाश्यं नीतौ विजयेतेतरामिति सर्वं समंजसम् ।

एतस्यमूल्यम् ८ आणकाः ।



ॐ

# ॥ आरण्यकाण्डः ॥



॥ शुभमस्तु । श्रीगणेशाय नमः । श्रीशारदांबिकायै नमः ।
श्री गुरुभ्यो नमः ॥

यच्चरणस्मरणंद्राग्भक्तानामिष्टदायकंशुभदम् ।
विघ्नाद्रिभेदकुलिशं तंगिरिजापुत्रमाद्यमहमीडे ॥

शृङ्गगिरिमध्यनिलयां भृङ्गावळिसदृशकेशपाशांगाम् ।
तुङ्गकुचभारनम्रां मंगळदांनौमिभक्तसङ्घेभ्यः ॥

हेराघवशरणंत्वच्चरणंत्यक्त्वाकयामिशुभकरणम् ।
त्वन्मूर्तीक्षणकरणं दृढमस्त्वनिशंदृगादिकरणंमे ॥

शुभमस्तु । आरण्यकाण्डकथास्तुतिप्रारंभः । अयंचारण्यकाण्डः ।
तिरुक्कळावूर् टी. यल्. सुब्बार्यस्य द्रव्यसहायेन संमुद्यप्राकाश्यंनीतः ।

प्रविशंश्चदण्डकावन मार्गेपश्यत्तपस्विबृन्दानाम् । उटजानि-
बहूनिचयस्तंश्रीरामंवनस्थमहमीडे ॥१॥ मृगपक्षिसंघजुष्टा स्नुक्स्नु-
वभाण्डाजिनैः पुरोव्याप्ताः । योऽद्राक्षित्पर्णकुटीस्तं श्रीरामं+मीडे॥२॥
बलिहोमवेदघोषै र्व्याप्ताब्रह्मर्षिनिवहसञ्जुष्टाः । योऽद्राक्षीत्पर्णकुटीस्तं
श्रीरामं+मीडे ॥३॥ विज्यंधनुरथकृत्वायंशुभमायान्तमंजसावीक्ष्य ।
अभ्यागच्छन्मुनयस्तं श्रीरामं+मीडे ॥४॥ यंपत्न्यनुजसमेतं मुनय-
स्तेप्याशिषंप्रयुञ्जानाः । सुन्दरगात्रमपश्यंस्तं श्रीरामं + मीडे ॥५॥

संप्राप्तमुटजमतिथिं मुनयोयंसन्यवेशयन्नस्याम् । विधितस्सत्कृतिपूर्वं तं श्रीरामं + मीडे ।६।। मूलफलेकुसुमान्यपि मुनयोयस्मैनिवेदयित्वोचुः । विहिताञ्जलयोवाक्यन्तं श्रीरामं + मीडे ।।७।। अस्माकंत्वं राजा राज्यस्थोवावनेचरोवापि । इत्यूचुर्यं मुनयस्तं श्रीरामं + मीडे ।।८।। त्वद्दतेगतिरस्माकं नान्याऽऽस्तेऽतस्त्वयात्रयंरक्ष्याः । इत्यभणन्यम्मुनययस्तं श्रीरामं + मीडे ।।९।। इत्युक्तोमुनिभिर्यो विहितातिथ्योमुनीन्समापृच्छय । सानुजसीतः प्रययौतं श्रीरामं + मीडे ।।१०।। नानामृगगणजुष्टे विजनेऽरण्येगिरीन्द्रसदृशंयः । रक्षोऽपश्यद्भयदंतं श्रीरामं + मीडे ।।११।। त्रीन्सिंहान्दशपृषता न्व्याघ्रांश्चतुरोवृकौगजास्यंयः । तच्छूलाग्रेऽपश्यत्तं श्रीरामं + मीडे ।।१२।। सानुजसीतंदृष्ट्वा यंरक्षोभैरवंरवंकृत्वा । सीतां प्रदधावङ्केतं श्रीरामं + मीडे ।।१३।। कौत्रांधृतचीरजटौ सस्त्रीकौसज्य चापबाणधरौ । इति रक्षोयमपृच्छत्तं श्रीरामं + मीडे ।।१४।। वध्वासहवनवासो योग्योत्रातेवदाद्यशास्त्रंत्वम् । इति रक्षोयमपृच्छत्तं श्रीरामं + मीडे ।।१५।। अहमस्मिन्वनमध्ये हिंसां कुर्वन्वसामिनियमवताम् । इति यं प्राह विराधस्तं श्रीरामं + मीडे ।।१६।। नारीयं मम भार्या रतिसौन्दर्याभविष्यतिह्यधुना । इति यंप्राह० + मीडे ।।१७।। युवयोश्चाहं रुधिरं पास्याभिमृथेययेच्छमति मधुरम् इति यं प्राह० + मीडे ।।१८।। श्रुत्वेत्थं तद्वचनं सीतां दृष्ट्वा विराधहस्तगताम् । गिरमूचेऽवरजंयस्तं श्रीरामं + मीडे ।।१९।। पश्यभ्रातस्सीतां रक्षोऽपहृतांसबाष्पनयनांत्वम् । इत्यूचेऽवरजंयस्तं श्रीरामं + मीडे ।।२०।। अद्यममध्यमांबा भवतुसकामास्नुपाऽऽपदं श्रुत्वा । इत्यूचेऽवरजंयस्तं श्रीरामं + मीडे ।।२१।। श्रुत्वेत्थंतद्वचनं हन्म्यहमद्यैव राक्षसंदुष्टम् । इत्याह यदनुजोगां तं श्रीरामं + मीडे ।।२२।। कस्त्वंवदेतिपृष्टो यद्भ्रक्तेनाब्रवीत्तदारक्षः । वदतंचयुवां काविति तं श्रीरामं + मीडे ।।२३।।

अथतस्मैस्वस्यकुलं जातिमरण्येनिवासहेतुमपि । अवदन्निर्भीकोयस्तं श्रीरामं + मीडे ॥२४॥ त्वांवेदितुमिच्छावः कस्त्वंवाचरसिदण्डकारण्ये । इति योपृच्छद्रक्षस्तं श्रीरामं + मीडे ॥२५॥ अथपृष्टस्सविराधस्स्वस्योत्पत्तिं चरित्रमपि वक्तुम् । प्रारेभेयत्सविधेतं श्रीरामं+ मीडे ॥२६॥ जयनाम्नः पुत्रोहं माताप्रोक्ताशतह्रदाचेति । इति सप्रत्यवदद्यं तं श्रीमामं + मीडे ॥२७॥ नाम्नाविराधइतिमा माहुस्सर्वेनिशाचरालोके । इति सप्रत्यवदद्यं तं श्रीमामं + मीडे ॥२८॥ तपसाप्राप्तेशस्त्रै रच्छेद्याभेद्यतेविधातृवरात् । इति सप्रत्यवदद्यं तं श्रीरामं + मीडे ॥२९॥ उत्सृज्यैनांसुदती मनपेक्ष्ययुवां पलायनं कुरुतम् । इति रक्षाऽभाणीद्यं तं श्रीरामं + मीडे ॥३०॥ दुर्बुद्धिमथविराधं धिक्त्वां पापिन्नयामियमसदनम् । इति यः कुपितोऽवादीत्तं श्रीमामं + मीडे ॥३१॥ उक्त्वैवं धनुषिशिता न्बाणान्सन्धायराक्षसं पापम् । अवधीद्यः कोपवशस्तं श्रीमामं + मीडे ॥३२॥ शरविद्धोवैदेहीं त्यक्त्वाभूमौकरेणधृतशूलः । यस्यसमीपंप्रापत्तं श्रीरामं + मीडे ॥३३॥ अथतस्मिञ्छरसंघं योऽनुजसहितोववर्षधृतकोपः । तच्छूलखण्डनेच्छुस्तं श्रीरामं + मीडे ॥३४॥ खण्डितशूलस्सहसा बाहुभ्यां यं सहानुजं बध्वा । स्कन्धेधृत्वासययौतं श्रीरामं + मीडे ॥३५॥ तदभिप्रायं ज्ञात्वा लक्ष्मणमूचेगिरंसपरिहासम् । योदण्डकावनान्तरतं श्रीरामं + मीडे ॥३६॥ आवामेतद्यातु स्कन्धद्वितयेनिवेश्ययातुपथा । इति लक्ष्मणमवदद्यस्तं श्रीरामं + मीडे ॥३७॥ अथदण्डकावनमध्ये सीतायं सानुजं विराधस्य । स्कन्धगतं प्रारोदीत्तं श्रीरामं + मीडे ॥३८॥ काकुत्स्थावुत्सृज्य त्वंहरमामद्यराक्षसप्रवर । इत्यरुदद्यत्पत्नीतं श्रीरामं + मीडे ॥३९॥ दृष्ट्वातांक्रोशन्तीं सव्यं बाहुं च कर्तयद्भ्राता । दक्षिणमपि बाहुं यस्तं श्रीरामं + मीडे ॥४०॥ भग्नभुजं भुविपातितं राक्षसमपि षत्पदा-

ऽनुजेन सह । उद्यम्याद्यम्यचयस्तं श्रीरामं + मीडे ।।४१।। निष्पिष्टमपि विराधं सप्राणं प्रेक्ष्यसंचखानभुवि । योऽनुजसहितश्श्वभ्रे तं श्रीरामं + मीडे ॥४२॥ दृष्ट्वातदाविराधो नाहमवेदं भवन्तमपि शापात् । इति यं सप्राशंसत्तं श्रीरामं + मीडे ।।४३।। कौसल्यातनयत्वां सौमित्रिं मैथिलीं च वेद्म्यधुना । इति यं सप्राशं सत्तं श्रीरामं + मीडे ।४४।। गन्धर्वोहं तुंबुरु रपि शापादापमद्य* राक्षसताम् । इत्यसुरोऽवादीद्यं तं श्रीरामं + मीडे ।।४५।। त्वद्बाणेन वधान्मे शापस्यान्तोभवन्मुनिध्येय । इत्यसुरो + मीडे ॥४६॥ भुवनमहं यामि स्वं याहित्वंशारभंगमुटजंद्राक् । इत्यसुरो + मीडे ॥४७॥ अवटेप्रक्षिप्य तु मां श्रेयोर्त्थं त्वं प्रयाहिमुनि निकटम् । इत्यसुरो + मीडे ।।४८।। इत्युक्त्वा स्वर्गमगा द्रक्षोऽथमुनेस्तमाश्रमं गत्वा । योऽपश्यद्रथमैन्द्रं तं श्रीरामं + मीडे ॥४९॥ यस्यागमनं ज्ञात्वा प्रत्युक्तश्शारभंगवचसेन्द्रः । स्वर्लोकमगच्छद्राक्तं + मीडे ॥५०॥ शरभंगमुनेश्चरणौ संगृह्येन्द्रस्य चागमं ज्ञात्वा । तमृषिं* गिरमवदद्य स्तंमुनि निकटस्थमाश्रये रामम् ।।५१।। अहमेव सर्वलोका नानेष्याम्यग्रतृप्तिकामस्ते । इति गिरमाहमुनिं यस्तं मुनिनिकटस्थमाश्रये रामम् ॥५२॥ अद्यवनेस्मिन्वस्तुं स्थलमिच्छामित्वया त्वेनिर्दिष्टम् । इति गिरमाहमुनिं + रामम् ॥५३॥ इत्युक्तश्शरभङ्गः प्रोवाचवचस्स्व देह मुक्त्यर्थम् । यं सीतानुजसहितं तं मुनि + रामम् ।५४।। यावज्जहामिदेहं तावत्त्वं सन्निधेहि मम पुरतः । इति गिरमृषिरवदद्यं तं मुनिं + रामम् ॥५५॥ अक्षयलोकान्ब्राह्मया न्विजितांस्तपसानगन्तुमहमीष्टे । इति गिरमृषिरवदद्यंतंमुनि + रामम् ॥५६॥ तवदर्शनजं पुण्यं त्यक्त्वा लोकान्तरे किमस्ति फलम् । इति गिरमृषि + रामम् ।।५७।। त्वांदृष्ट्वा जीर्णतनुं त्यक्त्वा लोकान्तरं गमिष्यामि । इति गिरमृषिरवदद्यं तं मुनि +

रामम् ॥५८॥ अभिगच्छाद्यत्वरितं श्रेयोर्थं त्वंसुतीक्ष्णमुनि निकटम् । इति गिरमृषिरव + रामम् ॥५९॥ इत्युक्त्वाऽऽज्याहुत्या प्रज्वाल्याग्निं विवेशमुनिवर्यः । यं ध्यात्वाऽन्तः करणे तं मुनि + रामम् ॥६०॥ अग्नेरुत्थायमुनि स्सुकुमाराङ्गोजगामविधिलोकम् । यस्मिन्पश्यति पुरतस्तं मुनि + रामम् ॥६१॥ अथमुनयश्शतशोद्रा वैखानसवालखिल्यभूमिशयाः । आजग्मुर्यं द्रष्टुं तं मुनि + रामम् ॥६२॥ नाथोस्माकं हि भवां छुत्वाऽस्माकं गिरंकरोत्वभयम् । इतिमुनयोयं प्राहुस्तं मुनि + रायम् ॥६३॥ वानप्रस्थगणोऽयं राक्षसबृन्दैः प्रपीड्यतेऽनुदिनम् । इति यं प्रोचुर्मुनयस्तं मुनि + रामम् ॥६४॥ परिपालयनोराम त्वद्दतेकुत्रापि नास्ति गतिरन्या । इति गिरमूचुर्यन्ते तं मुनि + रामम् ॥६५॥ इत्थमृषीणां वचनं श्रुत्वा वाचं जगादमुनिमान्यः । लोकक्षेमकरीं यस्तं मुनि + रामम् ॥६६॥ पितृवाक्य सदृशमेत द्भवदीयवचः करोमि सफलमहम् । इति गिरमभणद्यस्तां स्तं मुनि + रामम् ॥६७॥ पश्यन्तु शौर्यं मृषयः सभ्रातुर्मेभवाद्विषां हननात् । इति गिरमभणद्यस्तांस्तं मुनि + रामम् ॥६८॥ सीतानुजसहितो यः प्रययौमुनिभिस्सुतीक्ष्णमुनि सविधम् । पश्यन्नगगिरिसारितस्तं मुनि + रामम् ॥६९॥ एकान्तस्थं तमृषिं सानुजसीतः प्रणम्य योऽभाणीत् । रामोस्म्यहमिति वाचं तं मुनि + रामम् ॥७०॥ त्वं मामभिवद भगव न्नित्युक्तो यं मुनि स्समाश्लिष्य । पृष्ट्वा स्वागतमभणत्तं मुनि + रामम् ॥७१॥ त्वद्दर्शन कामोहं प्रत्यवदं तं निरिक्ष्यमघवानम् । इति यं प्रोचेऽथमुनिस्तं मुनि + रामम् ॥७२॥ तपसा विजितालोका बहवस्सन्तीति तत्र मुनिवचनम् । श्रुत्वा गिरमभणद्यस्तं मुनि + रामम् ॥७३॥ शौर्येणाहं लोकां स्सर्वानेवानयामिचेदिच्छा । इत्युक्त्वाऽऽहपुनर्यस्तं मुनि + रामम् ॥७४॥ शरभङ्गेणोक्तस्ते सविधं प्राप्तं निवासकाम-

नया। इति योगिरमृषिमवदत्तं मुनि + रामम् ॥७५॥ सानुजसीतो रात्रौ तत्कृतसत्कारतुष्टहृदयो यः। कल्येस्नानाद्यकरोत्तं मुनि + रामम् ॥७६॥ तेनानुज्ञातं यं प्रस्थितमूचे विदेहजाभक्त्या। दृष्ट्वामुन्यभयकरं तं मुनि + रामम् ॥७७॥ त्रीणि व्यसनानिनृणां दृश्यन्ते नाथकामजातानि। शृण्विति सीतो चेयं तं मुनि + रामम् ॥७८॥ मिथ्यावाक्यं दुष्टं परदारेच्छाऽविरोधिषुक्रोधः। इति यं सीतो चेमां तं मुनि + रामम् ॥७९॥ कालत्रयेपि मिथ्यागीस्त्वयिनास्तीतरस्त्रीयोप्याशा। इति यं सीतोचे + रामम् ॥८०॥ निर्वैरप्राणिवधं कुर्वेऽहमिति त्वयाप्रतिज्ञातम्। इति सीताऽऽहगिरं + रामम् ॥८१॥ मुनिसंरक्षणहेतो स्संयति रक्षोवधः प्रतिज्ञातः। इति सीताऽऽहगिरं + रामम ॥८२॥ श्रुत्वैतद्वचनन्ते व्यसनाकुलमद्य नाथमेस्वान्तम्। इति सीताऽऽहगिरं + रामम ॥८३॥ स्वल्पमपि दंडकावनगमनं न हिमेप्ररोचतेनाथ। इति सीताह + रामम ॥८४॥ वक्ष्यामितत्रहेतुं त्वंधानुष्कस्तथैव सहजोपि। इति सीताऽऽहगिरं + रामम् ॥८५॥ धनुरिन्धनजालमुभे क्षत्रियवह्न्योर्बलं विवर्धयतः। इति सीताऽऽहगिरं + रामम् ॥८६॥ इन्द्रप्रदत्तखड्गं धृत्वामौनीपपातनरकचये। इति सीताऽऽहगिरं + रामम ॥८७॥ स्नेहाद्बहुमानात्त्वां वच्म्यहमित्थं न शिक्षयेनाथ। इति सीताऽऽहगिरं यं + रामम् ॥८८॥ तस्माद्विनापराधं हन्तुं दुष्टानपिक्रुधानेशे। इति सीताऽऽहगिरं + रामम् ॥८९॥ आर्ताभिरक्षणं त्वं कुरुकालं देशमपि च संवीक्ष्य। इति सीताऽऽहगिरं यं तं मुनि + रामम् ॥९०॥ मैथिल्युक्तिं श्रुत्वा धर्म्यं यःप्रत्युवा च सन्तोषात्। भीतिनिवर्तकवचनं तं मुनि + रामम् ॥९१॥ पूर्वं त्वयैवगदितं राज्ञाधार्यं धनुः करेणेति। इति सीतामभणद्यस्तं मुनिनि + रामम् ॥९२॥ राज्ञार्तशब्दवारणहेतोश्चापः करेणधार्य इति। त्वंवेत्सीत्यवदद्यस्तं मुनि +

रामम् ॥९३॥ ते दण्डकावनस्थाश्शरणं मां प्रापुरत्रपुरतस्ते । त्वं वेत्सीत्यवदद्यस्तं मुनि + रामम् ॥९४॥ तेषां बचनं श्रुत्वोदाहृतमेतद्वचस्सुतोषकरम् । इति सीतामवदद्यस्तं मुनि + रामम् ॥९५॥ विप्राणां प्रार्थनया प्यभयं दत्तं मयाद्य राजसुते । इति सीतामवदद्यस्तं मुनि + रामम् ॥९६॥ राक्षसकृतमपराधं श्रुत्वापि मयाकथन्नु सोढव्यम् । इति सीतामवदद्यस्तं मुनि + रामम् ॥९७॥ भस्मीकर्तुं शक्ता मुनयोप्यभयं ययाचिरेमत्तः । इति सीतामव + रामम् ॥९८॥ तपसां व्ययतोभीत्या शापन्नोददति राक्षसेभ्योऽमी । इति सीतामव + रामम् ॥९९॥ अभयं नो दद्यां यदि तेषामन्यागतिर्नभूमिसुते । इति सीतामव + रामम् ॥१००॥ संश्रुत्याह मृषीणां मिथ्यावादी कथं भवामि वद । इति सीतामव + रामम् ॥१०१॥ जह्यांवाऽसून्सीते ब्राह्मणहिंसां कदापि न सहेऽहम् । इति सीतामवदद्यस्तं मुनि संरक्षकं भजे रामम् ॥१०२॥ इत्युक्त्वा प्रययौय स्सीतामध्योऽनुजेन सहविपिनम् । तीर्त्वाशैलोत्थनदीस्तं मुनि + रामम् ॥१०३॥ मार्गेविपुलमपश्य द्योजनविस्तारमंबुजैर्निबिडम् । यस्तुष्टोऽथतटाकं तं मुनि + रामम् ॥१०४॥ जलमध्येगानरवं श्रुत्वाऽऽश्चर्यान्मुनिश्चधर्म भृतम् । योऽपृच्छत्तद्धेतुं तं मुनि + रामम् ॥१०५॥ धर्मभृदाहतदायं कृतमेतन्माण्डकर्णिनामुनिना । वाय्वशनेनेति तदा तं मुनि + रामम् ॥१०६॥ इन्द्रप्रहिताप्सरसस्तपसो विघ्नार्थमस्यपत्नीत्वम् । प्राप्ता इत्यवदद्यं तं मुनि + रामम् ॥१०७॥ ताभिर्निर्मितमन्तर्जलमति रम्य गृहं स्ववासार्थम् इति गिरमाहमुनिर्यंतं मुनि + रामम् ॥१०८॥ युवभावं प्राप्तं तं तपसां विभवात्सदापि रमयन्ति । इति गिरमाहमुनिर्यंतं मुनि + रामम् ॥१०९॥ तासां वादित्ररवोभूषणरवमि श्रितोऽप्यजागर्ति । इति गिरमाहमुनिर्यं + रामम् ॥११०॥ इत्युक्तस्तत्र

वने वसतां महतां कुटीषुयोऽवात्सीत् । त्रीं श्चतुरोमासाब्दां स्तं मुनि + रामम् ॥१११॥ पर्यायक्रमतोयो ऽवात्सीत्तत्रानुजेन सह सीतः । दशवत्सरपर्यन्तं तं मुनि + रामम् ॥११२॥ परिवृत्य- सुतीक्ष्णमुनेराश्रममेत्वाऽपवस्तुमिच्छन्य: सानुजसीतस्तोषात्तं मुनि + रामम् ॥११३॥ कञ्चित्कालमुषित्वा तत्र सुतीक्ष्णं जगादयो भक्त्या याम्यागस्त्यां दिशमिति तं मुनि + रामम् ॥११४॥ श्रुत्वागस्त्यगिरंद्रा क्तुष्ट प्रोवाचतस्य वसतिमृषे । स सुतीक्ष्णस्तु स मृद्धां तं मुनि + रामम् ॥११५॥ चत्वारियो जनानि भ्रातु- स्तस्याश्रमस्य सन्तीतः इति गिरमाहमुनिर्यं तं मुनि + रामम् ॥११६॥ तद्भ्रातुराश्रमेत्वं रजनीमेकामतीत्यकल्येद्राक् । याही त्याहमुनिर्यन्तं मुनि + रामम् ॥११७॥ पथियोजनमथगत्वा सा- नुजसीतस्तमाश्रमं प्रविश इति यं मुनिरवदद्वां तं मुनि + रामम् ॥११८॥ यदिबुद्धिस्तेऽगस्त्यं द्रष्टुं याह्यद्य मैथिलीरमण । इति यं मुनिरवदद्वां तं मुनि + रामम् ॥११९॥ इति मुनिवचनं श्रुत्वा सानुजसीतस्त्वतीत्यहदूरम् । अवदद्यस्सौमित्रिं तं मुनि + रामम् ॥१२०॥ तस्यागस्त्यभ्रातुः पर्णकुटियं विभाति धूमयुता । पश्ये- त्यविशद्यस्तां तं मुनि + रामम् ॥१२१॥ मृत्युं निगृह्य तपसाऽ गस्त्ये नेयंदिगा श्रितायाम्या । इति योऽनुजमाहगिरं तं मुनि + रामम् ॥१२२॥ अत्रेल्वल वातापी ब्राह्मणहिंसां सदाप्रकुर्वाणौ । आस्तामिति योऽवादित्तं मुनि + रामम् ॥१२३॥ कपटादिल्वल- दनुजो ब्राह्मणवेषाद्द्विजान्जघान बहून् । इति ऽयोनुज माहगिरं तं मुनि + रामम् ॥१२४॥ सोगस्त्यं गिरमूचे मद्गेहे भोज्यमद्यभव- तेति । इति योनुजमाहगिरं तं मुनि + रामम् ॥१२५॥ अथमेष रूपमनुजं वातापिनमेवपक्कमकरोत्सः इति योऽनुज + रामम् ॥१२६॥ मुनि भोजने समाप्ते सन्तुष्टोऽभूत्त देल्वलः कपटात् ।

रक्तार्द्रांमहिषतनुं पतितां दृष्ट्वाऽकुपन्मतङ्गमुनिः । इति यं प्रियसुहृद्भण त्तंसुग्रीवाप्रियं भजे रामम् ॥१३२॥ अशपन्मुनिराद्स्वधिया ज्ञात्वा तं वालिनं क्रुधादुष्टम् । इति यं प्रियसुहृ = रामम् ॥१३३॥ वाली तत्प्राणिभिर्वा वस्तुं योग्योऽत्रनेति मुनि रशपत् । इति यं कपिराड्भण त्तंसुग्रीव = रामम् ॥१३४॥ निवसेद्यादि मूढात्मा वर्षसहस्राणि शैलतां भजताम् । इति मुनिगिरमाह सयं तंसु = रामम् ॥१३५॥ अथ शापभयाद्वाली नेच्छत्यत्र प्रवेष्टुमपि पापी । इति सुहृदाहगिरं यं तंसु = रामम् ॥१३६॥ तस्यै षोऽस्थिसमूहः पर्वतवद्राजतेऽद्यपश्यत्वम् । इति सुहृदाह = रामम् ॥१३७॥ सप्तै तान्सालतरून्निष्पत्रयितुं समश्चससमर्थः । वालीतिसयमवादीत्तं सुग्री = रामम् ॥१३८॥ युधि तादृशबलिनं तं हन्तुं शक्नोषि वालिनं हि कथम् । इति यं रविजोऽपृच्छत्तं सुग्री = रामम् ॥१३९॥ मम संशयमद्यत्वं मोचयरामाऽद्यभीषयेन त्वाम् । इति यं रवि जोऽपृच्छत्तं = रामम् ॥१४०॥ तद्गिरमथयश्श्रुत्वा पादाङ्गुष्ठेन दुन्दुभेः कायम् । दशयोजनगमनौ त्सीत्तंसु = रामम् ॥१४१॥ आर्द्रः पूर्वं कायः शुष्कोऽ भूदद्यकालतो बहुशः । इति कपिराह यमनघं तंसु = रामम् ॥१४२॥ अत्र ज्ञातुमशक्य स्तरतमभावो बलस्य वां लोकैः । इति कपिराहयम = रामम् ॥१४३॥ भिन्द्यायद्येकं त्वं सालं गृह्णाम्यमोघवीर्यं त्वाम् । इति कपिराहयमनघत्तं सुग्री = रामम् ॥१४४॥ अथ तद्वचनं श्रुत्वा चिक्षेपैकं शरं द्रुमुद्दिश्य । कर धृत कोदण्डोयस्तंसुग्री = रामम् ॥१४५॥ सालान्भित्वा सप्त प्रस्थभुवं तस्य विशयमपि तूर्णम् । यद्बाणस्तूर्णमगा त्तंसुग्रीव = रामम् ॥१४६॥ दृष्ट्वा तां त्सप्ततरू न्भिन्नान्कपिराड्ह्रिया च यत्पदयोः । तोषात्प्रणनाम तदा तंसुग्रीव = रामम् ॥१४७॥ विगतश्शोकः प्रीतिस्सञ्जाता त्वां च सुहृदमुपलभ्य । इति स यम-

*सकृदवादी त्वंसुग्रीवेष्टदं भजे रामम् ॥१४८॥ अथ गत्वाकिष्कि-न्धां सुग्रीवाद्यैस्सहानुजोमित्रैः । योऽतिष्ठदगच्छन्न स्तंसुग्री = रामम् ॥१४९॥ श्रुत्वा यत्सुहृदोरव मन्तःपुरतो बहिर्गतो वाली। युद्धार्थं पतिमतनोः त्वंसुग्री = रामम् ॥१५०॥ जघ्नतुरन्योन्यं तौ सूर्यजशक्रात्मजौ तदा बलिनौ । यस्मिन्पश्यत्यारा त्वंसुग्रीवे = रामम् ॥१५१॥ दृष्ट्वान्योन्यसमौतौ बाणन्नमुमोच धनुषिनि-*क्षिप्तम् । शत्रुप्राणहरं यस्तंसु = रामम् ॥१५२॥ यमपश्यन्सुग्रीवो वासस्थानं प्रदुद्रुवे भीतः । रक्तार्द्रीकृत काय स्तंसुग्री = रामम् ॥१५३॥ प्राप्तगिरिं यत्सुहृदं वालीनान्वव्रजत्ससुग्रीवम् । स्मृत मुनि-शापो भीत्या तंसु = रामम् ॥१५४॥ हनुमत्प्रमुखै स्सचिवैः प्राप्तं यं सानुजं समुद्वीक्ष्य । ह्रीणः कपिरवदद्वां तंसु = रामम् ॥१५५॥ प्राप्तं त्वयाफलं किं शत्रोर्हस्तेन घातयित्वामाम् । इति सुहृदाहगिरं यं तंसु = रामम् ॥१५६॥ श्रुत्वासुग्रीवगिरं क्रोधव्य-सनेत्यजाशुश्रृणुममगाम् । इति योमित्रमभाणी त्वंसु=रामम् ॥१५७॥ स्वर विग्रहगतिवेषै र्भेदं वां नोपलक्षयेऽल्पमपि । इति योमित्र म = रामम् ॥१५८॥ दत्ताभयसंहारे ब्रूतः पापं श्रुतिस्मृती बहुधा । इति योमित्र म = रामम् ॥१५९॥ कुरुसौमित्रेऽस्यगळेचिह्नं गज-पुष्पिकालतावलयात् । इति योऽनुजमवदद्वां तंसु = रामम् ॥१६०॥ सतयाकण्ठस्थितया शुशुभेऽनिश्युडुपमालयेवशशी । यत्पुरतस्सुग्रीव स्तं = रामम् ॥१६१॥ अथ सर्वे किष्किन्धां येनयुता वालिपा-लितामद्रेः । निर्जग्मुस्सन्तुष्टा स्तंसुग्री = रामम् ॥१६२॥ यत्पु-रतस्सुग्रीवो हनुमान्नीलो नळोऽथतारोपि । निर्जग्मुस्स्वस्थाना त्तंसु = रामम् ॥१६३॥ पश्यन्विविधान्वृक्षा न्पथितमपृच्छत्कुतूहला-न्मित्रम् । कस्यैतद्वनमिति यस्तं सु = रामम् ॥१६४॥ श्रुत्वा यस्यगिरं द्रा ग्रविजोऽवादीद्वनेत्र सप्तजनाः । पूर्वं ह्यवात्सुरितिगां

तंसुग्रीवेष्टदं भजे रामम् ॥१६५॥ मुनयोऽत्राधश्शिरसो हेमन्तत्रीं-जलाशयेमग्नाः । अवसन्नित्याहसयं तंसु = रामम् ॥१६६॥ याता-स्ते वर्षे शते स्वर्लोकं पाञ्चभौतिकैर्देहैः । स हिता इत्याह सयं तंसु = रामम् ॥१६७॥ तेषामाश्रमभूमि नान्यैरद्यापि सुप्रवेशे यम् । इति गच्छन्नाहसयं तंसुग्रीव = रामम् ॥१६८॥ अत्र पतन्तिमृगाअपि ननिवर्तन्ते प्रविश्य सप्राणाः । इति गच्छन्नाहसयं तंसु = रामम् ॥१६९॥ भूषणशब्दागीतं गंधस्त्वेताग्नयोऽत्रभा-न्त्यधुना । इति गच्छन्नाहसय न्तं = रामम् ॥१७०॥ मित्रगिरं श्रुत्वाय स्तानुद्दिश्यप्रणाममकरोद्द्राक् । भक्त्यासौमित्रियुत स्तंसुग्री = रामम् ॥१७१॥ अथ सर्वे किष्किन्धां प्राप्यशरीरं नगैस्समाच्छाद्य । येनसहैवाऽतिष्टं स्तंसु = रामम् ॥१७२॥ यन्मित्वंऽरेद्रोहिन्वालि-न्युद्धाय शीघ्रमागच्छ । इत्याह्वयततमभय स्तंसुग्री = रामम् ॥१७३॥ वालि समुत्थांभीतिं बाणेनैकेन वारयिष्यामि । इति मित्रं योऽवादी त्तंसु = रामम् ॥१७४॥ यदिदृष्टिपथंप्राप्तो जीवन्ननिवर्ततेऽद्यवा-लीसः । इति मित्रं योऽवादी त्तंसुग्री = रामम् ॥१७५॥ अथ यन्मित्रे-णकृतं घोषं श्रुत्वा विनिर्गतं स्वपतिम् । शुद्धान्तात्ता रोचे तंसु = रामम् ॥१७६॥ रुष्टमशिष्टंदुष्टं यन्मित्वद्वेषिणं पतिं तारा । आ-लिङ्ग्यो चे वाच न्तंसुग्री = रामम् ॥१७७॥ निष्क्रामस्तवसहसा मास्तुनिमित्तं वदामिशृणुनाथ । इति यद्वृत्तज्ञोचे तंसु = रामम् ॥१७८॥ विजितस्य तस्यधैर्यं बल्याश्रयणं व्यनक्तिममबुद्धौ । इति यद्वृत्तज्ञोचे तंसु = रामम् ॥१७९॥ पूर्वेद्युरंगदोमा मूचेवत्सः पितृव्यमात्तसखम् । इति यद्वृत्त = रामम् ॥१८०॥ सुग्रीवप्रिय-कामो दशरथपुत्रस्समागतोऽस्तीति । यद्वृत्तज्ञाऽहपतिंतं तंसु = रामम् ॥१८१॥ नविरोधस्तेनसमं योग्यो रामेण ते बलिष्ठेन । इति यद्वृत्तज्ञोचे तंसुग्रीवेष्टद भजे रामम् ॥१८२॥ वक्ष्यामि हितमहं ते

सुग्रीवं त्वं कुरुष्व युवराजम् । इति यद्वृत्तज्ञो चेतं सुग्री = रामम् ॥१८३॥ रामेण सौहृदन्ते भवतु भुविख्यात कीर्ति शौर्येण । इति यद्वृत्त = रामम् ॥१८४॥ भ्रातृ समं भुविबन्धुं नाथनपश्यामि धीरनशृणोमि । इति यद्वृत्त = रामम् ॥१८५॥ इति तारागदितांगां श्रुत्वायन्मित्र शत्रु रति कोपात् । तां निर्भत्स्र्याऽह्वगिरं तंसु = रामम् ॥१८६॥ श्रुत्वा सुग्रीवकृतं गर्जनमेतत्कथं सहेऽहमिति । यन्मित्र द्विडवादीत्तं सुग्री = रामम् ॥१८७॥ धर्मज्ञो दाशरथिः कोपं किं वानरे करोतीति । यन्मित्र द्विडवादी त्तं = रामम् ॥१८८॥ तस्य द्वेषी नाहं दशरथतनयस्य वानरेश इति । यन्मित्र द्विडवादी त्तं = रामम् ॥१८९॥ मयिभक्तिर्यदितारे स्त्रीभिस्सहगच्छमन्दिरं त्वमिति । यन्मित्र द्विडवादी त्तं = रामम् ॥१९०॥ मुष्टिनखदन्तपादा ऽऽघातैस्सं पीड्यतं त्यजामीति । यन्मित्र द्विड = रामम् ॥१९१॥ आश्वास्येत्थं भार्यां प्रययौ युद्धाय सूर्यपुत्रेण । यन्मित्र द्विड्वेगा त्तं = रामम् ॥ १९२ ॥ यत्सुहृदं दृष्ट्वाऽथो वालीवस्त्रं कटौ दृढं बध्वा । उद्यम्य मुष्टिमागा त्तंसु = रामम् ॥ १९३ ॥ यन्मित्रमापतन्तं त्वत्प्राणान्हर्तुमागतो मुष्टिः । इत्युक्त्वा ऽताडयदथ तंसुग्री = रामम् ॥१९४॥ अथ यन्मित्रं सालं द्रागुत्पाट्याऽहनत्क्रुधाशत्रुम् । वालिनमतिबलिनं तं तंसु = रामम् ॥१९५॥ वर्धिष्णुमिन्द्रपुत्रं सूर्यजमथहीयमानमपि दृष्ट्वा । ऐक्षतकोदण्डं य स्तंसु = रामम् ॥१९६॥ सन्धाय धनुषि बाणं यमुना भ्रातास्वकाल चक्रमिव । वालिन्यमुचद्यो द्राक्तंसु = रामम् ॥१९७॥ यस्यज्यातलघोषं श्रुत्वाऽरण्यस्थ महिषमृगविहगाः । दुद्रुवुरन्यत्रभिया तंसु = रामम् ॥१९८॥ अथ यन्मुक्तो बाणः कालानलसन्निभोरुचादीप्तः । न्यपतद्वाल्युरसितदा तंसु = रामम् ॥१९९॥ इन्द्रध्वज इव भूम्या मिन्द्रसुतोधः पपातरण-

भूमौ । यद्बाणाहत वक्षा स्तंसुग्रीवेष्टदं भजे रामम् ॥२००॥ आश्वयुजमासिशक्र ध्वज इव वालीसदैव बलशाली । यद्बाणहतो न्यपत त्तंसु = रामम् ॥२०१॥ इन्द्रसुतं युधिपतितं वालिनमथ-हेममालिनं दृष्ट्वा । योमन्दमाप्सविधं तंसु = रामम् ॥२०२॥ यं दृष्टानुज सहितं वाचं प्रोचेऽथ धर्मविनययुताम् । परुषां वाली-न्द्रसुत स्तंसु = रामम् ॥२०३॥ प्रथितस्त्वं तेजस्वी दशरथपुत्र स्सुधार्मिकः कुलजः । इति यंसप्राशंस त्तंसु = रामम् ॥२०४॥ *गुणिनस्तत्र योग्योवा युद्धेशत्रोः पराङ्मुखस्य वधः । ब्रूहीति सय-मपृच्छत्तं वालिध्वंसकं भजे रामम् ॥२०५॥ क्षत्रियकुलजः कोवा हन्त्यवधीद्वाहानिष्यतेऽदृष्टः । ब्रूहीति स यमपृच्छ त्तंवालि = रामम् ॥२०६॥ मानवजातिर्नाहं कपिजातिस्त्वं न चासिवधहेतुम् । ब्रूहीति स यमपृच्छ त्तंवालि = रामम् ॥२०७॥ फलमूलभक्षकं मां कपिजातिं त्वं किमर्थमवधीर्ना । ब्रूहीति स यमपृच्छ त्तंवालि = रामम् ॥२०८॥ भूमिर्हिरण्यरूप्ये योषिद्वानौ विरोधबीजानि । ब्रूहीति स यमपृच्छ त्तं = रामम् ॥२०९॥ किं वक्ष्यसि सत्संघे कृत्वा कर्मे दृशं जनैर्गर्ह्यम् । ब्रूहीति स यमपृ = रामम् ॥२१०॥ धार्येवाचर्मास्थ्यथभक्ष्यं वा मां समद्यममभूपैः । ब्रूहीति स यमपृ = रामम् ॥२११॥ शल्यक गोधाश्वाविध शशकूर्माद्विजानिभूपजन भोज्याः । इति स यमवदद्वाचं तंवालि = रामम् ॥२१२॥ तारो-क्ति महमश्रृण्व न्कालस्य वशं समागतोऽस्म्यधुना । इति स यमवद-द्वाचं तंवालि = रामम् ॥२१३॥ युध्येथा मम पुरतश्चे त्त्वं पश्ये-र्विव स्वतस्तनयम् । इति स यम = रामम् ॥२१४॥ उक्तोयदिपूर्व-महं सीताऽऽनीताभवेद्दिनेनमया । इति सयमवदद्वाचन्तं वालि = रामम् ॥२१५॥ कण्ठे बध्वादद्यां दुष्टं दशकण्ठ मेकादिवसेन । इति स यम वदद्वाचन्तं वालिध्वंसकं भजे रामम् ॥२१६॥ युक्तमनुजस्य राज्यं

नोयुक्तं ते मनाग्वधकरणम् । इति तयम = रामम् ॥२१७॥ इत्थमधिक्षिप्तोयः प्रोचे वाचं शुचाऽन्वितं पतितम् । वालि न मथधर्मज्ञस्तंवालिध्वंस = रामम् ॥२१८॥ इक्ष्वाकूणामेषा भूमिर्गिरिकाननैर्युतासर्वा । इति यो वालिनमभण तंवालि = रामम् ।२१९॥ धर्मात्मा भरतस्तां नीतिज्ञः पातिपत्तने निवसन् । इति यो वालिन = रामम् ॥२२०॥ तस्याज्ञयाऽहमधुना दुष्टानां निग्रहं करोमि वने । इति यो वालिन = रामम् ॥२२१॥ भ्रातुःपत्न्यां रमसे धर्मत्यक्त्वा सनातनं हित्वं । इति यो वालिन = रामम् ॥२२२॥ पुत्रश्शिष्योऽवरजः पुत्र समास्ते त्रयोऽपि विज्ञेयाः । इति यो वालिन् = रामम् ॥२२३॥ भगिनीमवरजभार्यां पुत्रींचेच्छन्भवेत्सदा- दण्ड्यः । इति यो वालिन = रामम् ॥२२४॥ भरतो राज्यस्थानां नृणां वृत्तं विचारयन्नास्ते । इति यो वालिन = रामम् ॥२२५॥ भरतादेशादहमप्यत्रस्थानां विचारणं कुर्वे । इति यो वालिन = रामम् ॥२२६॥ शरणागतरक्षायै त्वामहमहनंकृतान्यदारगातिम् । इति यो वालिन् = रामम् ॥२२७॥ सुग्रीवं कृतसख्यं रक्षितु मद्यक्रुधाऽहमहनं त्वाम् । इति यो वालिन = रामम् ॥२२८॥ नृपकृतदण्डाः पापा स्स्वर्गयान्तीति शास्त्रमपिप्रश्नेः । इति यो वालिन = रामम् ॥२२९॥ शृणुचान्यन्नृपानां छन्नानां शास्त्रसंमतामृगया । इति यो वालिन = रामम् ॥२३०॥ मां सार्थिनोनृपाला विध्यन्तिमृगान्स्व वागुरालग्नान् । इति यो वालिन = रामम् ॥२३१॥ भक्ष्याभक्ष्यविचारो मृगयायां नास्तिभूपधुर्याणाम् । इति यो वालिन = रामम् ॥२३२॥ अज्ञात्वाधर्ममां दूषयसित्वंत्वनात्म धर्मज्ञः । इत्युक्तस्सयमवद तंवालि = रामम् ॥२३३॥ रोषंकर्तुंनार्ह स्यज्ञानादुक्तवाक्यविषयेत्वम् । इति वाल्यथयमभाणी तंवालि = रामम् ॥२३४॥ नात्मानंतारांवा बन्धून्वाहन्तथानशोचामि । इति वाल्यथयमभाणी

त्वंवालिध्वंसकं भजे रामम् ॥२३५॥ अङ्गदमनुगुणपुत्रं त्यक्त्वागन्तुं कथन्नुशक्नोमि। इति वाल्यथयम = रामम् ॥२३६॥ तारेयोऽयंरक्ष्यो बलवान्धीमान्मया परित्यक्तः। इति वाल्यथयम = रामम् ॥२३७॥ सुग्रीवाङ्गदयोस्तां कुरुयाप्रीतिं स्तवानुजे भरते। इति यमभाणीद्वाली = रामम् ॥२३८॥ त्वांमत्वासमबुद्धिं तारावाचं निरस्य युधिनिहतः। इति यमभाणीद्वाली तंवालिध्वं = रामम् ॥२३९॥ इत्युक्त्वायं विनयाद्वालीभेजेथमूकवन्मौनम्। कपिमुख्यानां पुरतस्तं वालि = रामम् ॥२४०॥ आश्वासयत्तदार्यो वालिनमुर्व्यां विवेष्टमानन्तम्। करुणानिधिरथसाम्ना तंवालिध्वं = रामम् ॥२४१॥ दण्ड्यस्त्वं शास्ताहं शास्त्रीयं कार्यमद्यानिष्पन्नम। इति वालिनमभणद्यस्तंवालि = रामम् ॥२४२॥ त्यजशोकभीतिमोहा न्हृदयस्थांस्त्वंविधिर्हिदुर्लंघ्यः। इति वालिनमभ = रामम् ॥२४३॥ त्वय्यं गदोयथासीन्मयि सुग्रीवेतथैव वत्स्यतिहि। इति वालिन = रामम् ॥२४४॥ इत्थमुदारं वचनं श्रुत्वा वाली कृताञ्जलिःप्रोचे। वाच्यं धर्मज्ञ स्तंवालिध्वं = रामम् ॥२४५॥ शरताडनवेदनया यद्यद्वोचं क्षमस्वतदवाच्यम्। इति यमवादि द्वाली = रामम् ॥२४६॥ अथ तरुपाषाणशरै र्विक्षतगात्रोमुमोहरण भूमौ। यत्पुरतःकपिभूप स्तं = रामम् ॥२४७॥ तारासुता श्रुत्वा यद्बाण हतं मृतं स्वभर्तारम्। आगच्छद्रणभूमिं तंवालि = रामम् ॥२४८॥ वक्षसि मूर्ध्न्युदरेसा रोदनपूर्वं प्रताडयन्ती द्राक्। ताराऽपश्यत्पुरत स्तंवालि = रामम् ॥२४९॥ तारे रक्षस्वसुतं राममिषाद्वालिहाऽस्तिशमनोऽत्र। इति गिरमश्रृणोद्य स्तंवालि = रामम् ॥२५०॥ नगरमिदं संरक्षन्नंगदएव प्रशास्तु कपिराज्यम। इति कपिगिरमश्रृणोद्य स्तंवालि = रामम् ॥२५१॥ इत्थं कपिवचनंसा श्रुत्वा ताराबभाण वचनमिदम्। यद्दर्शनमिच्छन्ती तं करधृतचापमाश्रये रामम् ॥२५२॥

श्रुत्वाप्राणेशमृतिं सुतधनराज्यैः किमस्तिममकृत्यम् । इति यत्पुरतोऽगात्सा तंकर = रामम् ॥२५३॥ मम युधिमृतस्य भर्तुस्त्वरयांघ्रियुगं त्वहंगमिष्यामि । इति यत्पुरतोऽगात्सा तंकर = रामम् । २५४॥ हन्तारं दनुजानां क्षेप्तारंभूभृतांपतिंदृष्ट्वा । यमतीत्याऽगात्साविधं तंकरधृत = रामम् ॥२५५॥ अथ ताराभुविपतिता स्वयमुत्थायार्य पुत्रकुत्राऽऽगाः । इति यत्पुरतोऽरोदी त्तंकरधृत = रामम् ॥२५६॥ नाथोत्तिष्ठोतिष्ठत्वं [illegible]न्तुमया । इति यत्पुरतोऽरो = रामम् ॥२५७॥ त्वत्पुरतःक्रन्दन्तीं दीनांकिन्नाभिभाषसे भर्तः । इति यत्पुरतोऽरो = रामम् ॥२५८॥ मांशोकाब्धौपतितां त्यक्त्वा यातुंतवाद्ययुक्तंवा । इति यत्पुरतोऽरो = रामम् ॥२५९॥ मद्वातों त्य त्वाल्वं युद्धेऽप्सरसां पतित्वमापः किम् । इति यत्पुरतोऽरो = रामम् ॥२६०॥ सुखलालितोङ्गदोयं त्वदनुजसन्निधेकथं वसेद्वदमे। इति यत्पुरतोऽरो = रामम् ॥२६१॥ वैधव्यंत्वन्मरणा ज्जातंभर्तः कथंसहेवदभो । इति यत्पुरतो = रामम् ॥२६२॥ सुततवपितृसन्दर्शन मद्यविरामंगतंहिसंपश्य । इति यत्पुरतो = रामम् ॥२६३॥ तारेषुहतंवालिनमालिङ्ग्यरुदन्तमङ्गदंवीक्ष्य । यत्पुरतो बह्वरुद त्तंकर = रामम् ॥२६४॥ सुग्रीवभवसकामो पत्नींराज्यं निरङ्कुशंप्राप्य । इति यत्पुरतस्सोचे तंकर = रामम् ॥२६५॥ इति तस्यांप्ररुदन्त्यां वानरनार्यो गृहीत वालिसुताः । यत्पुरतोरुरुदुस्ता स्तंकर = रामम् ॥२६६॥ अथ तारांक्रन्दन्तीमाश्वासयदेत्यबुद्धिमान्हनुमान् । यत्पुरतश्शास्त्रगिरा तंकर = रामम् ॥२६७॥ जन्तुस्स्वकृतस्यफलं प्राप्नोत्येवाऽथकर्मणःकाले । इत्याहसयत्पुरत स्तंकर = रामम् ॥२६८॥ बुद्बुदसदृशेदेहे शोकस्तोषः क्रमात्समापतति । इत्थाहसयत्पुरत = रामम् ॥२६९॥ हर्यर्क्षराज्यमेत त्पालयपुत्रेण मुञ्चशोकं त्वम्। इत्थाहसयत्पुरत स्तंकर = रामम् ॥२७०॥ संस्क्रियतांहारिराजः

पुत्रोराज्येऽभिषिच्यतामधुना। इत्याहसयत्पुरत स्तंकरधृतचापमाश्रये रामम्॥२७१॥ पश्यन्तीसुतमेनं सिंहासनगंत्वमेष्यासि प्रमदम्। इत्याहस = रामम् ॥२७२॥ इत्युक्ताहनुमन्तं ताराबलवन्तमाह धीमन्तम्। यत्पुरतस्साविनयात्तंकर = रामम् ॥२७३॥ आस्तेऽस्यपितृव्य स्सुग्रीव स्सर्वकार्यनिर्वाही। इति यत्पुरतस्सोचे तंकर = रामम्॥२७४॥ बन्धुःपुत्रस्यपिता नचमाताऽहंकदापि पवनजने। इति सोचेयत्पुरत स्तंकर = रामम्॥२७५॥ प्राप्तजयंसुग्रीवंवालीप्रोवाचसनयावाचा। यस्मिञ्छृण्वति पुरत स्तंकर = रामम्॥२७६॥ गच्छन्तं यमभवनं ज्ञात्वा मां त्वं गृहाण कपिराज्यं। इत्याहसयत्पुरत स्तंकर = रामम्॥२७७॥ राज्ययशश्श्रीप्राणा न्प्रजहाम्यद्याहमेककालेन। इत्याह सयत्पु = रामम्॥२७८॥ असुकरमपिमद्वाक्यं कुर्वस्यां प्रोक्तमस्ववस्थायाम्। इत्याहसयत्पु = रामम् ॥२७०॥ मत्प्राणैस्सदृशमिमं स्वौरसमिवपुत्रमन्वहं पश्य। इत्याहसयत्पु = रामम्॥२८०॥ अस्य हिदातात्राता भीतावभय प्रदस्त्वमेवपिता। इत्याहसयत्पु = रामम् ॥२८१॥ तारेयोऽयं बलवान्राक्षस युद्धेतवाग्रतोयाता। इत्याहसयत्पु = रामम् ॥२८२॥ तारासुषेणदुहिता यद्यद्ब्रूतेतदेवफलति वचः। इत्याहसयत्पु = रामम् ॥२८३॥ कर्तव्यंवैदेही मार्गणमेव त्वयाऽद्यसुग्रीव। इत्याहसयत्पु = रामम् ॥२८४॥ मालामाधत्स्वेमां श्रीनिलयां काञ्चनीमथैन्द्रीन्त्वम्। इत्याहसयत्पु = रामम् ॥२८५॥ इत्युक्तस्सुग्रीवो निर्हर्षःप्राग्रहीत्तदामालाम्। यत्पुरतो लज्जवां स्तंकर = रामम्॥२८६॥ दत्वाऽनुजायमालां वाल्यङ्गदमग्रतस्थितं मधुराम्। गिरमूचे यत्पुरत स्तंकर = रामम् ॥२८७॥ भजपुत्रदेशकालौ क्षममाणस्तं प्रियाप्रियेद्वंद्वे। इत्याहसयत्पुरत स्तंकर = रामम् ॥२८८॥ सुग्रीववशेस्थित्वा दान्तोऽर्थपरःप्रभोस्तु कुरुकार्यम्। इत्याहसयत्पुर = रामम्॥२८९॥ इत्युक्त्वोत्क्रान्तासौ

बन्धुतावा शौर्यं वानास्ति कर्मवशगस्य। इति योगिरमवदत्तां तंकपिराट्पूज्यमाश्रये रामम् ॥३२५॥ सुग्रीवत्वं तारांऽगदसहितो वालिदाहको भूयाः। इति गिरमाहयदनुज स्तंकपि = रामम् ॥३२६॥ प्रेषय चन्दनकाष्ठा न्या हर्तुं त्वं भटांश्च सुग्रीव। इति गिरमाहयदनुज स्तंकपि = रामम् ॥३२७॥ आश्वासयाङ्गदं त्वं त्वदधीना वर्ततेऽद्य किष्किन्धा। इति गिरमाहयदनुज स्तंकपि = रामम् ॥३२८॥ तैलं वस्त्राणि धृतं माल्यं गन्धं समानयेत्पुत्रः। इति गिरमाहयदनुज = रामम् ॥३२९॥ शिबिका वहनसमर्थैः प्लवगैस्तारोद्रुतं समायातु। इति गिरमाहयदनुज = रामम् ॥३३०॥ यद्वरजवचश्श्रुत्वा सर्वं सज्जंप्रचक्रिरेकपयः। सुग्रीवाज्ञावशगा स्तंकपि = रामम् ॥३३१॥ शिबिकां पुष्पकसदृशां दृष्ट्वायोवाचमाह सौमित्रिम्। भक्तानां दुःखहरं तंकपि = रामम् ॥३३२॥ सुग्रीवं वदशीघ्रं संस्कारार्थन्तु वालिदेहस्य। इति योऽनुजमूचेय स्तंकपि = रामम् ॥३३३॥ अथ यद्भ्रातुर्वचसा सुग्रीवस्साङ्गदस्तदा ज्येष्ठम्। शिबिकायामयुजद्रात्क्तं कपि = रामम् ॥३३४॥ अथ विविधवस्त्र भूषण माल्यै स्तद्देहमाश्वलश्चक्रुः। यत्पुरतः कपिमुख्या स्तंकपि = रामम् ॥३३५॥ पुरतः प्रयान्तु कपयः पश्चाच्छिबिकाततास्त्रियश्चेति। कपिराड्गिरमशृणोद्य स्तंकपि = रामम् ॥३३६॥ क्रोशन्तः प्रययुस्ते बन्धुजनास्सांगदास्सहस्त्रीभिः। यस्मिन्पश्यति पुरत स्तंकपि = रामम् ॥३३७॥ यद्बाणहतं तारा शिबिकातलशायिनं ततस्वां के। कृत्वाविललाप वने तंकपि = रामम् ॥३३८॥ हा वानरराजप्रिय कस्मान्मान्नाभिभाषसे महिषीम्। इति यद्बाणहतोऽवद त्तंकपि = रामम् ॥३३९॥ अथ तारां वानर्यो यद्बाणहतस्य वालिनः पत्निम्। ऊचुस्सान्त्वं वचनं तंकपि = रामम् ॥३४०॥ विधिवद्दहनं पैतृक मुदकं नद्या मकारयद्विधितः।

यः कपिराजस्य तदा तंकपिराट्पूज्यमाश्रये रामम् ॥३४१॥ अथ सुग्रीवानुगताः कपयस्सर्वे समाययुस्थानात् । यस्यसमीपं वेगा त्तंकपि = रामम् ॥३४२॥ अथ हनुमान्विहिताञ्जलि रूचे वाचं विदेह जारमणम् । यं भक्तयानतकाय स्तंकपि = रामम् ॥३४३॥ सुग्रीवो राज्यमिदं प्रापद्भवतः प्रसादमहिमातः । इति हनुमान्यमभाणी त्तंकपि = रामम् ॥३४४॥ किष्किन्धामभिगन्तुं त्वामर्थयते प्रणम्य सुग्रीवः । इति हनुमान्यमभाणी त्तं = रामम् ॥३४५॥ त्वामिच्छत्यर्चयितुं रत्नैर्माल्यै स्सहानुजं कपिराट् । इति हनुमान्यमभाणी त्तंकपि = रामम् ॥३४६॥ इत्थं स्वदूतवचनं श्रुत्वा प्रोवाचतं हनूमन्तम् । धीमन्तं तोषाद्य स्तंकपि = रामम् ॥३४७॥ वर्षाण्यहं चतुर्दश नगरं वानो विशामि न ग्रामम् । इति भक्तं योऽभाणी त्तंकपि = रामम् ॥३४८॥ राज्येभिषिच्यतामय मनुजो राज्ञस्त्विवतीदमुक्त्वातम् । सुग्रीवमथोचेय स्तंकपि = रामम् ॥३४९॥ सुग्रीवांगदमेनं कुरु युवराजं तवाभिषेकादिने । इत्याज्ञापयदथय स्तंकपि = रामम् ॥३५०॥ प्रविशत्वं किष्किन्धां वर्षाकालस्समागतोऽद्य सखे । इत्याज्ञापयदथय स्तंकपि = रामम् ॥३५१॥ वत्स्यावश्शैलेस्मि न्मासांश्चतुरोऽपि वार्षिकानावाम् । इति मित्रं योऽभाणी त्तं = रामम् ॥३५२॥ अभिषिक्तस्त्वं राज्ये सुहृदस्सन्तोषय स्वधर्मेण । इति मित्रं योऽभाणी त्तंकपि = रामम् ॥३५३॥ इति येनानुज्ञातः प्रविवेशपुरीं स्वलंकृतां तुष्टः । सुग्रीवोऽङ्गदसहित स्तंकपि = रामम् ॥३५४॥ हनुमान्द्विविदोमैन्द श्शरभोगवयोऽथ जांबवान्नीलः । अभ्यषिचन्यत्सुहृदं तंकपि = रामम् ॥३५५॥ आहृत्य समुद्रजलं गाङ्गं तीर्थं च हैमपीठगतम् । तेभ्यषि च न्यत्सुहृदं तंकपि = रामम् ॥३५६॥ अभिषिक्तं यन्मित्रं गाढं परिरभ्य वा-
* लिनः पुत्रम् । अङ्गदमासेचयदथ तंप्रस्रवणस्थमाश्रये रामम् ॥३५७॥

अथ यस्मै सुग्रीवो राज्य प्राप्तिं कळत्र संग्रहणम् । प्रोक्त्वापुर्यामवसत्तं प्रस्रवणस्थमाश्रये रामम् ॥३५८॥ सन्तोष्येत्थंमित्रं प्रस्रवणन्नामपर्वतं प्राप्य । योऽनुजसहितोऽवात्सीत्तं प्रस्र = रामम् ॥३५९॥ पश्यगुहायाः पुरत श्शुद्धजलां निम्नगां सुतामरसाम् । इति योलक्ष्मणमूचे तंप्रस्र = रामम् ॥३६०॥ तत्र वसन्यस्सीतां स्मृत्वा रात्रौ शशाङ्कसहितायाम् । निद्रारहितोऽशो च त्तंप्रस्र = रामम् ॥३६१॥ लब्ध्वा राज्यं कपिरा डुमया सहबन्धुभिश्च सन्तोषम् । भजतीति ननन्दचय स्तंप्रस्र = रामम् ॥३६२॥ इत्थमनिद्रं विरहा त्सीतायायं कृशां गमुद्वीक्ष्य । अनुजोऽभाणीद्वचनं तंप्रस्र = रामम् ॥३६३॥ आर्यव्यथयाऽद्यालं वार्षिककालः प्रयातु दुःखकरः । इत्यनुजो यमभाणी त्तंप्रस्र = रामम् ॥३६४॥ शक्तः परिवर्तायितुं लोकमिमं त्वंससागरं साद्रिम् । इत्यनुजो = रामम् ॥३६५॥ मित्रं स तु सुग्रीवो हनुमान्बलवानतीव भक्तौ स्तः । इत्यनुजो = रामम् ॥३६६॥ शोकोमाऽस्तु वृथातें बलहानिकरस्त्यजाशुतं दूरात् । इत्यनुजो यमभाणी त्तंप्रस्र = रामम् ॥३६७॥ इत्थं योऽनुज वचनं श्रुत्वा स्निग्धं वचस्तदाऽभाणीत् । लोकैकपूज्यवाचं तंप्रस्र = रामम ॥३६८॥ सुग्रीवस्य नदीनां चेच्छन्नस्मि प्रसादमद्याऽहम् । इत्यनुजं योऽभाणी तंप्रस्र = रामम् ॥३६९॥ पश्यानुजकालमिमं यमशासन कंठसच्छविं भीमम् । इत्यनुजं योऽभाणी त्तंप्रस्र = रामम् ॥३७०॥ भूनां धैर्यापहरः कालस्स्वंतः कथं भवेद्वदमे । इत्यनुजं योऽभाणी त्तंप्रस्र = रामम् ॥३७१॥ शोको मम विस्तीर्णो वर्षा भृश दुर्गमाश्च दुष्टोऽरिः । इत्यनुजं यो = रामम् ॥३७२॥ राज्यं पत्नीं लब्ध्वा ह्युपकारं वेत्ति वानरा कपिराट् । इत्यनुजं यो = रामम् ॥३७३॥ इत्युक्तवन्तमिति विहिताञ्जलि राह शोकहारिवचः । यं सीता विरहयुतं तंप्रस्र = रामम् ॥३७४॥ सुग्रीव स्सत्यधृतिः

कुरुते सर्वं यथोक्तकारीसः । इति यमवादीदनुज स्तंप्रस्रवणस्थ-माश्रये रामम् ॥३७५॥ आस्ते शरत्प्रतीक्षः कपिराट्तावद्भवान-पिक्षमताम् । इति यमवा = रामम् ॥३७६॥ अथ यद्दूतो हनुमा न्गतबकांविद्युत्कमंबरं विमलम् । दृष्ट्वाऽऽगाद्राजगृहं तंप्रस्र = रामम् ॥३७७॥ सुग्रीवं क्रीडन्तं तारायुतया स्वभार्ययारुमया । अश्रौषी-द्यद्दूत स्तंप्रस्र = रामम् ॥३७८॥ अथ यद्दूतो हनुमा न्सुग्रीवं प्राप्यवचन मवददिदम् । पथ्यं धर्मार्थयुतं तंप्रस्र = रामम् ॥३७९॥ दण्डः कोशोराज्ञो मित्राण्यायुश्श्रियं प्रतन्वन्ति । इति यद्दूतोऽवा-दी त्तंप्रस्र = रामम् ॥३८०॥ मित्राणां संग्रहणं शिष्टं तव चा-स्तिकार्यमद्यविभो । इति यद्दूतोऽवादी त्तंप्रस्र = रामम् ॥३८१॥ वैदेह्याः परिमार्गण कालं प्राप्तन्नवेत्सि संदनस्थः । इति यद्दूतो ऽवादी त्तंप्रस्र = रामम् ॥३८२॥ तस्य त्वं कुरु कार्यं येनकृतं ते मनीषितं पूर्वम् । इति यद्दूतोऽवादी त्तंप्रस्र = रामम् ॥३८३॥ आज्ञापय कपि वीरा न्वैदेह्या मार्गणार्थ मद्यत्वम् । इति यद्दूतोऽवादी त्तंप्रस्र = रामम् ॥३८४॥ यस्ये च्छालोकानां सृष्टिस्थितिमारणेषु शक्ताऽऽस्ते । इति यद्दूतोऽवादी त्तंप्रस्र = रामम् ॥३८५॥ रक्षो सुर संहारो यस्ये च्छामात्रतोऽपि किन्न भवेत् । इति यद्दूतो-ऽवादी त्तंप्रस्र = रामम् ॥३८६॥ त्वदभिप्रायं ज्ञात्वा कुरु ते कार्यं स्वकीयमपि योद्राक् । इति यद्दूतोऽवादी त्तंप्रस्र = रामम् ॥३८७॥ इति यद्दूते नोक्तः कपिराण्णीलं तदाऽभणद्वाचम् । सेनासंग्रहणेच्छु स्तंप्रस्र = रामम् ॥३८८॥ क्षिप्रन्त्वन्नीलकपी न्वनागिरिदुर्गाश्रयान्समानयतान् । इति तं यत्सुहृदभण त्तंप्रस्र = रामम् ॥३८९॥ यो नायाति कपि द्रा ग्दण्डः प्राणान्तिको भवे-त्तस्य । इति तं यत्सुहृदभण त्तंप्रस्र = रामम् ॥३९०॥ इति कृत्वाऽऽज्ञां कपिराड्यन्मित्रः प्राविशद्गृहं स्त्र्युषितम् । क्रीडो चितमति

रुचिरं तंप्रस्रवणस्थमाश्रये रामः ॥३९१॥ कालमतीतं विमलं गगनं चन्द्रस्फुरत्तदा दृष्ट्वा । योऽस्मरदन्तस्सीतां तंप्रस्र = रामम् ॥३९२॥ वैदेहीरहितोऽहं जीविष्याम्यद्यवत्सकथमेकः । इति यो विललापगिरौ तंप्रस्र = रामम् ॥३९३॥ सीतावामद्विरहं राक्षस वशगाकथं स हेतैका । इति यो विललाप = रामम् ॥३९४॥ इत्थं विलपन्तं यं प्रोवाचगिरं तदाऽनुजोदीनम् । गम्भीरां शोकहरां तंप्रस्र = रामम् ॥३९५॥ जलगर्भो जलदोऽयं शान्तः कालस्समागतोऽद्यान्यः । इति यमवरजोऽवादी त्तंप्रस्र = रामम् ॥३९६॥ सुग्रीवस्त्वन्मित्रं कालानुगुणं यतिष्यते प्राज्ञः । इति यमवरजोऽवादी त्तंप्रस्र = रामम् ॥३९७॥ श्रुत्वेदं वचनं यः सीता स्मरणादतीव खिन्नमनाः । उचेऽवरजं वाचं तंप्रस्र = रामम् ॥३९८॥ शान्तो मेघगजानां नादोविपिनेकलापिनां चाद्य । इत्यवदद्योऽवरजं तंप्रस्र = रामम् ॥३९९॥ लज्जायुक्ताजघनं स्त्रीवनदीपुळिनमद्य दर्शयति । इत्यवदद्योऽवरजं तंप्रस्र = रामम् ॥४००॥ हंसा स्सचक्रवाका स्स्वस्त्रीयुक्ता नदीषु विरहन्ति । इत्यवदद्योऽवरजं तंप्रस्र = रामम् ॥४०१॥ हृतराज्ये स्त्रीरहिते मयिसुग्रीवः कृपां करोति नवा । इत्यवदद्योऽवरजं तंप्रस्र = रामम् ॥४०२॥ समयं कृत्वादुर्धी र्नो वेदीत्कालमागतं तमिमम् । इत्यवदद्यो = रामम् ॥४०३॥ त्वं किष्किन्धां गत्वा व्रद सुग्रीवं मयोक्तमिममर्थम् । इत्यवदद्यो = रामम् ॥४०४॥ हृदिचिन्तय वालिनमिति वद मम वचनं कपीश्वरेमत्ते । इत्यवदद्यो = रामम् ॥४०५॥ तादृशविशिखाबहव स्सन्तीमयीति त्वमद्यवद मम गाम् । इत्यवदद्यो = रामम् ॥४०६॥ स फलां कुरु वाचं त्वं त्विति मम वचनं वदाऽद्य सुग्रीवे । इत्यवदद्यो = रामम् ॥४०७॥ श्रुत्वै तां गिरमनुज स्सुग्रीवे बुद्धिमान्द्यमनुचिन्त्य । यमवादीत्करुणाब्धि तंप्रस्र = रामम् ॥४०८॥

सुग्रीवो मधुमत्तो नाङ्गीकृतमद्यपास्यति स्वधिया। इति यमवादी दनुज स्तंप्रस्रवणस्थमाश्रये रामम् ॥४०९॥ दुर्बुद्धेस्तस्येदं राज्यं योग्यन्नजातुदातुमपि। इति यमवादीदनुज स्तंप्रस्र = रामम् ॥४१०॥ सुग्रीवं हत्वाहं कुर्वे राजानमंगदं राज्ये। इति यमवादीदनुज = रामम् ॥४११॥ पश्यतु निहतो ज्येष्ठं सुग्रीवस्त्यक्त सत्यवाक्स-मया। इति यमवा = रामम् ॥४१२॥ श्रुत्वा रूक्षं वचनं सौमि-त्र्युक्तं तदाऽऽप्तसुग्रीवः। योऽनुजमूचे वाचं तंप्रस्र = रामम् ॥४१३॥ इत्थन्नार्हसि वक्तुं सुग्रीवं त्वं क्रुधाऽऽप्तमतिधिषणम्। इति योऽनुज-मूचेगा न्तंप्रस्र = रामम् ॥४१४॥ अथ यद्वाक्यादनुजः प्रययौ-*सुग्रीवमाप्तमानेतुम्। किष्किन्धां धृत चाप स्तंसुग्रीवाप्तमाश्रये रामम् ॥४१५॥ अथ किष्किन्धाद्वारेऽपश्यद्यस्यानुजः कपीन्कुपि-तान्। कर धृत विटपि गिरीन्द्रां स्तंसुग्री = रामम् ॥४१६॥ दृष्ट्वा तान्सौमित्रि द्विगुणं क्रुद्धो बभूवयद्भ्राता। भयदः कपि वृन्दा-नां तंसुग्री = रामम् ॥४१७॥ अथ कपयस्सुग्रीवं प्राप्ययदनुजं समागतं रुष्टम्। भीताव्यजिज्ञपन्द्रा क्तंसुग्री = रामम् ॥४१८॥ तारासक्तः कामी मधुमत्तोनाश्रृणोत्कपि प्रोक्तम्। यन्मित्रं तद्वचनं तंसुग्री = रामम् ॥४१९॥ नीला देशादागत कपिसंव्याप्तां पुरीं ततोऽपश्यत्। कोपिष्ठोयद्भ्राता तंसुग्री = रामम् ॥४२०॥ सुग्रीव-स्यामोदं स्त्रीविरहात्क्रान्तमार्यमपि बुध्वा। यद्भ्राताकुपितोऽभू त्तंसुग्री = रामम् ॥४२१॥ दृष्ट्वांऽगदमथवाचं प्रोचेभीति प्रदां कपीशस्य। यद्भ्राताऽतीव रुषा तंसुग्री = रामम् ४२२॥ गत्वां गदशीघ्रं त्वं वदमां धृत चापमागतं राज्ञि। इति गिरमाह यदनुज स्तंसुग्री = रामम् ॥४२३॥ द्वारे तिष्ठति कुपितो लक्ष्मण इत्येव मां वदाक्षिप्रम्। इति गिरमाहयदनुज स्तंसुग्री = रामम् ॥४२४॥ सोथापितृव्यसमीपं प्राप्यो चेयत्कनिष्ठगादितं द्राक्। तारायां श्रृण्व-

न्त्यां तंसुग्रीवाप्तमाश्रये रामम् ॥४२५॥ कपिकृतसिंहनिनादा नङ्गदवचनं च लक्ष्मणे नोक्तम्। यत्सुहृदशृणोद्गीत स्तंसुग्री = रामम् ॥४२६॥ श्रुत्वा मद्वेषिमुखा न्मितथ्या दोषान्सलक्ष्मणोऽकुध्यत्। इति यत्सुहृदभणद्रान्तं सुग्री = रामम् ॥४२७॥ मित्रत्वहानि भीतिं बाधां कुरुते ममाद्यहृत्कमले। इति यत्सुहृदभणद्रा न्तंसुग्री = रामम् ॥४२८॥ किष्किन्धां प्रविशन्तं यदवरजं प्रेक्ष्य वानरास्त्रस्ताः। अभवन्विनताद्वास्था स्तंसुग्री = रामम् ॥ ४२९ ॥ महतीं ददर्शरम्यां हर्म्यप्रासादशोभितां स गुहाम्। यद्भ्रातोद्यान युतां तंसुग्री = रामम् ॥४३०॥ सुरपितृ गन्धर्वसुतैः कपिभिर्व्याप्तां यथेच्छरूपयुतैः। यदवरजोऽपश्यत्तां तंसुग्री = रामम् ॥४३१॥ अङ्गदमैन्द द्विविद प्राभञ्जनमुख्य कीशवेश्मयुताम्। यदवरजोऽपश्यत्तां तंसुग्री = रामम् ॥४३२॥ स्त्रीरत्नै रुपशोभित सौधाग्रामिन्द्रलोकविटापियुताम्। यदवरजोऽपश्यत्तां तंसुग्री = रामम् ॥४३३॥ अथ सुग्रीवस्य गृहं सान्तः पुर मात्तसप्तकक्ष्यं द्राक्। यदवरजः प्राविक्ष त्तंसुग्री = रामम् ॥४३४॥ मधुर स्वर लय युक्तं स्त्रीणां गीतं मनोहरं शृण्वन्। यदवरजः प्राविक्ष त्तंसुग्री = रामम् ॥४३५॥ शृण्वन्नूपुरकूजित मथनारीणां विलज्जितो गेहम्। यदवरजः प्राविक्ष त्तंसुग्री = रामम् ॥४३६॥ दृष्ट्वा तं संरंभं ज्यास्वनमकरोद्भयंकरं शत्रोः। यदवरजो गृहमध्ये तंसुग्री = रामम् ॥ ४३७ ॥ यद्भ्रातुश्चापर वं श्रुत्वात्रस्तश्च चालसुग्रीवः। स्वीयात्काञ्चन पीठा त्तंसुग्री = रामम् ॥४३८॥ अथ तारां यन्मित्रः प्रोचे वाचं तदात्तधिषणो द्राक्। सौमित्रे रुट्छान्त्यै तंसुग्री = रामम् ॥ ४३९ ॥ तारे सौमित्रि रुषं परिहरपूर्वं गताऽशुबुध्यात्वम्। इति यत्सुहृदवदत्तां तंसुग्री = रामम् ॥४४०॥ द्रक्ष्याम्यहमथशान्तं तं चेत्युक्त्वा मदात्स्खलन्ती सा। यदवरजं प्राप्योचे तंसुग्री =

रामम् ॥४४१॥ किं कोपस्य निदानं तिष्ठति को वानरवाङ्गिन देशेते । इति यदवरजं सो चे तंसुग्रीवाप्तमाश्रये रामम् ॥ ४४२ ॥ तां दृष्ट्वा गतकोपः प्रोचे वाचं कपीश्वराजुगुणाम् । यदवरजस्सौम्य-गिरा तंसुग्री = रामम् ॥४४३॥ पानासक्तः कपिरा ण्मासांश्च-तुरो गतान्नवेत्यधुना । इति तामाह यदनुज स्तंसुग्री = रामम् ॥४४४॥ धर्मात्र्थकामलोपं कुरुते पानं मनस्विनोपि खलु । इति तामाह यदनुज स्तंसुग्री = रामम् ॥४४५॥ इत्थं यद्भ्रातृगिरं श्रुत्वा तारा जगादगिरमेवम् । कोपप्रशमन कामा तंसुग्री = रामम् ॥४४६॥ उत्तमपुरुषः कोपं तुच्छे स्वजने कथं करोषित्वम् । इति ताराऽऽहयदनुजं तंसुग्री = रामम् ॥४४७॥ अप गत लज्जं कामा सक्तं तं पाहिशौर्यजलधेत्वम् । इति ताराऽऽह यदनुजं तंसुग्री = रामम् ॥४४८॥ जात्या कपिरति चपलो राजाविषयं स्मरेत्कथं विरसम् । इति ताराऽऽह यदनुजं तंसुग्री = रामम् ॥ ४४९ ॥ अस्मिन्कामाविधेये प्या जग्मुः कोटिशोऽद्य कपिवीराः । इति तारा-ऽऽह यदनुजं तंसुग्री = रामम् ॥४५०॥ आगच्छे त्याहूतो यद्भ्रा-ता तारयाऽविशद्गेहम् । वानरराजस्य शुभं तंसुग्री = रामम् ॥४५१॥ परिरब्धरुमः कपिरा ड्रक्ताक्षो वारिजातसदृशाक्षम् । यद्भ्रातरमद्राक्षी त्तंसुग्री = रामम् ॥४५२॥ रुमयाधिष्ठितपार्श्वं स्त्रीमध्यगतं निरी-क्ष्य सुग्रीवम् । यद्भ्रातो वाचगिरं तंसुग्री = रामम् ॥ ४५३ ॥ ब्रह्मघ्नश्च सुरापश्चोरो भग्नव्रतश्च नृपदण्ड्यः । इति तं प्राह यदनुज स्तंसुग्री = रामम् ॥ ४५४ ॥ त्वमनार्यश्च कृतघ्नो मिथ्यावादी नृपेण दण्ड्योसि । इति तं प्राह यदनुज स्तंसुग्री = रामम् ॥४५५॥ आर्यस्त्वान्नाजाना त्सर्पं मण्डूकराविणं तुच्छम् । इति तं प्राह यद-नुज स्तंसुग्री = रामम् ॥४५६॥ न च सङ्कुचितः पन्था निहतो वालीजगामयेन पथा । इति तं प्राह यदनुज स्तंसुग्री =

रामम् ॥४५७॥ इति त्वादिनमूचे तारायद्भ्रातरं तथा रुष्टम् कोपनिराकरणार्त्थं तंसुग्रीवाप्तमाश्रये रामम् ॥४५८॥ उद्योग कृतपूर्वः कामवशेनाप्यनेन कपिपतिना । इति ताराह यदनुज तंसुग्री = रामम् ॥४५९॥ नैवाकृतज्ञ कोटौ गणनीयोऽसौ *त्वयाऽद्यसौमित्रे । इति ताराऽऽह यदनुजं तंरिपुभीमं सदाभजे रामम् ॥४६०॥ विश्वामित्रोपि महा न्सघृताच्यां कामवश्यतां प्रापत् । इति ताराऽऽह यदनुजं तंरिपु = रामम् ॥४६१॥ न हि रोपः कर्तव्यो भवतासुहृदा कपीश्वरे मित्रे । इति ताराऽऽह यदनुजं तंरिपु = रामम् ॥४६२॥ अथ कण्ठगतं माल्यं त्यक्त्वाविमद-स्समेत्य यदवरजम् । उचेवाचं स कपीं स्तंरिपु = रामम् ॥४६३॥ अथ शिबिकामानीतां कपिभिर्दृष्ट्वा समारुरोहकपीट् । यदवरजेन महद्रा क्तंरिपु = रामम् ॥४६४॥ राजोपचारयुक्तो यदनुजसहित स्समाजगामगिरिम् । कपि सैन्य युतः कपिरा ट्तंरिपु = रामम् ॥४६५॥ शिबिकायास्त्ववरुह्य प्रकटितभक्तिः कृताञ्जलिः कपि-राट् । चक्रेप्रणैतिं यस्मै तंरिपु = रामम् ॥४६६॥ प्रणमन्तं मित्रं यः प्रोच्चैर्वाचं प्रगाढमालिङ्ग्य । सीतामार्गणविषयां तंरिपु = रामम् ॥४६७॥ राज्ञामुद्योगविधौ कालः प्राप्तस्सखेऽद्यसुग्रीव । इति यः कपिपतिमभण त्तंरिपु = रामम् ॥४६८॥ रावण निलयं सीता वसतिं ज्ञात्वा प्रवृत्ति मथकुर्वः । इति यः कपिपतिमभण त्तंरिपु = रामम् ॥४६९॥ आज्ञापय कपिवीरा न्दिक्षुविदिक्षु प्रमार्गितुं सीताम् । इति यः कपिपतिमभण त्तंरिपु = रामम् ॥ ४७० ॥ इत्युक्तो येनद्रा ग्विनतं कपिराड्वाचपूर्वदिशम् । गन्तुं कपिभिरनेकै स्तंरिपु = रामम् ॥४७१॥ हनुमन्नीलद्रुहिणज तारेयादीनुवाच-यन्मित्रम् । याम्यां दिशमभिगन्तुं तंरिपु = रामम् ॥ ४७२ ॥ श्वशुरं तारापितरं प्राहसुषेणं प्रणम्ययन्मित्रम् । पश्चिमदिशमभि-

गन्तुं तंरिपुभीमं सदाभजे रामम् ॥४७३॥ अथ शतबलिमाह गिरं कौबेर्यां दिशिविचेतुमवनिसुताम् । यन्मित्रो रविपुत्र स्तंरिपु = रामम् ॥४७४॥ आज्ञाप्यैवं कपिराज्यदूतं प्राह तं हनूमन्तम् । पूरयकार्यं द्रागिति तंरिपु = रामम् ॥४७५॥ लोकत्रितये हनुमन्गतिभङ्गं तेन जातु जानेऽहम् । इति तं यत्सुहृदभण त्तंरिपु = रामम् ॥४७६॥ त्वयि बलबुद्धिपराक्रम कालानुगुण प्रवृत्तय स्सन्ति । इति तं यत्सुहृदभण त्तंरिपु = रामम् ॥४७७॥ स सुरासुर गन्धर्वे जगतितवाविदितमस्ति किं हनुमन् । इति तं यत्सुहृदभण त्तंरिपु = रामम् ॥४७८॥ इत्थं सुग्रीवनुतं ज्ञात्वा तं कार्य साधकं तस्मिन् । योऽङ्गुळि भूषां प्रददौ तंरिपु = रामम् ॥४७९॥ अथ कपिवीरान्राजा वाचमनीचामुवाचयन्मित्रम् । शीघ्रागमनार्थं तां स्तंरिपु = रामम् ॥४८०॥ ऊर्ध्वं मासाद्वासो युष्माकं प्राणहानि दोभवति । इति तान्यत्सुहृदूचे तंरिपु = रामम् ॥४८१॥ दिक्कूलस्थितपर्वत काननगुल्मेषु मैथिलीं चिनुत । इति तान्यत्सुहृदूचे तंरिपु = रामम् ॥४८२॥ इत्याज्ञप्ताहरयो यत्सुहृदाज्ञां मनस्सुसन्धार्य । प्रययुस्स्वास्स्वाः ककुभ स्तंरिपु = रामम् ॥ ४८३ ॥ देशविशेषानद्य स्सर्वाणि कथं त्वयाऽद्यदृष्टानि । इति योऽपृच्छत्सुहृदं तंरिपु = रामम् ॥४८४॥ इति पृष्टो यन्मित्रं सुहृदाऽभाणीत्पुरातनं वृत्तम् । आश्रित सौभाग्यकर न्तंरिपु = रामम् ॥४८५॥ भूविवरे मायाविनि निहते ज्येष्ठं हतन्तुमत्वाऽहम् । दुख्यभवमिति यमूचे तंरिपु = रामम् ॥४८६॥ अथ सचिवोक्त्या राज्यं प्राप्याहं वत्सरात्परं ज्येष्ठम् । अद्राक्षमिति यमूचे तंरिपु = रामम् ॥४८७॥ अहमथदत्वाराज्यं पदयोर्न्यपतं तदीययोर्भक्त्या । इति यं सुहृदाहगिरं तंरिपु रामम् ॥४८८॥ अथ वाली स जिघांसु र्धावन्तं मामदुद्रुवत्पश्चात् । इति यं सुहृदाहगिरं तंरिपु = रामम् ॥४८९॥ ऐन्द्र्यां

दिश्य द्राक्षं देशानुदयाद्रिमप्यहं जलधीन् । इति यं सुहृदाहगिरं तंरिपु भीमं सदाभजे रामम् ॥४९०॥ अथ यमुनाभ्रातृककुप्प्रान्तस्थान्देशवन्यनगजलधीन् । अद्राक्षमिति यमूचे तंरिपु = रामम् ॥४९१॥ अथ वारुण्यां हरि ति ग्रामान्वन्यं सरित्पतीन्सप्त । अद्राक्षमिति यमूचे तंरिपु = रामम् ॥४९२॥ दिशिकौबेर्या महमथ कैलासं सप्तनीरधीन्सवनान् । अद्राक्षमिति यमूचे तंरिपु = रामम् ॥४९३॥ श्रान्तं भ्रान्तं भीतं मामूचे वाचमञ्जनापुत्रः । इति यं सुहृदाहगिरं तंरिपु = रामम् ॥४९४॥ राजन्मतंग शापा त्प्रविशति वाली हनैति हनुमद्राम् । अशृणवमिति सयमूचे तंरिपु = रामम् ॥४९५॥ अथ संपूर्णे मासि च कपयः प्रोचुर्गिरं च यन्मित्रम् । प्राप्यतिसृभ्यो दिग्भ्य स्तंरिपु = रामम् ॥४९६॥ वरुणकुबेरेन्द्रादिश स्सर्वाविचिताः प्रभो त्वयाऽऽज्ञप्ताः । इति बभणुर्यत्सुहृद न्तंरिपु = रामम् ॥४९७॥ अथ ताराङ्गदयुक्तो यन्मित्राज्ञावशंवदो हनुमान् । याम्यां ककुभिव्यचिनो त्तंरिपु = रामम् ॥४९८॥ *अथ सीतां नापश्य द्भर्तारं रावणश्च यद्दूतः । मृगयन्नद्रि वनादिषु तंहनुमत्पूज्यमाश्रये रामम् ॥४९९॥ षोडशवार्षिं कस्नो मरणात्कुपितेन कण्डुनाशप्तम् । वनमविशद्यद्दूत स्तंहनु = रामत् ॥५००॥ जनमृग खगतरुशून्येऽरण्ये दृष्टाऽसुरन्तुतारेयः । यत्स्त्र्यपहर्तेत्यवधी त्तंहनु = रामम् ॥५०१॥ अथ यत्स्त्रियमटवी नगदेशेषु विचित्यतान्कपिन्खिन्नान् । युवराडूचे वाचं तंहनु = रामम् ॥५०२॥ यातः कालोऽपिमहा न्यन्मित्रश्चो ग्रशासनः कोपी । इति युवराडाहकपीं स्तंहनु = रामम् ॥५०३॥ शोकन्तन्द्रीन्निद्रां त्यक्त्वा विपिने वयं विचिनवाम । यत्स्त्रिय मित्याह कपी दृतंहनु = रामम् ॥५०४॥ अथ विन्ध्यवनं त्यक्त्वा याम्यायां ककुभि चेरुरति दीनाः । यत्सुहृदुक्त्या कपय स्तंहनु = रामम् ॥५०५॥

अथ यद्दूतः कपिभि स्साकं विवृतां गुहां ददर्शाद्रौ। आर्द्राङ्गपतत्रियुतां तंहनुमत्पूज्यमाश्रये रामम् ॥५०६॥ अथ कपयस्तन्निकटं प्रापुः क्षुधयापिपासयाचयुताः। यत्सुहृदासह समुद स्तंहनु = रामम् ॥५०७॥ सारसहं स क्रौञ्चान्दृष्ट्वा तस्माद्बिलाद्विनिष्क्रान्तान्। यद्दूतो बिलमविश त्तंहनु = रामम् ॥५०८॥ जग्मुर्योजनमन्त स्तेऽन्योन्यं द्राग्गृहीतकरपादाः। यद्दूताद्यावेगा त्तंहनु = रामम् ॥५०९॥ अन्तर्निपत्यकपयो ददृशु स्सौम्यं वनं प्रकाशयुतम्। यद्दूताद्यास्तुष्टा स्तंहनु = रामम् ॥५१०॥ काञ्चन सौधकवाटं गृहनिवहं फलितवृक्षसंघयुतम्। यद्दूतस्समपश्य त्तंहनु रामम् ॥५११॥ अंबरकंबळभूषण मधुपात्र युतं प्रदेशमथहैमम्। यद्दूतस्समपश्य त्तंहनु = रामम् ॥ ५१२ ॥ तत्राजिनचिरधरां यद्दूतस्तापसीं मुदादृष्ट्वा। अप्राक्षीत्काऽसीति च तंहनु = रामम् ॥५१३॥ कस्य वनं कस्य गृहं कनकमयं भाति सर्वमपि वस्तु। इति यद्दूतोऽपृच्छ त्तंहनु = रामम् ॥५१४॥ इत्थं स्वयं प्रभासा पृष्टाऽभाणीत्पुरातनं वृत्तम्। यद्दूतं सन्तुष्टा तंहनु = रामम् ॥५१५॥ हे मायामप्सरसि प्रेम्णाविहितं मयेन वासार्थम्। इति यद्दूतं सोचे तंहनु = रामम् ॥५१६॥ तस्येन्द्र हतस्य वनं दत्तं मह्यं वयस्य याप्रीत्या। इति यद्दूतं सोचे तंहनु = रामम् ॥५१७॥ वदकस्त्वं किं कार्यं भुक्त्वा पीत्वा फलं च पानीयम्। इति यद्दूतं सोचे तंहनु = रामम् ॥५१८॥ अथ यद्दूतो वादी द्रामागमनं विदेह जाहरणम्। स्वागमनं पृच्छन्त्यै तंहनु = रामम् ॥५१९॥ भुक्तफलान्पीत जला न्कीशां स्त्वृप्तान्निरीक्ष्य बहुतुष्टाम्। तामवदद्यद्दूत स्तंहनु = रामम् ॥५२०॥ उत्तारयक्रुपयात्वं देशादस्माद्गतक्षुधोऽस्मान्द्राक्। इति यद्दूतोऽभाणी त्तंहनु = रामम् ॥५२१॥ करपिहितलोचनांस्ता न्सादाग्गूर्ध्वं निनायकपिवीरान्। यद्दूत

प्रार्थनया तंहनुमत्पूज्यमाश्रये रामम् ॥५२२॥ अथ कपयो दद्दशुस्ते यद्दूत युतास्तदाऽतिगंभीरम् । सागर मपारमारा त्तंहनु = रामम् ॥५२३॥ अथ यद्दूतो हनुमा नूचे वाचन्तदाङ्गदप्रमुखान् । उपविष्टान्विन्ध्यगिरौ तंहनु = रामम् ॥५२४॥ मयमायाविहित बिले मासोति क्रान्त एव राज्ञोक्तः । इति यद्दूतोऽवादी त्तंहनु = रामम् ॥५२५॥ श्रुत्वै तच्चारेयो हनुमन्तं प्राहगां च यद्दूतम् । कालातिक्रम भीत स्तंहनु = रामम् ॥५२६॥ कालमती त्यास्माकं राज्ञोक्तं किं भवेत्सुखं गेहे । इत्याह स यद्दूतं तंहनु = रामम् ॥५२७॥ अस्माकं विन्ध्यगिरेः प्रस्थे प्रायोपवेशनं योग्यम् । इत्याह स यद्दूतं तंहनु = रामम् ॥५२८॥ रामेण यौवराज्यं दत्तं मह्यं पितृव्यसान्निध्ये । इत्याह स यद्दूतं तंहनु = रामम् ॥५२९॥ पूर्वं स बद्धवैरो यत्किञ्चिव्द्या जतश्च मां हन्यात् । इत्याह स यद्दूतं तंहनु = रामम् ॥५३०॥ इति वालिसुतेनोक्ते यद्दूतस्तं जगाद हनुमान्गाम् । नीलसुहोत्रादियुत स्तंहनु = रामम् ॥ ५३१ ॥ त्वं पालयितुं शक्तः किष्किन्धां ते वशे वयं कुर्मः । इति यद्दूतोऽवादी त्तंहनु = रामम् ॥५३२॥ अथवा लक्ष्मण बाणा राज्यन्ते दातुमुद्यतास्सन्ति । इति यद्दूतोऽवादी त्तंहनु = रामम् ॥ ५३३ ॥ त्वन्मातुः प्रियकाम स्सत्यधृतिस्त्वां न जातु हन्यात्सः । इति यद्दूतोऽवादी त्तंहनु = रामम् ॥५३४॥ तस्यापत्यं त्वदृते नास्त्यन्यस्त्यज्यतां त्वयाऽद्य भयम् । इति यद्दूतोऽवादी त्तंहनु = रामम् ॥५३५॥ श्रुत्वा यद्दूतगिरं प्रोचेवाचं तदाङ्गदो धीमान् । स्मृत पितृमरणो दुःखी तंहनु = रामम् ॥५३६॥ ज्येष्ठ भ्रातुर्भार्यां योरमते तस्य कीदृशो धर्मः । इत्याह स यद्दूतं तंहनु = रामम् ॥५३७॥ राज्ये शत्रु कुलीनं सुतमपि मां सुस्थितं कथं सहते । इत्याह स यद्दूतं तंहनु = रामम् ॥५३८॥

हस्ते हस्तं तदासमाहत्य । सद्भावन्यद्रूपं तं हत मारीचमाश्रये
रामम् ॥५३२॥ पश्योन्मत्तेमामिति रूपं धृत्वा स्वकीयमेव हठात् ।
जगृहे यत्स्त्रियमवशां तं हत + रामम् ॥५३३॥ केशेषूर्वोस्सीतां
वामकरेणापि सव्यहस्तेन । जग्राह बलाद्यद्द्विट्तं हत + रामम् ॥५३४॥
अङ्केनादाय च तां खरयुक्तं स्यन्दनं समारुह्य । प्रययौ यद्विड्वेगात्तं
हत + रामम् ॥५३५॥ हालक्ष्मण जानासि त्वंह्रियमाणां
नरक्षसाद्येमाम् । इति यत्पत्न्य क्रुक्षत्तं हत + रामम् ।५३६॥
अविनीतानां हन्ता कथमेनं त्वं न शास्सिदाशरथे । इति यत्पत्न्य
क्रुक्षत्तं हत + रामम् ॥५३७॥ हन्त स कामाभवतात्कैकेयीसा-
स्वबान्धवैस्सार्धम् । इति यत्पत्न्य क्रुक्षत्तं हत + रामम् ॥५३८॥
रामाया ध्वंसद्रा ज्ञा मापन्नां धरा धरेन्द्रत्वम् । इति यत्पत्न्य क्रुक्षत्तं
हत + रामम् ॥५३९॥ गोदावरि वन्देत्वां रामाय वदाद्यमद्दशां
भद्रे । इति यत्पत्न्य क्रुक्षत्तं हत + रामम् ॥५४०॥ इत्थं विलपन्ती
सा गृध्रमपश्यज्जटायुषं वृद्धम् । यत्पत्नी वृक्षाग्रे तं हत + रामम्
॥५४१॥ पश्यार्य जटायो त्वं मां ह्रियमाणां च रक्षसास्व बलात् ।
इति यत्पत्न्य क्रुक्षत्तं हत + रामम् ॥५४२॥ श्रीरामलक्ष्मणाभ्यां
वद दशकण्ठेन मां हृतां पक्षिन् । इति गृध्रं यत्स्त्र्यू चेतं हत +
रामम् ॥५४३॥ इत्थं यत्स्त्री रुदितं श्रुत्वा सुप्तोत्थितस्तदा
ऽपश्यत् । स जटायुर्दशकण्ठं तं हत + रामम् ॥५४४॥ माकुरु-
परदारेच्छां ब्रह्मकुलोत्पन्नकीर्तिं नाशकरीम् । इति यद्द्विषमाह सविस्तं
+ रामम ॥५४५॥ विसृजत्वं वैदेहीं मास्पृशहस्तेन वीतिहोत्रस-
माम् । इति यद्द्विषमवदद्द्विस्तं हत + रामम् ॥५४६॥ वर्षसहस्रा-
णि च मे षष्टिर्जातस्य रावणावेहि । इति यद्द्विषमवदद्द्विस्तं हत +
रामम् ॥५४७॥ नोमुञ्चाम्यसुसहितं सीताहर्तारमद्यपापिं त्वाम् ।
इति यद्द्विष मवदद्द्विस्तं हत + रामम् ॥५४८॥ शूरश्चेद्युध्यस्व त्वं

भुविखर व च्छयिष्यसे पापीन् । इति यद्विषमवदद्विस्तं हत मारीच माश्रये रामम् ॥५४९॥ त्वां हत्वा दाशरथे स्तत्तातस्यापि तोषमाकरवै । इति यद्विषमवदद्विस्तं हत + रामम् ॥५५०॥ इत्यु-*क्त्वा स जटायु र्यद्विड्बाणाहतोऽपि तीक्ष्णनखैः । चरणाभ्यां च तमपिषत्तं खगमोक्षप्रदं भजे रामम् ॥५५१॥ सीतायां पश्यन्त्यां यद्विट्प्रहितां च्छरान्नखैर्भित्वा । अभिदत्तस्य धनुर्विस्तं खग + रामम् ॥५५२॥ भङ्क्त्वा धनुरप्यन्य त्कवचं यद्वेषिणोऽथ रथ बद्धान् । समरेसजघान खरांस्तं खग + रामम् ॥५५३॥ छत्रं वालव्यजनं सूतं स रथं व्यपाहरत्स्व नखैः । यद्विषिजाग्रति गृध्रस्तं खग + रामम् ॥५५४॥ गतसारथि रथ चापो यद्विट्प्रतिगृह्य मैथिलीं रुदतीम् । उदपत्तद्युद्धभुवस्तं खग + रामम् ॥५५५॥ प्रणिधायाङ्के सीतां गच्छन्तं पक्षिराट्समुत्पत्य । यद्विषमुपरुध्यो चेतं खग + रामम् ॥५५६॥ रक्षो वधाय सीतां हरसित्वं कालपाश बद्धोऽद्य । इति यद्विषमाह खगस्तं खग + रामम् ॥५५७॥ अद्यत्वगच्छसित्वं सीतामादाय तस्करोपमितः । इति यद्विषमाह + रामम् ॥५५८॥ तिष्ट मुहूर्तं शूर स्त्वं यदि निहतश्शयिष्यसे भूमौ । इति यद्विषमाह + रामम् ॥५५९॥ इत्थं यद्विषमुक्त्वा पृष्टे विनिपत्य तीक्ष्णनखतुण्डैः । विददार शरीरं विस्तं खग + रामम् ॥५६०॥ उत्पाटित केशचयो नखपक्षमुखैः खगेनयद्वेषि । प्राकंपत विवृतमुखस्तं खग + रामम् ॥५६१॥ वैदेहीमथयद्विड्वामेनां केन संपरिष्वज्य । द्विजमभ्यवधीद्वेगात्तं खग + रामम् ॥५६२॥ सोभिक्रम्यजटायु स्तुण्डेनाऽखण्डयत्तदा वामान् । दशयद्विड्बाहून्द्राक्तं खग + रामम् ॥५६३॥ यद्विट्सं जातभुजो ऽच्छिनदासिनातस्य पक्षिणः पक्षौ । पादौ पार्श्वौ चरया त्तंखग + रामम् ॥५६४॥ अथ यद्वेषिहतोल्प प्राणो गृध्रः पपात रणभूमौ । पश्यन्त्यां सीतायां

तं खग मोक्षप्रदं भजे रामम् ॥५६५॥ भुवि पतितं तं गृध्रं दृष्ट्वा ऽरोदीत्तदापरिष्वज्य। यत्पत्न्यार्ता दुःखात्तं खग+रामम्। ५६६॥ आलिङ्ग्य तत्र विटपा न्क्रोशन्तीं ताञ्चकर्षयद्वेषी। त्यजमुञ्चेतिकराभ्यां तं खग + रामम् । ५६७॥ आलिंगन्तीं भूमिं विक्रोशन्ती श्रराम रामेति। जह्रे यद्वेषीद्रात्तं खग + रामम् ॥५६८॥ जग्राह केशनिचये ष्वस्वं ताय स्वराज्य नाशाय। यत्पत्नीं दशकण्ठस्तं खग + रामम् ॥५६९॥ क्रन्दतीं यस्यसती माहर्तृ रावणस्य मृतिकालम्। बुद्ध्वा मुमुदुर्देवास्तं खग + रामम् ॥५७०॥ मृगपोतावन देव्यो यन्महिषीं रावणां कगांवीक्ष्य। रुरुदुर्बाष्पां घदशस्तं खग + रामम् ।५७१॥ ह्रियमाणायत्पत्नी रोषाद्दशकण्ठ मब्रवीद्वचनम्। रामस्मृति धृत धैर्या तं खग + रामम् ॥५७२॥ लज्जानहिते रावण भर्त्रारहितां पलायसेहृत्वा। मामिति यत्पत्न्य भणत्तं खग + रामम् । ५७३। राक्षस राजस्य हिते चौर्ये न पलायनं द्वयं युक्तम्। इति तं यत्पत्न्य भणत्तं खग + रामम् ॥५७४॥ रावण रथगां दृष्ट्वा यत्पत्नीं सिह्नपक्षिमृगनिवहाः। छायामनुसृत्य ययुस्तं खग + रामम् ॥५७५॥ रामेति क्रोशन्तीं यत्पत्नीं वीक्ष्य देवतावन गाः। रुरुदुर्दुःखादुच्चैस्तं खग + रामम् ॥५७६॥ जीविष्यसि कुत्रगतो मन्नाथप्रेषितास्त्र दुर्लक्ष्यः। इति तं यत्पत्न्यशपत्तं खग + रामम् ॥५७७॥ शर्मकथं प्राप्स्यासि रे मूढत्वं रामकोपनिर्दग्धः। इति तं यत्पत्न्यशपत्तं खग + रामम् ॥५७८॥ अद्यै वशमनदूता स्त्वामाह्वातुं समागमिष्यन्ति। इति तं यत्पत्न्य शपत्तं खग + रामम् ॥५७९॥ त्वं मृत्युवाहमहिषं द्रष्टुं यतसे स्वकीयदुर्वृत्त्या। इति तं + रामम् ॥५८०॥ खरदूषण मुख्यास्त्वां रात्रि चरा वीक्षितुं प्रकांक्षन्ति। इति तं + रामम् ।५८१॥ वैतरिणीं घोरान्त्वं रुधिरौघवहां पुराप्रदक्ष्यसिहा। इति तं + रामम् ॥५८२॥ अथ सीता

ह्रियमाणा यत्पत्नी शिखरि शृङ्गमध्यगतान्। पञ्चापश्यत्कीशांस्तं खग मोक्षप्रदं भजे रामम् ॥५८३॥ नाथमपश्यन्ती सा कश्चिद्य-त्स्त्र्युत्तरीय कौशेये। ग्रथिताद्यमुचद्भूषास्तं खग + रामम् ॥५८४॥ यत्स्त्री क्षिप्तं भूषण निचयं नापश्यदुद्धतः क्रव्यात्। शिखरिस्थान् कीशानपि तं खग + रामम् ॥५८५॥ पिङ्गाक्षाः क्रोशन्तीं ददृशुर्गगने चरामरामेति। यद्रमणीं ह्रियमाणां तं खग + रामम् ॥५८६॥ पंपां विलङ्घ्यपापी ति मि नक्रवहं समुद्रमपि तीर्त्वा। यत्स्त्री चोरोऽगाद्रा त्तंखग + रामम् ॥५८७॥ लंकान्तःपुरमविश द्यत्स्त्रिय मादाय राक्षसी युक्तम्। निर्लज्जो दशवदन स्तंखग + रामम् ॥५८८॥ असितापाङ्गामथतां यत्पत्नीं शोकमोहवशगांसः। रक्षस्त्री वशमकरो त्तंखग + रामम् ॥५८९॥ रक्षस्त्रीराह तदा यद्वि-ट्च्छुद्धांतरक्षणोद्युक्ताः। सीतासक्तमनाद्रा त्तंखग + रामम् ॥५९०॥ पुरुषो वायोषिद्वा नैनां पश्येत्कदापि राक्षस्यः। इति यद्वेष्यूचेतास्तं खग + रामम् ॥५९१॥ यद्यद्वस्त्विच्छति सा देयं सद्यस्तदेव युष्माभिः। इति यद्वेष्यू चेता स्तं खग + रामम् ॥५९२॥ यावक्ष्यति वैदेही मप्रियवचनं तदैव तां हन्याम्। इति यद्वेष्यू चेता स्तं खग + रामम् ॥५९३॥ निष्क्रम्य ततो यद्विर्ट्किंकरणीयं मयेति स विचिन्त्य। रक्षश्शूरानवदत्तं खग + रामम् ॥५९४॥ यूयं गच्छतवीरा नानायुधपाणयो जनस्थानम्। इति यद्विट्तान-वदत्तं खग + रामम् ॥५९५॥ तत्र स्थित्वा यूयं वृत्तं जानीत रामलक्ष्मणयोः। इति यद्विट्तानवदत्तं खग + रामम् ॥५९६॥ इत्याज्ञाप्याक्षौ तान्द्रष्टुं सीतामनङ्ग बाणहतः। प्रविवेशगृहं यद्विट्तं खग + रामम् ॥५९७॥ अभ्येत्याश्रुमुखीं तां पश्यगृहं त्वं मदीय मति मुग्धे। इति यद्विडुवाचगिरं तं खग + रामम् ॥५९८॥ प्रासादान्पुष्करिणीः पश्यत्वं रत्नखचितसोपानाः। इति यद्विट्तामूचे

तं खग मोक्षप्रदं भजे रामम् ॥५९९॥ अन्यां त्यजबुद्धिंत्वं भज-मामभितप्तमद्य शशिवदने। इति यद्विट्तामूचे तं खग + रामम् ॥६००॥ राज्यभ्रष्टं दीनं प्राप्यसुखन्ते किमस्ति वदमुग्धे। इति यद्विट्तामूचे तं खग + रामम् ॥६०१॥ लंका राज्यमिदं त्वं * पालय रमयस्व मामनुप्राप्तम्। इति यद्विट्तामूचे तं सीता सक्त-माश्रये रामम् ॥६०२॥ तेनोक्तां तां वाचं श्रुत्वान्तरतस्तृणं विधायसती। यत्पत्न्यूचेतं गां तं सीता + रामम् ॥६०३॥ दशरथपुत्रो रामोऽनुजसहितस्ते हरिष्यति प्राणान्। इति तं यत्स्त्र्याहगिरन्तं सीता + रामम् ॥६०४॥ प्रत्यक्षं यदि दृष्ट स्तेन हतस्त्वं खरं मुदापश्येः। इति तं यत्स्त्र्याहगिरन्तं सीता + रामम् ॥६०५॥ लंका वैधव्ययुता त्वत्कृतचौर्याद्भविष्यति ह्यधुना। इति तं यत्स्त्र्याहगिरन्तं सीता + रामम् ॥६०६॥ प्राप्ते विनाश-काले स्वीयेकार्ये जनाः प्रमुह्यन्ति। इति तं य + रामम् ॥६०७॥ प्राप्तो कालस्ते नाशाय स्वाश्रितैस्सहासुकपैः। इत्थं यत्स्त्र्याह + रामम् ॥६०८॥ इत्युक्त्वा यत्पत्नी नो वाचपुनश्च रावणं किञ्चित्। भर्तृस्मरण व्यग्रातं सीता + रामम् ॥६०९॥ शृणु मम वचनं सीते द्वादशमासान्सहे त्वयिप्रणयात्। इत्यवदद्यद्विट्तं सीता + रामम् ॥६१०॥ तावन्मम वश्यात्वं भवसि न चेद्भक्षयन्ति राक्षस्यः। इत्यवदद्यद्विट्तं सीता + रामम् ॥६११॥ इत्युक्त्वा यद्द्वेषी सीतामथ राक्षसीर्वचोऽभाणीत्। सीतां वशगां कर्तुं तं सीता + रामम् ॥६१२॥ अपनीयास्यादर्पं मद्वशगां कुरुतभीकरैर्वचनैः। इति तायद्विडवादीत्तं सीता + रामम् ॥६१३॥ नीत्वा शोकवनं द्रा ग्बुद्धीरुपदिश्यकुरुत तां वशगाम्। इति तायद्विड + रामम् ॥६१४॥ इत्याज्ञप्ताः सीता मानिन्यु द्रांगशोक वनिकान्ताः। यद्विट्पोषण दृप्ता स्तं सीता + रामम् ॥६१५॥ यत्पत्न्यऽशोक-

निका मध्ये मनसापतिं स्मरन्ती सा । भयकम्पमूर्च्छिताऽभूत्तं सीता सक्तमाश्रये रामम् ॥६१६॥ अथ मारीचं माया मृगरूपन्त न्निहत्ययोरमणीम् । द्रष्टुं प्रययौ विपिनात्तं सीता + रामम् ॥६१७॥ गोमायुक्रूररवं श्रुत्वायः पृष्ठतोऽवहच्छंकाम् । चिन्तित सीताऽवरजस्तं सीता + रामम् ॥६१८॥ सौमित्रिश्शृणुयाद्यदि मायामृगशब्द मेष्यति द्राङ्मम् । इति यश्चिन्तामभजत्तं सीता + रामम् ॥६१९॥ सीता करोति किं वा रक्षोऽध्युषिते वनेऽनुज त्यक्ता । इति यश्चिन्तामभजत्तं सीता + रामम् ॥६२०॥ कृत-वैरोऽस्म्यह मधुना रक्षोभिः खरवधादिदुर्धीभिः । इति यश्चिन्ता + रामम् ॥६२१॥ अथ लक्ष्मणमायान्तं सीतारहितं करेणसंगृह्य । परुषां गिरमूचे यस्तं सीता + रामम् ॥६२२॥ न्याय्यं वा तव लक्ष्मण सीतामेकाकिनीं वनेत्यक्तुं । इति तस्मैयोऽक्रुध्यत्तं सीता + रामम् ॥६२३॥ स्वस्ति भवेत्किं तस्यै त्वत्यक्तायै वने मृगादियुते । इदि यःक्रुद्धोपृच्छत्तं सीता + रामम् ॥६२४॥ इत्युक्तस्सौमित्रि स्त्यक्त्वा नस्वेच्छयाऽहमत्राऽऽगाम् । इति यं प्राहाश्रुमुखस्तं सीता + रामम् ॥६२५॥ आर्योक्तिसमांवाचं मारीचोक्तां निशम्यसीतोक्ताम् श्रुणुगिरमित्याहसयं तं सीता + रामम् ॥६२६॥ गच्छपतिंद्रष्टुंमे नो चे त्प्राणांस्त्यजामि तवपुरतः । इति साऽहेत्याहसयं तं सीता + रामम् ॥६२७॥ मत्प्रत्युक्ताऽश्रुमुखी मामिच्छाप्तुं तवाऽस्तिरेपा-पिन् । इति साऽहेत्याहसयं तं सीता + रामम् ॥६२८॥ नाहन्त-थाविधाते वशगाभवितुं विदेह राजसुता । इति साऽहेत्याहसयं तं सी-ता + रामम् ॥६२९॥ क्रोशन्तं मद्रमणं द्रष्टुंनेच्छाऽस्ति भरतव-चनात्ते । इति साऽहेत्याहसयं तं सीता + रामम् ॥६३०॥ कपटे नानुचरस्त्वं भरतेन प्रेषितोपिवामूर्ख । इति साऽहेत्याहसयं तं सीता + रामम् ॥६३१॥ इत्थं वदन्त मनुजं क्रोधवशस्त्वं गिरं मया-

त्याक्षीः । इति वाचं योऽभाणीत्तं सीतासक्तमाश्रये रामम् ॥६३२॥ जानन्नपि मम शौर्यं रक्षोवधदीक्षमत्यजो वाचम् । इत्यनुजं योऽभाणीत्तं सीता + रामम् ॥६३३॥ वैदेही यदिजीवत्याश्रममेष्याम्यहं च सौमित्रे ! इत्यनुजं यो + रामम् ॥६३४॥ क्रुद्धानां नारीणां वाच्यमवाच्यं नचास्ति खलुलोके । इत्यनुजं यो + रामम् ॥६६५॥ अथयोऽनुजसहितोद्रागाश्रममाविश्य सीतायाशून्याम् । दृष्ट्वा स्वकुटीमरुदत्तं सीता + रामम् । ६३६ ॥ पुष्पाणिफलान्यपिच प्रविचेतुन्त्वं वनं प्रयाताकिम् । इत्यरुदद्विपिने यस्तं सीता + रामम् ॥६३७॥ वृक्षकदंबत्वंयदि सीतां जानासिरे वदाद्य शुभाम् ! इति पप्रच्छतरुं यस्तं + रामम् ।६३८॥ बिल्वत्वं सीतान्तां त्वत्फलसदृशस्तनीं वदाद्यहिमे । इति पप्रच्छतरुं यस्तं सीता + रामम् ॥६३९॥ त्वन्नामानंकुरुमां सीतासन्दर्शनादशोकत्वम् । इति पप्रच्छतरुं यस्तं सीता + रामम् ॥६४०॥ कुत्र गता सासीता त्वत्फल सदृश स्तनाद्यवदताळ । इत्यरुदद्विपिने यस्तं सीता + रामम ।६४१॥ गजतां गजनासोरूं दृष्टांमह्यं वदाद्यतोषात्त्वम् । इत्यरुदद्विपिने यस्तं सीता + रामम् ॥६४२॥ मृगशावाक्षींमृगरे जानासित्वं यदीहवदमह्यम् । इत्यरुदद्विपिने यस्तं सीता + रामम् ॥६४३॥ इति चूतनीपशाला न्पनसान्लिकुचांश्च दाडिमानसनान् । योपृच्छत्तत्र रुदंस्तं सीता + रामम् ॥६४४॥ आत्मानमगैस्सीते प्रच्छाद्यत्वं न भाषसे किंमाम् । इत्युचै रुरुदद्यस्तं सीता + रामम् ॥६४५॥ यद्यास्तिकृपामयिते तिष्टत्वमहं समागतोस्म्यधुना । इत्युचै रुरुदद्यस्तं सीता + रामम् ॥६४६॥ नूनंबालासीता रक्षोभिर्भक्षिताऽद्य सुविभज्य । इत्युचै + रामम् ॥६४७॥ हा लक्ष्मणपश्यसि किं सीतां त्वं हा प्रिये कुतोऽगच्छः । इत्युचै + रामम् ।६४८॥ क्व गता भद्रेसीते वैदेहि त्वं क्वयामिहित्वा त्वाम् । इत्युचै रुरुदद्यस्तं सीता +

रामम् ॥६४९॥ इति विलपन्परिधाव न्नत्युद्भ्रन्तो वनाद्वनं विशति। सीता सक्तमतिर्यस्तं सीता सक्तमाश्रये रामम् ।६५०॥ वैदेह्यारहि तोऽहं नहिजीवाम्यनुजलक्ष्मणाधैकः । इत्युच्चै रुरुदद्यस्तं सीता + रामम् ॥६५१॥ इत्थं विलपन्तं यं माभजशोकं वने विचिनुवस्ता-म् । इति सौमित्रि रभाणीत्तं सीता + रामम् ॥६५२॥ प्राप्स्य स्यार्यामार्यो वैदेहीं त्वं भजस्व धीरत्वम् । इत्यनुजोयमभाणीत्तं सीता + रामम् ॥६५३॥ अथ लक्ष्मणमूचे यस्सीतारहितः कथं भजेऽ-योध्याम् । बान्धवसचिवयुतामिति तं सीता + रामम् ॥६५४॥ कुशलं परिपृच्छन्तं श्वशुरं जनकं च किं वदेयमहम् । इति लक्ष्मण-मूचेयस्तं सीता + रामम् ॥६५५॥ गत्वायोध्यां भरतो वक्तव्यो-मेगिरात्वयैव मिदम् । इत्यनुजं योऽवादीत्तं सीता + रामम् ॥ ६५६ ॥ पालयवसुधां कृत्स्नां रामाज्ञातो सदेति भरतं त्वम् । वदझडिती त्यवदद्यस्तं सीता + रामम् ॥६५७॥ कौस-* ल्यां स सुमित्रां कैकेयीश्चप्ररक्ष भरतेति । वदगिरमित्यवदद्यस्तं स्मृत पितृकं भजाम्यहं रामम् ॥६५८॥ सीताया मम विरहं रक्षः कृतमद्यमातरि स्पष्टम् । अनुजवदेत्यवदद्यस्तं + रामम् ॥६५९॥ इत्थं विलपति यस्मि न्सौमित्रिः प्रेक्ष्यदुःख तप्तमनाः । यं गिरमूचे धैर्यात्तं स्मृत + रामम् ॥६६०॥ त्यज शोकं भज धैर्यं तववैदेह्याः प्रमार्गणेऽस्तु धृतिः । इति यमवरजः प्रोचेतं स्मृति + रामम् ॥६६१॥ उत्साह वतां पुंसां लोकेनैवास्ति दुष्करं किञ्चित् । इति यमवरजः प्रोचेतं स्मृत + रामम् ॥६६२॥ गोदावर्या मार्यां नो-पश्यामि प्रतिध्वनिश्च नहि । इति यमवर + रामम् ॥६६३॥ गो-दावरी नदीयं मां नप्रतिभाषते कुतोवदमे । इत्यनुजं योऽपृच्छत्तं स्मृत + रामम् ॥६६४॥ सीतामपश्यतोमे मन्येदीर्घानिशा भव-न्तीति । इत्यनुजं योभाणीत्तं स्मृत + रामम् ॥६६५॥ एतेमृगा वन

स्थापयंपश्यन्तः प्रयान्त्यगस्त्यदिशम्। इत्यनुजं योऽभाणीत्तं स्मृत-पितृकं भजाम्यहं रामम् ॥६६६॥ आवांगच्छावार्याऽऽगस्तीं दिशमेव मृगयितुं सीताम्। इत्यनुजोयमभाणीत्तं स्मृत + रामम् ॥६६७॥ इत्युक्तो गच्छन्पथि कीर्णानि सुमानि सीतयापश्यन्। प्रययौयोऽगस्त्य दिशं तं स्मृत + रामम् ॥६६८॥ सीतां दर्शयपर्वत नो चेद्भिन्द्यां तवाद्य सानुचयम्। इति योगिरमगमवदत्तं स्मृत + रामम् ॥६६९॥ इति योमार्गेरुष्टः पदविन्यासं भयात्प्रधावन्त्याः। योऽपश्यत्सीतायास्तं स्मृत + रामम् ॥६७०॥ भग्नं चापं तूणी भिन्नेछिन्नं रथं दशास्यस्य। सूत शिरश्चैक्षत यस्तं स्मृत + रामम् ॥६७१॥ पश्यैतत्सौमित्रे सीतार्थं रक्षसोर्द्वयो युंद्धे। पतितमितितमवदद्यस्तं स्मृत + रामम् ॥६७२॥ मन्येहमनुजसीतां भित्वा भित्वा प्रभाक्षितां द्विड्भिः। इति लक्ष्मणमवदद्यस्तं स्मृत + रामम् ॥६७३॥ बाणेनैकेनाहं लोकं कुर्वेद्यराक्षसं शीघ्रम्। इति योऽभूद्धृतचापस्तं स्मृत + रामम् ॥६७४॥ दृष्ट्वाक्रुद्धंज्येष्टं सशरं चापं करेचगृह्णन्तम्। यमब्रादीदनुजोद्रा क्तंस्मृत + रामम् ॥६७५॥ शान्तोदान्तस्सुयशाः प्रकृतिं त्यक्तुं नचार्हसि क्रोधात्। इत्यनुजोयमभाणीत्तं स्मृत + रामम् ॥६७६॥ नैकस्यत्वपराधा ल्लोकान्हन्तुं त्वमर्हसि प्राज्ञः। इत्यनुजोयमभाणीत्तं स्मृत + रामम् ॥६७७॥ येनापहृतासीता तं प्रविचिनुवोद्यपापिनं विपिने। इत्यनुजोयम + रामम् ॥६७८॥ आश्वास्येत्थंचरणौ यस्यगृहीत्वा प्रबोधयामास। सौमित्रिः प्राणसुहृत्तं स्मृत + रामम् ॥६७९॥ गच्छावकुत्र लक्ष्मण वत्स ब्रूहीति तद्वनंसर्वम्। व्यचिनोद्योऽनुज सहितस्तं स्मृत + रामम् ॥६८०॥ अथ पर्वतकूटाभं वृद्धं पतितं जटायुषं भूमौ। दृष्ट्वायोऽनुजमभणत्तं स्मृत + रामम् ॥६८१॥ पश्यात्रानुज सीता भक्षं रक्षो वनेवसति दुष्टम्। इति योबाणकरोऽभूत्तं स्मृत + रामम् ॥६८२॥ बाणकरं

यं दृष्ट्वाऽवोचत्पक्षी सफेनरुधिरमुखः । सीतापहरणवार्तां तं स्मृत पितृकं भजाम्यहं रामम् ॥६८३॥ शृणुनाथत्वत्पत्नीं मत्प्राणैस्सं जहार दशवदनः । इति यं प्राह जटायुस्तं स्मृत + रामम् ॥६८४॥ मत्पक्षनखरतुण्डा घातत्रुटितांगरथ्यरथसूतम् । रक्षोऽगादित्याहसयं तं स्मृत + रामम् ॥६८५॥ इत्थं निगदन्तन्तं दृष्ट्वालिंग्यत्यजन्धनुर्भूमौ । सावरजोयोऽरोदीत्तं स्मृत + रामम् ॥६८६॥ राज्याद्भ्रंशं-कानन वासं सीता वियोग खगमरणे । स्मृत्वाहृदि योऽरोदीत्तं स्मृत + रामम् ॥६८७॥ स्पृष्ट्वा हस्तेन खगं सीताया दुष्टरक्षसा हरणम् । स्मृत्वाहृदि योऽरोदीत्तं स्मृत + रामम् ॥६८८॥ तद्भवनं कुत्रा-स्ते तस्यकुलं मे बलञ्च वदपक्षिन् । इति योऽपृच्छदपक्षं तं स्मृत + रामम् ॥६८९॥ इति पृष्टोथजटायुः क्षीणप्राणस्तदा दशास्यस्य । निलयाद्यभणद्यस्मै तं स्मृत + रामम् ॥६९०॥ मध्येब्धेलंकाऽऽस्ते तस्यपुरी विश्वकर्मणारचिता । इति यमभाणीत्पक्षी तं स्मृत + रामम् ॥६९१॥ मायाबलोति बलवान्धर्मविहीनो मदात्सुरद्वेषी । इति यमभाणीत्पक्षी तं स्मृत + रामम् ॥६९२॥ छित्वाममपक्षौद्वौ हृत्वासीतां जगामलङ्कां सः । इति यमभा + रामम् ॥६९३॥ विन्दाख्येचमुहूर्ते सीतां हृत्वा जगामलंकां सः । इति यमभा + रामम् ॥६९४॥ द्राक्प्राप्स्यसिदेवीं त्वं प्राप्नोमि भवत्कृपाबला ल्लोकान् । इत्युक्त्वायममृतविस्तं स्मृत + रामम् ॥६९५॥ मम *हेतोस्स्वप्राणा नमुचत्पक्षीति यस्स्वयं काष्ठैः । अदहत्तं सावरजस्तं श्रितमुक्तिप्रदंभजे रामम् ॥६९६॥ जप्त्वा पित्र्यं मन्त्रं गोदावर्यां जलाञ्जलिं चक्रे । तस्मै योऽनुजसहितस्तं श्रित + रामम् ॥६९७॥ अथ शरचापासिधरः क्रौञ्चारण्यं विवेशसावरजः । यस्सीतान्वेषण धीस्तं + रामम् ॥६९८॥ तत्रदरींयोपश्य त्पाताळनिभां तमोवृतां भयदाम् । रक्षस्त्रियमपि काञ्चित्तं श्रित + रामम् ॥६९९॥ विक-

टारक्षस्त्रीसा व्यालान्सिंहान्मृगान्सदाऽश्नन्ती । आगच्छद्यत्सविधं तं श्रितमुक्तिप्रदं भजे रामम् ॥७००॥ लक्ष्मण मालंबतसा कुञ्जरं स्यावहेऽत्रमुग्धाऽऽवाम्। इति यत्पुरतश्चपला तंश्रित + रामम् ॥७०१॥ आयुःपर्यन्तं त्वं मे भवभर्ता तवापिभार्याऽहम् । इति सो चे यत्पुरतस्तं श्रित + रामम् ॥७०२॥ इत्थमयोमुख्योक्त स्सौमित्रिः कर्ण नासिको रोजम् । यत्पुरतोऽच्छिनदस्यास्तं श्रित + रामम् ॥७०३॥ तस्यां स्थलं गताया मायोंद्विग्नम्मनस्सु दृढमपि मे । इति यं भ्राताऽहगिरं तं श्रितमोक्षप्रदं भजे रामम् ॥७०४॥ दुश्शकुनान्यद्यभयं शंसन्तित्वं भवाद्यधृतचापः । इति यं भ्राताऽऽहगिरं तं श्रित + रामम् ॥७०५॥ समजनि विपुलश्शब्दोऽपश्य द्भ्रक्षोऽथतत्रविपिनतले । अशिरोग्रीवंयोद्रा क्तंश्रित + रामम् ॥७०६॥ घोरान्द्विपमृगसिंहा न्खादन्तं यः कबन्धमद्राक्षीत् । उदर मुखं दीर्घभुजं तं श्रित + रामम् ॥७०७॥ कर्षन्तमुभयगात्रे वीक्ष्यकबन्धं तदाऽह सौमित्रिः । भयकम्पित कायोयं तं श्रित + रामम् ॥७०८॥ याहित्वं साकेतं भूतबलिं मां प्रदाय राज्यस्थः । स्मरमामिति सयमवदत्तं श्रित + रामम् ॥७०९॥ अथ पप्रच्छक बन्धो वद किं कार्यं तवात्र को वाऽसौ । इति यं चापासिकरं तं श्रित + रामम् ॥७१०॥ मम भक्षावुपयातौ क्षुधयादीनस्य का वुभौ च युवाम् इति यमपृच्छदनुज स्तंश्रित + रामम् ॥७११॥ इति दनुजगिरं श्रुत्वा ऽनुजमूचे यस्स्मरंस्तदा सीताम् । किं कार्यमिदानीमिति तंश्रित + रामम् ॥७१२॥ त्वां मामपि पश्यानुज शूरं व्यसनैः प्रपीडितं दैवात् । इति योऽनुजमाहगिरं तंश्रित + रामम् ॥७१३॥ आयातं मम निकटं द्रागिति कर्षन्त माशुतं वीक्ष्य । सौमित्रिः पोचेयं तंश्रित + रामम् ॥७१४॥ आर्याऽसिभ्यामावां बाहू च्छिन्दावहै कवन्धस्य । इत्यनुजो यमभाणी त्तंश्रित + रामम् ॥७१५॥

श्रुत्वैतद्वाचमसा वास्यं विस्तार्य सानुजंयमपि । भक्षयितुं प्रारे भेतं श्रितमोक्षप्रदं भजे रामम् ॥७१६॥ सव्यंभागं त्यक्त्वा-ऽवरजाय तदास्य दक्षिणंबाहुम् । असिनाऽच्छित्तरुषाय स्तं-श्रित + रामम् ॥७१७॥ भूम्यां सनिकृत्तभुजः पतितोऽपृच्छद्द-दाद्य कस्त्वमिति । स्वभुजच्छेत्तारंयं तंश्रित + रामम् ॥७१८॥ दशरथपुत्रोज्येष्टो रामोऽयं तदनुजोऽस्मिसौमित्रिः । इति तं यच्छ्रातो चेतं श्रित + रामम् ॥७१९॥ रक्षोपहृतांपत्नी मन्विष्यन्योमयाऽ द्यविपिनमियात् । इति तं यच्छ्रा + रामम् ॥७२०॥ कस्त्वं घोर-वपुर्वद मह्यं. प्रश्नेकुरूपहेतुममि । इति तंयच्छ्रा + रामम् ॥७२१॥ रति सहचर समरूप स्थूल शिरश्शाप पात्र महमभवम् । इति सयद-नुजमवादीत्तं श्रित + रामम् ॥७२२॥ अथ कोपादिन्द्रस्य प्राप्ता वज्राहतिर्मयापूर्वम् । इति सयदनुज + रामम् ॥७२३॥ ब्रह्म वरं ज्ञात्वेन्द्रः प्रादात्कुक्षौ मुखं च दीर्घभुजौ । इति सयदनुज + रामम् ॥७२४॥ शापस्यान्तो बाहुच्छेदन मसिनाकृतंहि रामेण । इति सयदनुज + रामम् ॥७२५॥ कुर्वेमतिसाचिव्यं मित्रं किञ्चि-त्प्रदर्श्यवां बलवत् । इति सयदनुजमवा + रामम् ॥७२६॥ वक्तुं नमेद्यशक्तिर्दाहात्पूर्वं भवेच्छरीरस्य । इति सयदनुज + रामम् ॥७२७॥ दग्धायां तस्यतनौ देवविमाने स सुन्दरस्स्थित्वा । वाचमथाऽभाणीद्यं तं श्रित + रामम् ॥७२८॥ रामान्येनत्वन्मे नकदापि मृतिर्भवेदिति प्रोचे । यत्पुरतस्स कबन्धस्तं श्रित + रामम् ॥७२९॥ शृणु दाशरथे राम त्वत्पत्नी विषयमेव मद्वचनम् । इति सुररिपुरवदद्यं तंश्रित + रामम् ॥७३०॥ पंपातीरे पुण्ये वसति गिरा वृश्यमूकनाम्नि कपिः । इति सुररिपु + रामम् ॥७३१॥ सुग्रीवं तं मित्रं कुरु वैदेह्याश्च मार्गणेनिपुणम् । इति सुररिपुरवदद्यं तंश्रितमुक्तिप्रदं भजे रामम् ॥७३२॥ अतिबुद्धिस्सत्यधृतिः कुरुते

साह्यं तवाद्यसुग्रीवः। इति सुररिपुरवदद्यं तंश्रितमुक्तिप्रदं भजे रामम् ॥७३३॥ वाल्यनुजस्तद्वैरी त्वत्साहाय्यं प्रतीक्षते सोऽपि। इति सुररिपु + रामम् ॥७३४॥ तस्याऽविदितंलोके नास्तिहि किञ्चित्स्वयंभुवारचिते। इति सुररिपु + रामम् ॥७३५॥ त्वं रामाऽनेनपथा फलभुङ्मार्गेतमाश्रयाक्षिप्रम्। इति सुररिपु + रामम् ॥७३६॥ श्रमणीशबरीकाचित्त्वां दृष्ट्वाद्राक्कलेबरं त्यजति। इति सुररिपु + रामम् ॥७३७॥ तस्मिन्पर्वतशिखरे स्वात्मपदार्थायथार्थ तांदधते। इति सुररिपु + रामम् ॥७३८॥ तत्र गिरौप्राग्द्वारे रम्या चगुहा शिलापिधानाऽस्ते। इति सुररिपु + रामम् ॥७३९॥ तन्निलयस्सुग्रीवः कपिभिर्मित्रैश्चतुर्भिरनुवसति। इति सयमनुशास्यागात्तंश्रित + रामम् ॥७४०॥ अथ तद्वचसाककुभं प्रययौ प्राचेतसीं तदायोद्राक्। लक्ष्मणसहितो दीनस्तंश्रित + रामम् ॥ ७४१ ॥ पंपा पश्चिमतीरं प्रापत्सुग्रीव दर्शनाकांक्षी। योनुजसहितो वेगात्तंश्रित + रामम् ॥७४२॥ प्राप्यशबर्यास्स्थानं प्राप्यसपर्यान्तया कृतां तुष्टः। कुशलमपृच्छद्यस्तां तंश्रित + रामम् ॥७४३॥ गुरु शुश्रूषा सफला कच्चित्प्राप्तं त्वया फलं तपसः। इति योऽपृच्छच्छबरीं तंश्रित + रामम् ॥७४४॥ इत्युक्ता साऽभाणी त्प्राप्तं तपसः फलं तवागमनात्। इति यं शबरी विनता तंश्रित + रामम् ॥७४५॥ राघव पूताऽस्म्यधुना त्वत्पुरतोऽहं तनुंत्यजाम्येनाम्। इति यं शबरी प्रोचे तंश्रित + रामम् ॥७४६॥ पश्यमतंङ्गवनं त्वं वेदिस्थल तीर्थं पुष्पशाखियुतम्। इति यं शबरी प्रोचे तंश्रित + रामम् ॥७४७॥ अथ येनानुज्ञाता शबरी ज्वलनं प्रविश्य गुरु सविधम्। प्राप दिव्यशरीरा तंश्रित + रामम् ॥७४८॥ ऋषि निर्मितेऽब्धितीर्थे स्नानादावां विनष्ट पापौस्थः। इत्यनुजं योऽभाणी त्तंश्रित + रामम् ॥७४९॥ यस्य समीपे पंपा तत्र गिरौ मित्र युक्तमर्कसुतम्। द्रष्टु

मगाद्योऽनुजयुक्तंश्रितमुक्तिप्रदं भजे रामम् ॥७५०॥ अथ गत्वा पंपां यो द्रष्टुं सुग्रीव मद्यवांछामि । इत्यनुजं योऽवादीत्तंश्रित + रामम् ॥७५१॥ द्रष्टुं गिरिशृङ्गस्थित मृक्षरजःपुत्र मद्यवाञ्छामि । इत्यनुजं योवादीत्तंश्रित + रामम् ॥७५२॥ अथ रतिमहचरविशिखै र्विद्धतनुर्यो विवेशपंपां ताम् । रम्यां लक्ष्मणसहित स्तंश्रित + रामम् ॥७५३॥ पंपासरोवरस्थं काकुत्स्थं भक्त चित्त कमलस्थम् । वैदेही विहितास्थं तं श्रीरामम् भजामि शरणमहम् ॥७५४॥ रामं श्यामळदेहं कोमळबाहुं विदेह जाजानिम् । भक्तार्ति नाशदक्षं तं श्री रामं भजामि शरणमहम् ॥७५५॥

## । मङ्गलश्लोकः ।

दण्डकारण्यमध्यस्थ मुनिमानसवासिने ।
भक्तानां हृदयांभोज भास्करायास्तु मङ्गळम् ॥१॥

विराधवधसंप्राप्त यशसे रण्य वासिने ।
अगस्त्यादिमुनिश्रेष्ट बृंदस्तुत्याय मङ्गळम् ॥२॥

दण्डकारण्य वास्तव्य रक्षःखण्डनकारिणे ।
मायामारीचसंहर्त्रे रामायास्तुसुमङ्गळम् ॥३॥

गृध्रराज गिराज्ञात सीतापहरणायच ।
कबन्ध शापहर्त्रेच रामायास्तुसु मङ्गळम् ॥४॥

सीतामार्गण दक्षस्य सुग्रीवस्य दिदृक्षया ।
प्रस्थितायशबर्यैच मुक्तिदायास्तु मंगळम् ॥५॥

पंपातीर मनुप्राप्य भ्रात्रासह निवासिने ।
सीतास्मृतिमिषा दात्तदुःखायास्तुसु मङ्गळम् ॥६॥

रामानन्देन यतिना रचिता भक्तितो मुदा ।
आरण्यकाण्डोक्त कथायुक्ता जीयादियंस्तुतिः ॥७॥

रामानन्द परिव्राड्लिखिता पठतां सुखेन बोधार्थं ।
आरण्यकाण्ड गाथायुक्ता नूतास्तुतिस्त्वियं जीयात् ॥८॥

॥ आरण्यकाण्डस्समाप्तः । हरिःओम् शुभमस्तु ॥





ॐ

॥ श्रीगणेशाय नमः । श्रीशारदांबिकायै नमः । श्रीगुरुभ्यो नमः ॥

# ॥ किष्किन्धाकाण्डः ॥



यत्स्मृत्याविधिकेशव शङ्करमुख्यास्स्वकार्यसंसक्ताः ।
निष्प्रत्यूहसमाप्तिं काङ्क्षन्त्यद्यापितं भजे गणपम् ॥

यत्स्मरणं भक्तानां वाग्वैशद्यं कवित्वपरिपाटीं ।
प्रतिदिशति तां भजेहं किष्किन्धाकाण्ड पूर्तिमभिवाञ्छन् ॥

॥ अथकथाप्रारंभः । हरिः ओम् । अयं च किष्किन्धाकाण्डः
तिरुक्कळावूर् महाजन द्रव्यसहायेन प्राकाश्यंनीतः ॥

तां पुष्करणीं गत्वा पद्मोत्पल हंसमीनकमठयुताम् । विलपन्योऽनुजमभणत्तं श्रीरामं भजामिशरणमहम् ॥१॥ पंपाकाननमिदमम शोकार्तस्यापि तोषदंभवति । इत्यनुजं योऽभाणीत्तं श्रीरामं = महम् ॥२॥ दृगविषया वैदेही वर्धयते शोकमेव नितरांमे । इत्यनुजं योऽभाणीत्तं = महम् ॥३॥ अत्रवने च मयूरा स्त्रीभिस्सहिता मुदाप्रनृत्यन्ति । इत्यनुजं यो = महम् ॥४॥ यदिनापहृतासीता दुःखं मम जातुनोभवेद्विपिने । इत्यनुजं यो = महम् ॥५॥ पश्यानुजपंपाया स्तीरनिकुञ्जेषु किन्नरद्वंद्वम् । इत्यनुजं यो = महम् ॥६॥ पश्यानुजपंपां त्वं द्वन्द्वीभूतप्रमत्तविहगयुताम् । इत्यनुजं यो = ॥७॥ पंपावनस्थमधुपांऽडजमृगवानितानरक्षसापहृताः । इत्यनुजं यो = महम् ॥८॥ इत्थं प्रलपन्गच्छं स्तिष्ठन्नासीन

उत्थितोधायन् । योऽभ्रमदद्रिसमीपेतं = महम् ॥९॥ दृष्ट्वाऽवर-जोऽथाऽऽर्यं स्वास्थ्यं भजमास्तुविच्युतिर्धैर्यात् । इति यं प्रोवाच गिरं तं श्री = महम् ॥१०॥ आर्यत्यजशोकं त्वं किं नात्मानं प्रबुध्यसे भ्रान्त्या । इत्यनुजोयमवोचत्तं श्री = महम् ॥११॥ इत्युक्त्वा सौमित्रिः पंपातीरेररक्षशोकहतम् । यं विस्मृतनिजभानं तं श्री = महम् ॥१२॥ अथ पर्वतनिकटेयं सावरजं वीक्ष्य वालिनस्त्रस्तः । सुग्रीवः प्रापतटं तं श्री = महम् ॥१३॥ सचिवेभ्यः प्रोवाच त्सावरजं यं महीध्रनिकटस्थम् । वालिप्रणीधी इति स च तं श्री = महम् ॥१४॥ अथ सुग्रीव गिरन्ते त्वा हनुमन्मुखाश्च सचिववराः । ददृशुर्यसावरजन्तं श्री = महम् ॥१५॥ अथ सुग्रीवं हनुमा न्प्रोचेवाचं तवास्तुनोभीतिः । दृष्ट्वायं सानुजमिति तं श्री = महम् ॥१६॥ मलयेऽस्मन्निलयेऽस्मि न्यं दृष्ट्वा ते कुतोभयं जातम् । इमि हनुमन्तमपृच्छत्तं श्री = महम् ॥१७॥ शाखामृगबुद्धिं त्यज राजंस्त्वं यं विचार्यकुरुकार्यम् । इति हनुमांस्तमवोचत्तं श्री = महम् ॥१८॥ हनुमद्वचनं श्रुत्वा यं दृष्ट्वा कस्यसाध्वसंनस्यात् । इति गांप्राहकपीशस्तं श्री=महम् ॥१९॥ हनुमन्सहचरयुक्तं यं ज्ञात्वाऽऽगत्यतद्गिरं ब्रूहि । इति तंकपिराडवदत्तं श्री = महम् ॥२०॥ यस्यमतं ज्ञात्वा द्रा गायाहित्वं ममान्तिकं हनुमन् । इति तंकपिराडवदत्तं श्री = महम् ॥२१॥ इति सन्दिष्टो राज्ञा वेगात्प्रागाद्य मार्यमनुजयुतम् । द्रष्टुं मतिमान्हनुमांस्तं श्री = महम् ॥२२॥ शठ बुद्धितया हनुमा न्यं द्रष्टुं भिक्षुरूपधारीसन् । निर्भीकोऽगच्छद्राक्तं श्री = महम् ॥२३॥ श्रीमन्तौ धीमन्तौ कुत्रत्यौ वदतमद्यभगवन्तौ । इति यमपृच्छद्धनुमांस्तं श्री=महम् ॥२४॥ पृथिवीं समुद्ररशनां पातुं शक्तौ युवाञ्चकुत्रत्यौ । इति यमपृच्छद्धनुमांस्तं श्री = महम् ॥२५॥ चापासिकरौ वदतं कस्यसुतौ बुद्धिशालिनौ च युवाम् ।

इति यम = महम् ॥२६॥ विपिनेपरिभ्रमन्तौ जटिलौ वदतं युवा-
ञ्जनिभूमिम् । इति यमपृच्छद्धनु = महम् ॥२७॥ वसतिगिरौ
धर्मात्मा सुग्रीवो नाम वालिनो भ्राता । इति यमभाणीद्धनुमांस्तं
श्री = महम् ॥२८॥ भ्राता निकृतो वीर स्सुग्रीवोऽस्मिन्गिरौ
भयाद्वसति । इति यमभाणीद्धनुमांस्तं श्री = महम् ॥२९॥ तस्य
सखासचिवोऽहं हनुमान्नाम्नांऽजनासुतोऽनिलजः । इति यमभा =
महम् ॥३०॥ दृष्ट्वा भवन्तमधुना सहचरसहितं वनेऽहमागच्छम् ।
इति यमभाणीद्धनुमांस्तं श्री = महम् ॥३१॥ सुग्रीवप्रहितोहं त्वा
मानेतुं समागतोऽस्म्यधुना । इति यमभा = महम् ॥३२॥ सुग्री-
वार्थं भिक्षोरूपच्छन्नं च कामरूपं माम् । विद्धीतिसयं प्रोचेतं श्री-
रामं = महम् ॥३३॥ इच्छति भवतासख्यं यामोवयमद्यतत्समीपं
द्राक् । इति सयमूचेवाचं तं श्रीमामं = महम् ॥३४॥ अथ तं
मौनिनमनिलज मेनं दृष्ट्वा जगादयोऽवरजम् । तोषाद्विरमात्तधृतिस्तं
श्री = महम् ॥३५॥ आन्तं ऋग्यध्येता ज्ञाता सर्वस्य शास्त्रनिच
यस्य । अनिलज इत्यूचेयस्तं श्री = महम् ॥३६॥ मुखनयननिटि-
लदेह भाषणकालेनदोषलेशयुतः । अनिलज इत्यूचेयस्तं श्री =
महम् ॥३७॥ एवं गुणगणयुक्तः सचिवः कपिराजरक्षणे योग्यः ।
अनिलज इत्यूचेयस्तं श्री = महम् ॥३८॥ अभिभाषस्वैनं त्वं सौमि-
त्रे स्नेहयुक्तमधुरगिरा । इति योऽनुजमाहगिरन्तं श्री = महम् ॥३९॥
इत्युक्तो हनुमन्तं यद्भ्रातोचे व चोऽतिगंभीरम् । कालानुगुणं निपु-
णस्तं श्री = महम् ॥४०॥ विद्धचावामपितं विपिनेमृगया वहे-
कपि श्रेष्ठम् । इति तं यद्भ्रातो चेत्तं श्री = महम् ॥४१॥ हनुम-
न्सुग्रीवगिरा यत्कार्यं तद्वदत्वमावाभ्याम् । इति तं यद्भ्रातो चेत्तं
श्री = महम् ॥४२॥ यदवरजगिरं श्रुत्वा कारयितुं सख्यमैच्छदेता-
भ्याम् । मनसाराज्ञोऽनिलजस्तं श्री = महम् ॥४३॥ कष्टं नष्ट-

मभूद्रा क्सुग्रीवस्येति निश्चयं चक्रे। यत्सख्याद्वायुसुतस्तं श्री = महम् ॥४४॥ भवतोररण्यवसतौ हेतुं वद शृण्वतोऽद्यमेत्वमपि। इति सयदनुजमपृच्छत्तं श्री = महम् ॥४५॥ इत्थं पृच्छति तस्मि न्दशरथपुत्रेष्वयं मम ज्येष्ठः। इति तं प्राहयदनुजस्तं श्री = महम् ॥४६॥ अयमपि नाम्नारामो लक्ष्मणनामाऽहमस्मि सौमित्रिः। इति तं प्राहयदनुजस्तं श्री = महम् ॥४७॥ कैकेय्यानिर्बन्धा द्राजा राज्यं ददौ कनिष्ठाय। इति तं प्राहय = महम् ॥४८॥ पितृ वाक्याज्ज्येष्ठोऽयं पत्नीसहितो मया वनं प्रापत्। इति तं प्राहय = महम् ॥४९ आवामपकृष्यपदा त्पत्नीं ज्येष्ठस्य रावणोऽहार्षीत्। *इति तं प्राहयदनुजस्तं हनुमत्पूज्य माश्रये रामम् ॥५० शापा- द्विमुक्तदनुना प्रोक्तावावां कपीन्द्रमगमाव। इति तं प्राहयदनुजस्तं हनु = रामम् ॥५१॥ आख्यातं सर्वमिदं प्रष्ट्रे तुभ्यं मयानुपूर्व्येण। इति तं प्राहयदनुजस्तं हनु = रामम् ॥५२॥ आवामस्मिन्काले द्वौ सुग्रीवं शरण्यमापाव। इति तं प्राहय = रामम् ॥५३॥ लोक शरण्यो रामो मित्रं सुग्रीवमिच्छति प्राज्ञः। इति तं प्राहय = रामम् ॥५४॥ शास्ता दुष्ट जनानां मित्रं सुग्रीवमिच्छति ह्यधुना। इति तं प्राहय = रामम् ॥५५॥ त्राताशिष्ट जनानां मित्रं कपिराज- मिच्छति ह्यार्यः। इति तं प्राहय = रामम् ॥५६॥ यद्भ्रातर मथ- हनुमा न्सौमित्रिं वीक्ष्यबाष्पपूर्णाक्षम्। वाचमवोचन्मधुरां तं हनु = रामम् ॥५७॥ जितकोपौ मतिमन्तौ सेव्यौ कपिभूभुजाभवन्तौ द्राक्। इति सयदनुजमवादीत्तं हनु = रामम् ॥५८॥ भ्रात्रा हृतभूदारः कुशलीसोऽभूत्त्वदीयसाहाय्यात्। इति कपिराहयदनुजं तं हनु = रामम् ॥५९॥ अथ हनुमान्यमुदारं भ्रातासहितं स्वपृष्ठमारोप्य। सुग्रीवसमीपमगात्तं हनु = रामम् ॥६०॥ अथ यं दशरथपुत्रं भ्रातास- हितं जगाद कपिराजः। हनुमन्निगदित वृत्तं तं हनु = रामम् ॥६१॥

रामत्वद्गुणनखिलं हनुमद्वाक्यादहं विजानामि । इति यं कपिराड-भणत्तं हनु = रामम् ॥६२॥ अथ कपिराड्यस्य करं संगृह्योचे स्वपाणिना तुष्टः । अग्न्यर्थं हनुमन्तं तं हनु = रामम् ॥६३॥ हनुमत्प्रवृद्धगनलं गेनसहाम्यर्च्य पाणिनापाणिम् । जगृहे कपिरा-ण्मोदात्तं हनु = रामम् ॥६४॥ अथ कपिराड्ये न समं तोपादग्निं प्रदक्षिणीकृत्य । यस्यप्राणसमोऽभूत्तं हनु = रामम् ॥६५॥ सम सुखदुःखावामित्युक्त्वा सालपर्णकृत पीठः । येनाविक्षद्राविजस्तं हनु = रामम् ॥६६॥ हनुमत्कृत दळपीठं भजति यदनुजेमनु-ष्यरूपधरः । कपिराट्स्ववृत्तमवदत्तं हनु = रामम् ॥६७॥ भ्रातु-स्त्रस्तस्यत्वं कुर्वभयं मेऽस्माद्विमुक्तस्य । इति यं प्रार्थयत कपिस्तं हनु = रामम् ॥६८॥ श्रुत्वा तस्य वचोय स्त्वत्स्त्र्यपहर्तार माश्वहं हन्मि । इति तं प्रहसन्नवदत्तं हनु = रामम् ॥६९॥ द्रक्ष्यसितं मद्बाण त्यक्तासुं भूमि शायिनं द्राक्त्वम् । इति तं गिरमवदद्यस्तं हनु = रामम् ॥७०॥ सुग्रीव रामसख्ये यत्स्त्रीरक्षः कपीन्द्रने-त्राणि । वामान्यापुस्फुरणं तं हनु = रामम् ॥७१॥ हत गृध्रं द्रा-क्सीता हर्तारं तं नयामि यमसदनम् । इति कपिराड्यमवादीत्तं हनु = रामम् ॥७२॥ दास्याम्यानीयाहं सीतां पाताळवर्तिनीमपिते । इति कपिराड्यमवादीत्तं हनु = रामम् ॥७३॥ अहमनुमानाद्वेद्मि क्रोशन्तीं रावणाङ्कगांदिविताम् । इति कपिराड्यमवादीत्तं हनु = रामम् ॥७४॥ रामेति क्रन्दन्तीं मुञ्चन्तीं तां विभूषण ग्रन्थिम् । वेद्मिति स यमवादीत्तं हनु = रामम् ॥७५॥ भूषाग्रन्थिः पतितः पुरतो-ऽस्माकं तया विनिक्षिप्तः । इति कपिराड्यमभाणीत्तं हनु = रामम् ॥७६॥ द्रष्टुं तमर्हसित्वं नाथेत्युक्त्वा च कन्दरानीतम् । प्रादा-द्यस्मै कपिराट्तं हनु = रामम् ॥७७॥ वस्त्र ग्रथिताभूषाः पश्य-न्यो हा प्रिये इति क्रोशन् । भूमौन्यपतद्व्यसनात्तं हनु = रामम्

॥७८॥ सौमित्रे पश्येमा वस्त्र विभूषास्तया सुविक्षिप्ताः। इति योऽरोदीदुच्चैस्तं हनु = रामम् ॥७९॥ वक्षसि धृत्वा भूषाः पश्यन्तं यं रुदन्तमभिवीक्ष्य । सौमित्रिर्गिरमूचेतं हनु = रामम् ॥८०॥ नाहं जाने वलये केयूरेवा धृते तयाद्यापि । इत्यनुजो यमवादीत्तं हनु = रामम् ॥८१॥ जानामिनूपुरे द्वे सीतायाः पादवन्दनान्नित्यम् । इत्यनुजोयम = रामम् ॥८२॥ अथ कपिनाथं पश्यन्मृद्व्यावाचा स राक्षसः क्वास्ते। वदमित्रेत्यूचे यस्तं हनु = रामम् ॥८३॥ इति पृष्टो यस्य सुहृत्प्रांजलिरूचेन तस्य निलयमहम् । जानेशीलं वेति च तं हनु = रामम् ॥८४॥ शृणु मम वाचं सत्यं त्यज शोकं त्वं हनामिदशवदनम् । इति यं कपिराडवदत्तं हनु = रामम् ॥८५॥ शोकोजीवितसंशय दायीति वदन्ति वेदशास्त्रज्ञाः । इति यं कपिराडवदत्तं हनु = रामम् ॥८६॥ यत्नः कार्योभवता मैथिल्या मार्गणार्थमनुजेन । इति यं कपिरा = रामम् ॥८७॥ इति नर वानरवीरौ समसुखदुःखावभाषिषातां द्वौ । यदवरजस्य पुरस्तात्तं हनु = रामम् ॥८८॥ भवतस्सख्याद्राम प्राप्तं राज्यं मयेति मनसाऽहम् । कलयेऽद्येति यमभणत्तं हनु = रामम् ॥८९॥ मित्र भवानद्यधिया सीतां हस्तस्थितां विदां कुरुतात् । इति यमवादीत्कपिराट्तं हनु = रामम् ॥९०॥ अथ सुग्रीवो विनया दूचेदुःखीस्वदारभूहरणम् । यत्सविधे वालिकृतं तं हनु = रामम् ॥९१॥ उपकारफलां मैत्री मपकारफलं वदन्ति शत्रुत्वम् । प्राज्ञा इति स यमभणत्तं हनु = रामम् ॥९२॥ त्वामपि राघव दृष्ट्वा धृतचापं भीतिमापमधुनाऽहम् । इति यत्सुहृदभणद्रां तं हनु = रामम् ॥९३॥ सुहृदश्च मदीयास्ते कारागेहेवसन्ति तद्वद्धाः । इति यत्सुहृदभणद्रांतं हनु = रामम् ॥९४॥ कृच्छ्रं गतोप्यहमेभिर्हनुमत्प्रमुखैरसून्वहाम्यधुना । इति यत्सुहृदभणद्रां तं हनु = रामम् ॥९५॥

ज्येष्ठस्य बालिनो मे ध्वंसादुःखं प्रणष्टमद्य भवेत्। इति यत्सुहृदभणद्रां तं हनु = रामम् ॥९६॥ युवयोर्द्वेषे हेतुं वद सुग्रीवत्वमद्यमह्यं द्राक्। इति यो मित्रमपृच्छत्तं हनु = रामम् ॥९७॥ इति पृष्टस्सुग्रीव शृणुदाशरथे विरोधहेतुं नौ। इति यमभाणीत्कपिराट्तं हनु = रामम् ॥९८॥ अस्मत्ताते याते स्वर्लोकं राज्यमाप स ज्येष्ठः। इति यमभा = रामम् ॥९९॥ शासति वालिनि राज्यं प्रेष्यवदस्मिन्नहं सदान्यवसम्। इति यमभाणीत्सुगळस्तं हनु = रामम् ॥१००॥ अथ मायावीनाम्ना दुन्दुभिपुत्रो वधूकृतेऽद्विष्ट। इति यमभाणीत्सुगळस्तं हनु = रामम् ॥१०१॥ स तु किष्किन्धां *रात्र्या गागत्सरणाय वालिनमकूजत्। इति यमभाणीत्सुगळस्तं सुग्रीवप्रियं भजे रामम् ॥१०२॥ तद्घोषमसहमानो वाली रात्रौ विनिर्ययौ गेहात्। इति यमभाणीत्सुगळस्तं सुग्रीव = रामम् ॥१०३॥ अहमप्यगमं पश्चा दावां दृष्ट्वा भियाऽद्रवत्सोपि। इति यं प्रियसुहृदवदत्तं सुग्रीव = रामम् ॥१०४॥ स तृणैरावृतमुर्व्या विवरं दुर्गंविवेशमायावी। इति यं प्रियसुहृदवदत्तं सुग्रीव = रामम् ॥१०५॥ वाल्यथमां गिरमूचे तिष्ठत्वं द्वारि जागरूक इति। इति यं प्रियसुहृ = रामम् ॥१०६॥ हत्वारिपुमहमेयां तावदिहत्वं वसेति मामूचे। इति यं प्रियसुहृ = रामम् ॥१०७॥ इत्युक्तो न्यवसमहं वत्सरपर्यन्तमाज्ञया तस्य। इति यं प्रियसुहृ = रामम् ॥१०८॥ ज्येष्ठन्नष्टं ज्ञात्वाऽस्वान्तं मेऽभूच्चपापशङ्कितदा। इति यं प्रियसुहृ = रामम् ॥१०९॥ निस्सृत मथबिलमार्गा दृष्टं रुधिरं मयासफेनं भो। इति यं प्रियसुहृ = रामम् ॥११०॥ अथ रक्षःकण्ठरवं श्रुत्वा ज्येष्ठं मृतं त्वहममंसि। इति यं प्रियसुहृ = रामम् ॥१११॥ आच्छाद्य बिलद्वारं शिलयागिरिमात्रयाऽहमापपुरीम्। इति यं प्रियसुहृ = रामम् ॥११२॥ अथ सचिवैर्दुःखार्तो यत्नाद्रा-

ज्येभिषेचितोऽहमपि । इति यं प्रियसुहृ = रामम् ॥११३॥ राज्यं प्रशासतोमे शत्रुं हत्वा पुरीमगाद्वाली । इति यं प्रियसुहृ = रामम् ॥११४॥ न त्वाऽहं तत्पदयो रवदंवाचं तदीयरुद्छान्त्यै । इति यं प्रियसुहृ = रामम् ॥११५॥ छत्रं वालव्यजनं गृहीष्व त्वं स्वकीयमित्यवदम् । इति यं प्रियसुहृ = रामम् ॥११६॥ पिहितं द्वारं भीत्या दनुजाच्छिलयेति वाचमभणन्तम् । इति यं प्रियसु = रामम् ॥११७॥ माकुरुरोषं दीने त्वं मय्यार्येति वाचमभणन्तम् । इति यं प्रिय = रामम् ॥११८॥ इति बहुधोक्तोपि मया क्रोधं नामुञ्चदीषदपि दुष्टः । इति यं प्रियसुहृदभणत्तं सु = रामम् ॥११९॥ सभ्यानथ वाल्यूचे विदितं वा द्रोहिणोऽस्यवृत्तमिति । इति यं प्रिय = रामम् ॥१२०॥ अत्राप्यनेन रुद्धोऽस्मीत्यवदत्तान्स पापधीस्सभ्यान् । इति यं प्रिय सु = रामम् ॥१२१॥ इत्युक्त्वा पापीमां वस्त्रेणैकेन चारयामास । इति यं प्रिय सु = रामम् ॥१२२॥ ते नाऽहं हृतदारो ह्यपविद्धोऽकार्षमार्यभूभ्रमणम् इति यं प्रियसु = रामम् ॥१२३॥ अथ गिरिवरमेन महं हनुमद्वाक्याद्विक्षमपगतभीः । इति यं प्रियसु = रामम् ॥१२४॥ लोकानामभयं कर भीतिं ज्येष्ठाद्विनाशयद्राक्त्वम् । इति यं प्रियसु = रामम् ॥१२५॥ यावन्नदृष्टि विषयस्तावज्जीवेत्सदुर्गुणो वाली । इति मित्रं योऽभाणीत्तं सुग्री = रामम् ॥१२६॥ श्रुत्वा तद्वीर्यंधृती कर्तव्यं तद्विधत्स्वयद्योग्यम् । इति यं सुहृदभणद्रान्तं सु = रामम् ॥१२७॥ दुन्दुभिनामामहिषो युद्धायापद्धिमाद्रिमतिदर्पात् । इति यं सु = रामम् ॥१२८॥ न समर्थोहं योद्धुं वालीसदृशस्तवेति सतमूचे । इति यं सु = रामम् ॥१२९॥ अथ किष्किन्धाद्वारं गत्वा वृक्षान्वभञ्जकूजन्सः । इति यं सुहृ = रामम् ॥१३०॥ अथ वाली तं हत्वो च्चिक्षेपतनुं स्व बाहुयुग्मेन । इति यं सुहृ = रामम् ॥१३१॥

इति योऽनुज + रामम् ॥१२७॥ जठरं भित्त्वाऽऽयाहि त्वरितं भ्रातस्त्वमित्युवाचखलः। इति योऽनुज + रामम्॥१२८॥ शक्तिः काते भ्रातुर्जठरं भेत्तुंममेति मुनिरूचे । इति योऽनुज + रामम् ॥१२९॥ श्रुत्वेत्थं तद्वचनं क्रोधात्सोऽभिद्रवन्मुनिं पापी। इति योऽनुज+रामम् ॥१३०॥ क्रुद्धेन तेन मुनिना निर्दग्धश्चक्षुषा नलेन तदा। असुरोऽपी त्याहस्वयं तं मुनि + रामम् ॥१३१॥ विप्रानुकम्पयेत्थं मुनिनेनाऽगस्त्येन निर्भयंहि वनम्। आसीदित्य वदद्यस्तं मुनि + रामम् ॥१३२॥ तद्भ्रातुराश्रमंय स्तस्यांरात्र्यां प्रविश्यसन्तोषात्। स्थित्वा मुनि माहोषसि तं मुनि + रामम् ॥१३३॥ द्रष्टुं तवाऽहमग्रज आगममत्रेति तं मुनिं चोक्त्वा। प्रययौ यस्तन्निकटात्तं मुनि + रामम् । १३४॥ अद्यागऽस्त्यस्यमुने राश्रमनिकटं समागतास्मवयम्। इति लक्ष्मणमवदद्यस्तं मुनि + रामम् ॥१३५॥ अस्य गिरा विन्ध्याद्रि र्मार्गनिरोधं जहौ च पुष्पवतोः। इति लक्ष्मणमवदद्यस्तं मुनि + रामम् ॥१३६॥ अस्मान्स तपस्वी दृष्ट्वा श्रेयःप्रदास्यतेऽभ्याधिकम्। इति लक्ष्मणमवदद्यस्तं मुनि + रामम् ॥१३७॥ वनवसतेरिहशेषं गमयित्वाऽहं प्रयामि साकेतम्। इति लक्ष्मणमवदद्यस्तं मुनि + रामम् ॥१३८। देवाःसिद्धामुनयोऽगस्त्यं नियतं ह्युपासतेऽभीक्ष्णम्। इति लक्ष्मणमवदद्यं तं मुनि + रामम् ॥१३९॥ अत्रमृषावादीवा क्रूरो जीवेन्नजातु दुष्टोवा। इति लक्ष्मण + रामम् ॥१४०॥ अद्यागस्त्यस्य मुनेः प्रविशत्वं मां निवेदयितुमुटजम्। इति लक्ष्मण + रामम् ॥१४१॥ श्रुत्वेत्थं यस्यगिरं मुनिशिष्यं कश्चिदाह सौमित्रिः। भ्रातुर्वृत्तम शेषं तं मुनि + रामम् ॥१४२॥ ब्रूहि वटोत्वमगस्त्यं सानुज सीतं समागतं रामम्। इति तं यद्भ्रातोचे तं मुनि + रामम् ॥१४३॥ पितृशासनतो राज्यं त्यक्त्वा रामं त्विहाऽऽगतं ब्रूहि। इति तं यद्भ्रा-

तो चेतं मुनि + रामम् ॥१४४॥ श्रुत्वा यच्छ्रातृगिरं शिष्यस्तूर्णं जगादतानृषये। गुरवे नत्वाभक्त्या तं मुनि + रामम् ॥१४५॥ श्रुत्वान्ते वासिगिरं मुनिरूचे यद्दिदृक्षया तं गाम्। झटिति प्रवेशयेतिच तं मुनि + रामम् ॥१४६॥ शिष्याहूतस्सीता लक्ष्मणसहितो विवेशमुन्युटजम्। यो योगिहृदयवासी तं मुनि + रामम् ॥१४७॥ तत्र ब्रह्ममुखानां स्थानान्युद्वीक्ष्यदानवारीणाम्। लक्ष्मणमाहगिरंयस्तं मुनि + रामम् ॥१४८॥ पश्यातुजमुनिसङ्घैः शिष्यैर्बहुभिश्च संवृतोऽगस्त्यः। आयातीत्यवदद्यस्तं मुनि + रामम् ॥१४९॥ अथ तस्यागस्त्यमुनेः पदयोःप्रणनाम साबलावरजः। लोकत्रय वन्द्योयस्तं मुनि + रामम् ॥१५०॥ प्रणमन्तंयमगस्त्यः कन्दैर्मूलैःफलैश्च संपूज्य। विधिवद्वाचमवादी त्तं मुनि + रामम् ॥१५१॥ दिव्यं *गृहीष्वधनु र्विहितामिदं विश्वकर्मणा पूर्वम्। इति तत्सोऽदाद्यस्मै तं धृतचापंस्मरामि हृदि + रामम् ॥१५२॥ तूणींचाक्षयसायक पूर्णे गृह्णीष्वरजतकोशमसिम्। इति तां त्सोदाद्यस्मैतं धृत + रामम् ॥१५३॥ इत्थं मुनिरुक्त्वागां यस्मै दत्वाऽथ सकलमपि शस्त्रम्। पुनराहागिरंतुष्टस्तं धृत + रामम् ॥१५४॥ प्रीतोस्मि रामभद्राद्याऽऽगमनात्ते ससीतसौमित्रेः। इति मुनिराहगिरं यं तं धृत + रामम् ॥१५५॥ अध्वश्रमबाधावो गच्छत्वस्मिन्ममाश्र मे वासात्। इति मुनिराहगिरं यं तं धृत + रामम् ॥१५६॥ इह रामजानकीयं रमते सीता यथा तथा क्रियताम्। इति मुनिराह + रामम् ॥१५७॥ आसृष्टेःप्रकृतिरियं प्रीतिःपत्यौसमास्थिते स्त्रीणाम्। इति मुनिराहागिरं + रामम् ॥१५८॥ विषमस्थं त्यजति पतिं नारीतिगिरं मृषांकरो त्येषा। इति मुनिराह + रामम् ॥१५९॥ चलतातैक्ष्ण्यंशैघ्न्यं प्रत्येकं विद्युदस्त्रगरुडेषु। दृष्टं चेत्यवदद्यं तं धृत + रामम् ॥१६०॥ तन्नितयं चैकस्यां नार्यामस्तीति लोकनिष्ठुरवाक्। नास्यामिति सय-

भवदत्तं धृत + रामम् ॥१६१॥ भार्येषाराघवते निर्दोषाऽरुन्धतीसमानाऽस्ते। इति यं मुनि रूचेगां तं धृत + रामम् ॥१६२॥ अनयाऽनुजन्मनापि स्वंवस रामाऽऽश्रमे मुदं जनयन्। इति यं मुनि रूचेगां तं धृत + रामम् ॥१६३॥ इत्युक्तः प्रत्यवद द्धन्योऽस्म्यद्यप्रदेहि वासभुवम् इति योऽपृच्छदगस्त्यं तं धृत + रामम् ॥१६४॥ स मुनिर्ध्यात्वामनसा प्रोचेयं सोदकं मृगैस्सहितम्। पञ्चवटीदेशं द्राक्तं + रामम् ॥१६५॥ योजनयुग्मं देशा दस्माद्गत्वा तथाऽश्रमं कृत्वा। वससुखमित्यवदद्यं तं धृत + रामम् ॥१६६॥ कुर्वन्पितृवाक्यमृतं तन्वनृषि पालनव्रतं पूर्णम्। वस तत्रेत्य वदद्यं तं धृत + रामम् ॥१६७॥ इत्युक्तोऽनुजसीता सहितो योऽनुज्ञया मुनेर्निकटात्। प्रययौ पञ्चवटीं प्रतितं धृत + रामम् ॥१६८॥ गच्छन्मध्येमार्गं दृष्ट्वागृध्रं वटाग्रसुस्थं यः। कस्त्वं वदेत्यपृच्छत्तं धृत + रामम् ॥१६९॥ वाचं निशम्यगृध्रो विद्धिवयस्यं पितुस्तवेति गिरम्। मधुरां प्रोचेयं द्राक्तं धृत + रामम् ॥१७०॥ बुद्ध्वापितृसखमथतं कुलमव्यग्रं तदीयमपिनाम। योऽपृच्छद्बहुमाना त्तं धृत + रामम् ॥१७१॥ श्रुत्वातद्वचनमथो कर्दमवंश्याच्चकाश्यपादरुणः। अजनी त्याह स यस्मै तं धृत + रामम् ॥१७२॥ तस्य कनिष्ठसुतं मां संपाति ज्येष्ठमप्यमुं विद्धि। इत्याह जटायुर्यं तं धृत + रामम् ॥१७३॥ सोहं विपिनसहाय स्तवचेदिच्छा सुखं भविष्यामि। इत्याह जटायुर्यं तं धृत + रामम् ॥१७४॥ पञ्चवटीं गत्वायो गृध्रेणसहाऽनुजं तदाप्रोचे। दर्शय वासस्थलमिति तं धृत + रामम् ॥१७५॥ सम्यक्परितो दृष्ट्वा कुरुपर्णकुटीं दृढां समां सजलाम्। इति लक्ष्मणमवदद्यस्तं धृत + रामम् ॥१७६॥ वैदेही तोषकरां समशीतोष्णां समस्थलां शालाम्। कुर्विंतियोऽनुजमूचे तं धृत + रामम् ॥१७७॥ नाथत्वयिपरवानह मस्म्याज्ञाते बली-

यसी मम वै। इति यं प्रोचेऽवरजस्तं धृत + रामम् ॥१७८॥
प्रीतस्तद्वचनाद्यो ऽदर्शयदनुजायरम्यमथदेशम्। तीरे गोदावर्यास्तं
धृत + रामम् ॥१७९॥ पुण्यमिदं मेध्यमिदं बहु-मृगपक्षिस्थलं
सुखाधारम्। इति योऽवादीदनुजं तं धृत + रामम्। १८०॥
येनोक्तोऽथावरज स्सुस्तं भां द्वारशोभितां सुदृढाम्। असृजत्पर्ण-
कुटीं द्राक्तं धृत + रामम् ॥१८१॥ स्नात्वालंकृत्यकुटीं कृत्वाशा-
न्ति प्रदर्शयामास। यस्मै सौमित्रिस्तां तं धृत + रामम् ॥१८२॥
तोषं प्रापद्दृष्ट्वा तां शालां सीतयातदानीं यः। अन्तः प्रविश्यसुदिने
तं धृत + रामम् ॥१८३॥ परिरभ्याऽथ भुजाभ्यां संहृष्टोयो
जगादसौमित्रिम्। अत्र वसामोवयमिति तं धृत + रामम् ॥१८४॥
अथहेमन्तत्रौ यः कल्ये गोदावरीं नदीं प्रययौ। स्नानार्थं सह
सीतस्तं धृत + रामम् ॥१८५॥ यं प्रोचे धृत कलशं स्नेहादनुज
स्तदागिरं हृष्टः। हिमसमयः प्रागादिति तं धृत + रामम् ॥१८६॥
आर्यभरतोपि सरयूं स्नानार्थं गच्छतीत्यहं मन्ये। इत्यनुजोयम-
वादीत्तं धृत + रामम् ॥१८७॥ सन्त्यज्य राजभोगा नार्यं सर्वा-
त्मनाऽऽश्रितो भरतः। इत्यवदद्यम् वरजस्तं धृत + रामम् ॥१८८॥
पुत्रेनो मातृगुणा स्तद्धेतुगुणो न कार्यगुणहेतुः। इत्यवदद्यम वरज-
स्तं धृत + रामम् ॥१८९॥ दशरथभार्या भूत्वा दुर्गुणपात्रं कथं
नु कैकेयी। आसीदित्याह सयं तं धृत + रामम् ॥१९०॥ श्रुत्वै
तामनुजगिरं योऽसहमानस्तदाऽब्रवीद्वचनम्। मित्रं सौमित्रिं द्राक्तं
धृत रामम् ॥१९१॥ अंबां न मध्यमां त्वं मानिन्दस्तत्सुतस्य
त्वद्गाधाम्। इति योऽवरजमवादीत्तं धृत + रामम् ॥१९२॥ अह-
मेष्यामि कदावा शत्रुघ्नेन त्वयापि भरतेन। इति योऽरोदीन्मार्गे तं
धृत + रामम् ॥१९३॥ अथ गोदावर्यां यस्सानुजसीतोऽवगाह्य-
जप्त्वाऽर्कम्। प्राप्यस्वा श्रममवसत्तं + रामम् ॥१९४॥ तस्मिन्हे-

मन्ततौ रावणभगिनी प्रचार्य विपुलदृशौ । अद्राक्षीद्यस्यकुटीं तं धृत + रामम् ॥१९५॥ आगत्य पर्णशालां शूर्पणखा नाम राक्षसी-क्रूरा । यमपश्यञ्जितकामं तं धृत + रामम् ॥१९६॥ आजानु-बाहु मेषा दृष्ट्वा यं कामबाणसन्तप्ता । वक्रं वाक्यमभाणीत्तं धृत + रामम् ॥१९७॥ तापसरूपेण जटी भार्यासहितः करेचचापधरः । कस्त्वमिति यं ह्यपृच्छत्तं धृत + रामम् ॥१९८॥ रक्षोध्युषितं देशं ह्यागच्छस्त्वं किमर्थमपगतभीः । इति सायमपृच्छ द्राक्तं धृत + रामम् ॥१९९॥ इति पृष्टो राक्षस्या सर्वं वृत्तं प्रवक्तुमारेभे । ऋजु-बुद्धि तयायोद्राक्तं धृत + रामम् ॥२००॥ दशरथ तनुजो ज्येष्ठो रामो-ऽहं पितृ गिरावनं प्रापम् । इति गिरमवदद्यस्तां तं धृत + रामम् ॥२०१॥ अनुजोयं भार्येयं त्वं वदकस्यासिदुर्नयातनया । इति गिरमवदद्यस्तां तं राक्षसवैरिणं भजे रामम् ॥२०२॥ आगमने कोहेतुस्तवविपिनेऽस्मत्पलाशशालान्तः । इति गिरमवदद्यस्तां तं राक्षस + रामम् ॥२०३॥ श्रुत्वेदंयस्यवच स्साऽपिगिरं प्राहमारबाणार्ता । रावणभगिनीक्रूरा तं राक्षस + रामम् ॥२०४॥ नाम्नाहंशूर्पणखा विचरामीदं वनं सदाभय दा । इति सो वाचगिरं यं तं राक्षस + रामम् ॥२०५॥ विश्रवसः पुत्रौ द्वौ रावणकुंभश्रुती महाघोरौ । इति सो वाचगिरं यं तं राक्षस + रामम् ॥२०६॥ धर्मात्मातु तृतीयो नाम्नाख्यातो विभीषणश्चाऽऽस्ते । इति सो वाचगि + रामम् ॥२०७॥ खरदूषणमुख्यास्ते प्यन्येसन्तीहमेनुजा ज्येष्ठाः । इति सो वाचगि + रामम् ॥२०८॥ तान्समतिक्रान्ताऽऽगां रामत्वा-ऽपूर्वदर्शनादधुना । इति सो वाच + रामम् ॥२०९॥ भर्तारं त्वां प्राप्तुं स्वाच्छन्द्यान्मार सुन्दरप्रागाम् । इति सो वाच + रामम् ॥२१०॥ विकृतामसतीमगुणां त्यक्त्वैनां मां भजा द्य भार्यां त्वम् । इति सो वाच + रामम् ॥२११॥ एनां भ्रात्रासह ते

तोषादहमद्य भक्षयिष्यामि। इति सो वाच + रामम् ॥२१२॥ श्रुत्वा तां गिरमभण त्कृत्वामन्दस्मितश्च्यो युक्तया। पत्न्यास्तेऽत्र ममेति च तं राक्षस + रामम् ॥२१३॥ त्वत्सम सौन्दर्याणां लोके स्त्रीणां न साधुसापत्न्यम्। इति गिरमवदद्यस्तां तं राक्षस + रामम् ॥२१४॥ अनुजं सुन्दरगात्रं दारापेक्षं भजाद्यभर्तारम्। इति गिरम + रामम् ॥२१५॥ इत्युक्तायेनासौ प्रापत्सौमित्रिमेव भर्तारम्। मन्वानासन्तोषात्तं राक्षस + रामम् ॥२१६॥ प्राप्य तदा सौमित्रिं रावणभगिनी त्वमेव भर्ता मे। इति यत्त्यक्ताऽवादीत्तं राक्षस + रामम् ॥२१७॥ मम योग्यस्त्वं भर्ता विचरिष्यावोऽद्य दण्डकान्द्वावाम्। इत्याहयदनुजं सातं राक्षस + रामम् ॥२१८॥ इत्युक्तो राक्षस्या दासस्य त्वं कथं भवेः पत्नी। इति तामाहयदनुजस्तं राक्षस + रामम् ॥२१९॥ आर्यस्य त्वं भार्या भवसीतान्तां जहातु जरठां द्राक्। इति तामाहयदनुजस्तं राक्षस + रामम् ॥२२०॥ श्रुत्वा यद्भ्रातृगिरं रावणभगिनीनिनिन्दकूटस्थम्। स्रष्टारं मदनार्ता तं राक्षस + रामम् ॥२२१॥ रूपिणमेनं सृष्ट्वा तत्पत्नीं मां कथंनुनास्राक्षीत्। विधिरिति यं दृष्ट्वो चेतं राक्षस + रामम् ॥२२२॥ आस्तां तद्रूपमिदं त्यक्तदयेस्मिन्किमर्थमसृजत्सः। विधिरिति यं दृष्ट्वो चेतं राक्षस + रामम् ॥२२३॥ इत्थं विचिन्त्यहृदये दुष्टासापार्श्वमेत्ययत्पत्न्याः। क्रूरां वाचमवादीत्तं राक्षस + रामम् ॥२२४॥ भार्यां प्राप्यासौ त्वां मूढः परिहसति मां स्वतः प्राप्ताम्। इति यत्तरुणीं सो चेतं राक्षस + रामम् ॥२२५॥ त्वां भक्षयामि साहं त्वद्भर्त्रासङ्गमेच्छयेत्युक्त्वा। यत्पुरतोऽधावद्द्राक्तं राक्षस + रामम् ॥२२६॥ कः परिहासोस्यान्तेऽनार्यायां द्राग्विरूपयैनां त्वम्। इति यो भ्रातरमभणत्तं राक्षस + रामम् ॥२२७॥ इत्युक्तो यद्भ्राता नासाकर्णं तदाच्छिनत्तस्याः। उच्चैरा क्रोशन्त्यास्तं

राक्षस + रामम् ॥२२८॥ सापि जनस्थानस्थं प्राप्य खरं द्राग्ब-भाणयद्वृत्तम्। सर्वं रावणभगिनी तं राक्षस + रामम् ॥२२९॥ केनैवं विकृता त्वं पितृपति गेहं यियासुनाऽद्यवद। इति सापृष्टाऽऽहचयन्तं राक्षस + रामम् ॥२३०॥ दशरथपुत्रो राम स्सानुजसीतोवसत्य-रण्येनः। इति तस्मै सोचेयं तं राक्षस + रामम् ॥२३१॥ तत्स्त्रियमाहर्तुन्ते लक्ष्मणहस्तादि मां दशामापम्। इति यद्वेषिणम-वदत्तं राक्षस + रामम् ॥२३२॥ तस्यास्तयोश्चरुधिरं पातुं स्पृह-यामिऽपश्यतस्तवचै। इति सायद्विषमवदत्तं राक्षस + रामम् ॥२३३॥ इति तद्वचनं श्रुत्वा शूरा न्सप्राहिणोच्चतुर्दशवै। हन्तुं सहजयुतं यं तं राक्षस + रामम् ॥२३४॥ अथ शूरा राक्षस्या सहिता ददृशुर्यमाश्रमस्थं द्राक्। योद्धुं कृतसन्नाहास्तं राक्षस + रामम्। २३५॥ तांस्तामपि योदृष्ट्वाऽब्रादीत्सौमित्रिमेव माहूय। कुरुसीता रक्षामिति तं राक्षस + रामम् ॥२३६॥ सज्यं धनुरथ-कृत्वा यो रक्षांस्य ब्रवीद्वचः क्रूरम्। हन्तावोद्यास्म्यहमिति तं राक्षस + रामम् ॥२३७॥ प्राप्तोहमद्यहन्तुं युष्मान्दुष्टान्मुनीन्द्रचोद-नया। इति तानाहगिरं यस्तं राक्षस + रामम् ॥२३८॥ प्राणैरर्त्थौ यदि व स्त्यक्त्वा युद्धं मुदानिवर्तध्वम्। इति तानाहगिरं यस्तं राक्षस + रामम् ॥२३९॥ श्रुत्वा यस्यगिरन्तेप्यूचुः क्रोधं खरस्य जनयित्वा। त्वं जीविष्यसि कथमिति तं राक्षस + रामम् ॥२४०॥ अद्याऽस्माभिर्निहतो युद्धे त्वं हास्यसिध्रुवं प्राणान्। इति शूलै-स्तेऽघ्नन्यं तं राक्षस + रामम् ॥२४१॥ अथ यत्प्रहिता बाणाः श्छित्वा शूलानि रक्षसां कायान्। भित्वापेतुर्भूमौ तं राक्षस + रामम् ॥२४२॥ यद्बाणत्यक्ता सूं स्तान्दृष्ट्वा सासमेत्य खरनिक-टम्। रक्षो वधमाह तदा तं राक्षस + रामम् ॥२४३॥ भ्रातस्त्व-त्प्रहितास्ते शूरायुद्धे निकृत्तगळकायाः। मम्रुर्येनेत्यरुदत्तं राक्षस +

रामम् ॥२४४॥ शक्तिर्यदि ते भ्रात र्जहि शत्रुं त्वं न चेदनुज्ञाम् । इति सायद्विषमवदत्तं राक्षस+रामम् ॥२४५॥ नो चेदिह वासस्ते मास्त्व पयाहिद्रुतं जनस्थानात् । इति सा + रामम् ॥२४६॥ इत्थं यद्विदूपुरतो जठरं हत्वारुरोद शूर्पणखा । क्रव्यादकाळरात्रिस्तं राक्षस + रामम् ॥२४७॥ संह्रियतां बाष्पस्तं भ्रात्रासहितं नयामि यमसदनम् । इति तामाह सयद्विदूतं राक्षस + रामम् ॥२४८॥ अथ सेनापति रूचे स चतुर्दश रक्षसां सहस्राणि । युद्धायगिरं यद्विदूतं राक्षस + रामम् ॥२४९॥ अथ दूषणमुचसाते शूरास्सर्वे प्रतस्थिरेयोद्धुम् । येनैकेनसमं द्राक्तं राक्षस + रामम् ॥२५०॥ शीघ्रं स्थापयमेरथ मित्यवदत्सारथिं खरः क्रुद्धः । येनैकेन च योद्धुं तं राक्षस + रामम् ॥२५१॥ शबळाश्वैयुक्तमथो रथमारुह्यद्रुतं ययौ योद्धुम् । येनखरस्समरभुवं तं राक्षस + रामम् *॥२५२॥ कार्मुकमुद्गरपट्टसशूलगदासीन्प्रगृह्य योद्धुमगात् । येन खरस्समरभुवं तं वैरिध्वंसकं भजे रामम् ॥२५३॥ दुश्शकुनान्यथशंस न्दुर्बलपीडाकराण्यगाद्योद्धुम् । येनखरस्समरभुवं तं वैरिध्वंस + रामम् ॥२५४॥ तस्मिंत्समये देवास्सिद्धास्साध्या यदीयशुभकांक्षाः । वासवमन्वाजग्मुस्तं वैरिध्वंस + रामम् ॥२५५॥ असुरानिवचक्रधयमपि जयतांद्राग्राक्षसानितिप्रोचुः । यच्छुभकांक्षामुनयस्तं वैरिध्वंस + रामम् ॥२५६॥ ददृशुः खरसैन्यन्ते विबुधास्सर्वे विमानमारूढाः । यज्जयमाकांक्षन्तस्तं वैरिध्वंस + रामम् ॥२५७॥ खरमारूढरथं द्राग्द्वादशदृष्ट्वा विनिर्ययुश्शूराः । संग्रामेयं जेतुं तं वैरिध्वंस + रामम् ॥२५८॥ दूषणमनुसेनान्य स्त्रिशिरोमुख्याययुश्च चत्वारः संग्रामेयं जेतुं तं राक्षसवैरिणं भजे रामम् ॥२५९॥ दृष्ट्वाऽगच्छत् सैन्यं योऽवरजं प्रति जगादसीतायाः । रक्षणमुद्दिश्य तदा तं राक्षस + रामम् ॥२६०॥ नीत्वासीतां लक्ष्मण शैलस्य

गुहां त्वमाश्रयेत्यवदत् । यदिशपथं कृत्वा यस्तं राक्षसवैरिणं भजे
रामम् ॥२६१॥ अथयस्मिञ्छरवर्षं व्यसृजन्रक्षो गणास्तदासमरे ।
खरविजयंकांक्षन्तस्तं + रामम् ॥२६२॥ योस्त्रैरक्षःप्रहितै भिन्ना-
ङ्गोपिप्रतिव्यथेनतदा । करधृतकोदण्डशरस्तं राक्षस + रामम् ॥२६३॥
यःक्रुद्धोऽमुञ्चदिषू न्दुर्विषहान्मण्डली कृतेष्वासः । रक्षस्सुलीलया-
द्राक्तं + रामम् ॥२६४॥ यत्प्रहितानातिथिगणान्दृष्ट्वा शमनस्तुतो-
षबहुलाभात् यलंभिबलब्धान्तं राक्षस + रामम् ॥२६५॥ भि-
त्वाराक्षसदेहा न्यन्मुक्तारक्तरूषिताबाणाः । गगनेऽग्नयइवरेजुस्तं रा-
क्षस + रामम् ॥२६६॥ बाहूनूरून्पादा न्ग्रीवाश्चिच्छेदरक्षसांबहुशः ।
यत्प्रहिताशरवृष्टिस्तं राक्षस + रामम् ॥२६७॥ अवशिष्टाःक्रव्या-
दाश्शरणंखरमापुरं जसोपेत्य । यच्छौर्यमसहमानास्तं राक्षस + रामम्
॥२६८॥ आश्वास्यदूषणस्ता न्यंपरिवार्याशु राक्षसैस्साकम् । अत-
नोत्तुमुलं युद्धं तं राक्षस + रामम् ॥२६९॥ अथगान्धर्वं योऽस्त्रं कोपा-
त्प्रायुङ्क्त रक्षसांहन्ता । शत्रुमनोमोहकरं तं राक्षस + रामम् ॥२७०॥
निहताः पतिताः क्षीणाच्छिन्नाभिन्नाविदारिता रिपवः । यद्गान्धर्व-
महिम्ना तं राक्षस + रामम् ॥२७१॥ यद्ध्वस्तहन्यमानं दृष्ट्वाकोपा-
त्सदूषणो बाणान् । विविधान्प्रायुङ्क्ततदा तं राक्षस + रामम्
॥२७२॥ अथयःक्रुद्धस्समरे ऽच्छिनदिष्वासंहयांश्चविशिखौघैः ।
चतुरश्चतुरोऽरेर्द्राक्तं राक्षस + रामम् ॥२७३॥ तत्सारथिशीर्षमपि
च्छित्वा विव्याधतं त्रिभिर्बाणैः । वक्षसि यस्सं क्रुद्धस्तं राक्षस +
रामम् ॥२७४॥ छिन्नधनुर्भिन्नरथो नष्टहयोभ्रष्टसारथिर्दुष्टः । यं
परिघपाणि रागात्तं राक्षस + रामम् ॥२७५॥ अथचिच्छेदसपरि-
घौ पाणीद्वावप्यलंकृतौ तस्य । द्वाभ्यां विशिखाभ्यां यस्तं + रामम्
॥२७६॥ अथतंनिहतंभूमौ पतितंदृष्ट्वा समस्तभूतानि । यं स्तुत्वा
मुदमापुस्तं राक्षस + रामम् ॥२७७॥ स्थूलाक्षादीन्यस्त्रीन्दृष्ट्वा

बाणान्विमुञ्चतो रुष्टः । अवधीदिषुभिर्निशितैस्तं राक्षस वैरिणं भजे रामम् ॥२७८॥ दूषणमन्वायात स्साहस्रान्पञ्चराक्षसान्कुपितः । यममन्दिरमनयद्यस्तं राक्षस + रामम् ॥२७९॥ दृष्ट्वा निहतं दूषण मनुगैस्सहराक्षसैः खरः कुपितः । यस्याऽधावत्पुरतस्तं राक्षस + रामम् ॥२८०॥ द्वादशकरवीराक्ष प्रमुखा नथयोरणेऽवधीत्त्वरया । खर सेनापतिमुख्यांस्तं राक्षस + रामम् ॥२८१॥ येनैकेन चतुर्दश भीमानां रक्षसां सहस्राणि । निहतान्यपतन्युधिभुवि तं राक्षस + रामम् ॥२८२॥ त्रिशिरास्सखरश्शेषो निहतानां रक्षसां समूहेषु । येनकृतस्ससमितितदा तं राक्षस + रामम् ॥२८३॥ यं प्रतिधावन्तं द्रा क्प्रेक्ष्य खरं वाहिनीपतिः प्रोचे आज्ञां मेत्वं कुर्विति तं राक्षस + राम ॥२८४॥ तस्य रणेमृत्युरहं मम वामृत्युर्भवेत्स दुष्टात्मा । इति खरमवदद्याद्रिद्तं राक्षस + रामम् ॥२८५॥ मयि-निहते युद्धात्थं याही त्वं नाथशत्रुवधहेतोः । इति खरमवदद्याद्रिदतं राक्षस + रामम् ॥२८६॥ अथ तेनानुज्ञात स्त्रिशिरास्सोऽभ्यद्रव-द्रणे क्षुद्रः । मृग इव शार्दूलं यं तं राक्षस + रामम् ॥२८७॥ त्रिशिरसमागच्छन्तं वीक्ष्यधनुर्यः करेथसंगृह्य । बाणान्प्रायुङ्क्त तदा तं राक्षस + रामम् ॥२८८॥ त्रिशिरोमुक्तैरिषुभि विद्धस्तीक्ष्णै स्त्रिभिर्ललाटेयः । गिरमूचेसंरब्धं तं राक्षस + रामम् ॥२८९॥ पुष्पैरिव तवबाणै र्विद्धोऽस्म्यह मद्यपश्यमद्बाणान् । इत्युक्त्वाऽमुञ्च-द्यस्तं राक्षस + रामम् ॥२९०॥ त्रिशिरोवक्षोभित्वा बाणैर्निज-घानवाजिनस्सूतम् । ध्वजमपि तस्य तदा य स्तं राक्षस + रामम् ॥२९१॥ त्यक्त्वा हतसूतं रथ मभिमुखमायान्तमञ्जसावीक्ष्य । अभिनत्तं बाणैर्यस्तं राक्षस + रामम् ॥२९२॥ बाणैस्त्रिभि रथ-कोपा द्योऽपातयदस्यगात्रतस्त्रीणि । शीर्षाण्यपि भूपृष्ठेतं राक्षस + रामम् ॥२९३॥ हत शेषान्क्रव्या दा न्द्रवतो दृष्ट्वा खरः क्रुधा-

ऽगत्य । अभिदुद्रावमृधे यं तं राक्षस वैरिणं भजे रामम् ॥२९४॥ स धनुर्विकृष्यबल वा न्नाराचैः पूरितादिशश्चक्रे । येन सहयुद्धसमये तं राक्षस + रामम् ।२९५॥ अथ नाळीकप्रमुखै र्नाराचैर्यबिभेद्र-निशिताग्रैः । समितिखरोरथसंस्थस्तं राक्षस + रामम् ।२९६॥ यं मेनेसतदानीं हन्तारं सर्वरक्षसां मूर्खः । स्वशरप्रहृतं श्रान्तं तं राक्षस + रामम् ।२९७। मध्ये चापं भङ्क्त्वा प्रहसन्मूर्खः खरोन्यबाणैर्द्राक् । यस्योरच्छदमभिदत्तं राक्षस + रामम् ॥२९८॥ इत्थं यः खरबाणै र्विद्धः क्रुद्धो महर्षिणादत्तम् । जगृहे वैष्णवचापं तं राक्षस + रामम् ॥२९९॥ छिन्नं ध्वजमथ दृष्ट्वा यत्करमुक्तेन तीक्ष्णविशिखेन । मुमुचे सशरांश्चतुरस्तं राक्षस + रामम् ॥३००॥ तद्विद्धः क्रुद्धोय श्चापे सन्धाय षट्च्छरान्निशितान् । मुमुचे खरवध-हेतोस्तं राक्षस + रामम ॥३०१॥ एकेन तस्य शीर्षं द्वाभ्यां बाहू च यस्त्रिभिर्वक्षः । भेत्तुं यत्नमाक्रार्षीत्तं राक्षस + रामम् ॥३०२॥ *क्रुद्धस्समाददेयो निशितान्बाणांस्त्रयो दशाऽथ पुनः । खरवध हेतोर्युद्धे तं वैरिकुलान्तकं भजे रामम् ॥३०३॥ युगमेकेन चतुर्भि श्चतुरोऽश्वानस्य सारथेश्शीर्षम् । एकेनयोवधीद्युधितं वैरि + रामम् ॥३०४॥ त्रिभिरथच यस्त्रिवेणुं द्वाभ्यामक्षं धनुस्तथैकेन । एकेनाऽभित्तखरं वैरि + रामम् ॥३०५॥ हत रथसाराथि चापो निहताश्वोऽसौ गदाकरोभूमौ । तस्थौ यत्पुरतो द्राक्तं वैरि + रामम् ॥३०६॥ भूस्थंखरमथखिन्नं दृष्ट्वादेवामहर्षयोपि तदा । यं प्रशशंशुस्तुष्टास्तं वैरि + रामम् ॥३०७॥ विरथंखरमथदृष्ट्वा परुषं मृदुपूर्वमब्रवीद्वचनम् । हस्ते विधृतगदं यस्तं वैरि + रामम् ॥३०८॥ लोकविरुद्धंकर्म त्वांकुर्वाणं कथंसहेऽहमिति । ऋषिभक्षकमवदद्यस्तं वैरि + रामम् ॥३०९॥ जन्तुरवश्यंलभते पापस्यफलं सुदुस्सहंसमये । इति यःखरमाहगिरं तं वैरि + रामम् ॥३१०॥ अहमद्यत्वांहत्वा

मद्धतसैन्यैस्सहैवयोक्ष्यामि । इति य खरमाहगिरं तं वैरिकुलान्तकं भजे रामम् ॥३११॥ मद्बाणैस्त्यक्तासुं निरयस्थंत्वां महर्षयोदेवाः । पश्यन्त्विवति योऽभाणीत्तं वैरि + रामम् ॥३१२॥ इत्युक्तस्संक्रुद्धः प्रहसन्वाक्यं जगादयंमूर्खः । अलमात्मस्त्युत्येति च तं वैरि + रामम् ॥३१३॥ प्राप्तेऽथमृत्युकाले लघुताद्दष्टा विकत्थनेनतव । इत्यभणद्यं रूष्टस्तं वैरि + रामम् ३१४॥ वक्तव्यंतवविषये बह्वस्ति तथापिनाद्मवक्ष्याम् । इत्यभणद्यं रुष्टस्तं वैरि + रामम् ॥३१५॥ एत्यद्यास्तंसूर्यो विघ्नो जायेतचावयो र्योध्द्रोः इत्यभणद्यं + रामम् ॥३१६॥ त्वां हत्वाबन्धूनां कुर्वेबाष्पप्रमार्जनं तेषाम् । इत्यभणद्यं + रामम् ॥३१७॥ इत्युक्त्वा महतीं ता मादाय गदां तदा खरः कुपितः । यस्मिन्क्षि क्षेप बलात्तं वैरि + रामम् ॥३१८॥ वृक्षा न्गुल्मान्दग्ध्वाऽयांतीं दृष्ट्वा गदान्तदाबाणैः । अच्छिनद्व्यग्रोयस्तं वैरि + रामम् ॥३१९॥ भित्वा तां स्मयमानो वाक्यं संरब्धमाह यस्तु खरम् । दर्शितबलसर्वस्वं तं वैरि + रामम् ३२० युधि रक्षसां हतानां तेषामश्रुप्रमार्जनं सम्यक् । कृतमिति योऽहसदुच्चैस्तं वैरि + रामम् ॥३२१॥ मिथ्या वृत्तस्य तव प्राणान्बाणै रहं हरिष्यामि । इति यः खरमाह गिरं तं वैरि + रामम् ॥३२२॥ मद्बाणच्छिन्न गळात्स्रस्तं रक्तं धरारसात्पिबतु । इति यः खरमाह गिरं तं वैरि + रामम् ॥३२३॥ राक्षस्यस्तवभार्या श्शोकरसज्ञा भवन्तु तवमरणे । इति यः खरमाह गिरं + रामम् ३२४॥ श्रुत्वेत्थं यस्यगिरं स खरः प्रतिवचनमाह युधिकुपितः । न त्वां मुञ्चाम्यहमिति तं वैरि + रामम् ॥३२५॥ मृत्योर्वशगो भूत्वा वाच्यावाच्यं न बुद्ध्यसेल्पमपि । इत्यवदत्सखरोयं तं वैरि + रामम् ॥३२६॥ अथ सालं बहुशाखं चिक्षेपहतस्त्वमिति च स प्रलपन् । यस्मिन्नपि हु बलात्तं वैरि + रामम् ॥३२७॥ छित्वातमगंविशि-

खैर्जात स्वेदस्तदाबहून्विशिखान् । तस्योपरियोमुमुश्चत्तं वैरि कुला-न्तकं भजे रामम् ॥३२८॥ यद्बाणैः कृत्त तनुर्दृष्ट्वा रक्तं स्वदेहजं मत्तः । अभिदुद्रावतदायं तं वैरि + रामम् ॥३२९॥ दृष्ट्वाऽयान्तं ः विधेमत्तं रुधिराप्लुतं तदा किञ्चित् । योपासर्पत्पश्चात्तं वैरि + रामम् ॥३३० ॥ अथ पावकसङ्काशं विशिखं यः खरवधाय जग्राह । हस्ते मघवद्दत्तं तं वैरि + रामम् ॥३३१॥ सन्धाय धनुषि विशिखं मुमुचेध्वंसाय पापि नस्तस्य । यो हन्ताशत्रूणां तं वैरि + रामम् ॥३३२॥ सपपातखरो भूम्यां यद्विशिखज्वालया विनिर्दग्धः । अन्धक इव रुद्र दृशा तं वैरि + रामम् ॥३३३॥ अथ मुनयो मिळितायं मुदिताश्शूरं रा भाज्यगिरमूचु । कुर्वन्त-श्शौर्यनुतिं तं + रामम् ॥३३४॥ शक्रश्शरभङ्गाश्रम मागादि ममर्थमेव सूचयितुम् । इति यं मुनयोबभणुस्तं वैरि + रामम् ॥३३५॥ आनीतोस्माभिस्त्वं देशमिमं रक्षसां वधायविभो । इति यं मुनयो बभणुस्तं वैरि + रामम् ॥३३६॥ तदिदं कार्यं सुकृतं दाशरथेऽद्यत्वयादयार्द्र हृदा । इति यं मुनयो बभणुस्तं वैरि + रामम् ॥३३७॥ अद्यप्रभृति महान्तो धर्मं सुखतस्समाचरिष्य-न्ति । इति यं मुनयोबभणुस्तं वैरि + रामम् ॥३३८॥ ऋषयो द्यदण्डकेष्वपि निर्भीकाश्च त्वया कृतास्मो हि । इति यं मुनयो बभणुस्तं वैरि + रामम् ॥३३९॥ तस्मिन्काले देवा ववृषुः पुष्पा-णि चारणैस्सहिताः । यच्छीर्षे सं हृष्टास्तं वैरि + रामम् ॥३४०॥ खरदूषण मुख्यास्ते ये नार्धाधिक मुहूर्तकालेन । निहता इत्यनुपंस्ते तं वैरि + रामम् ॥३४१॥ वीर्यमहोदाक्ष्यमहो विष्णोरिवयस्य दृश्यते लोकैः । इत्यमरास्तुष्टाऽगुस्तं वैरि + रामम् ॥३४२॥ अथ यत्पत्नीसहितो गिरिदुर्गादाश्रमं विवेशतदा । सन्तुष्टस्सौमित्रि स्तं वैरि + रामम् ॥३४३॥ अथ यः प्रपूज्यमानो मुनिभिर्भ्रात्रा

च सं विवेशजनी। स्वाश्रममुचितं सुखदं तं वैरि कुलान्तकं भजे रामम्
॥३४४॥ यं दृष्ट्वा शत्रुघ्नं सुखदमृषीणां विदेह जातुष्टा। पर्यष्व-
जतपतिं द्राक्तं वैरि + रामम् ॥३४५॥ दृष्ट्वा निहतां च्छत्रू नव्यथ-
मपियं तुतोष सासीता। आलिङ्ग्यपुनर्गाढं तं वैरि + रामम्
॥ ३४६ ॥ अथ गत्वा त्वरमाणो लङ्कां दशमुखमकंपनो
वादीत्। येन कृतं खर नाशं तं वैर + रामम् ॥३४७॥
असम्यहसेकशिष्ट स्त्रिशिरा खरदूषणौ च युधिनिहताः। येनत्या
ह सराजं तं वैरि + रामम् ॥३४८॥ इत्युक्तोदशकण्ठः क्रुद्धोऽ
वादीदकंपनंवचनम्। यस्यबलं शुश्रूषुस्तं वैरि + रामम् ॥३४९॥
केनजनस्थानम् मेनाशितमधुनावदत्वमिति कुपितः। यद्विडपृच्छद्र-
क्षस्तं वैरि + रामम् ॥३५०॥ अभयदमथराजानं यद्विषमूचे खरा-
दि निधनस्य। हेतुं दाशरथिंस च तं वैरि + रामम् ॥३५१॥ य-
द्गान्धर्वमहिम्नाऽन्योन्यंस्वेस्वांश्चजघ्नुरज्ञानात्। इत्याहसदशवदनं तं
वैरि + रामम् ॥३५२॥ युधिजेतुंसनशक्यो युक्तिंशृण्वद्यतस्यवध-
* विषये। इति यद्विषमाहसगां तं खरविध्वंसिनं भजे रामम्
॥३५३॥ भार्यां तस्यापहर प्राणसमान्तां त्वदीय कपटेन। इति
यद्विष माहसगान्तं खर + रामम् ॥३५४॥ कामीतयावियुक्तः प्राणां-
स्त्यक्ष्यत्यसह्यदुःखात्सः। इति यद्विषमाह + रामम् ॥३५५॥ इत्थ-
मकम्पनवचनं श्रुत्वामारीचदर्शनार्थमगात्। यद्विड्दशवदनोद्राक्तं
खर + रामम्। ३५६॥ तत्कृतकुशलप्रश्नो भोज्यैर्विविधैः प्रपूजि-
तोयद्विट् स्वमनीषितमाहतदा तं खर + रामम् ॥३५७॥ येन-
जनस्थानंमे सर्वं युद्धेनिपातितास्थानम्। आसीदित्याहसगां तं खर+
रामम् ॥३५८॥ यत्पत्न्यपहरणार्थं कुरुसाहाय्यं त्वमद्यमारीच। इति
तं प्राह दशास्यस्तं खर + रामम् ॥३५९॥ श्रुत्वेमांसगिरंद्रा क्केना-
ख्यातायदीयभार्याते। इति स दशास्यमपृच्छत्तं खर + रामम् ३६०॥

यद्भार्यकेनोक्ता मित्रपदं प्राप्य शत्रुणायुक्तया इति सदशास्यमपृच्छत्तं खर विध्वंसिनं भजे रामम् ॥३६१॥ यद्रमणीकेनोक्ता कुशलं दृष्ट्वाऽसहिष्णुना च तत्र । इति सदशास्यमपृच्छत्तं खर + रामम् ॥३६२॥ त्यक्त्वे च्छां परपत्न्यां गत्वा लंकां रमस्वदारेषु । इत्याह सदशवदनं तं खर + रामम् ॥३६३॥ इति मारीचोक्तगिरं श्रुत्वा त्यक्त्वा यदीय पत्न्याशाम् । स्वपुरमगाल्लंकेशस्तं खर + रामम् ॥३६४॥ अथ शूर्पणखा लंकां वक्तुं यद्वृत्तमापलंकेशे । धर्मोच्छेत्तरिपापे तं खर + रामम् ॥३६५॥ विंशति भुजमुपविष्टं काञ्चन पीठे विलोक्यदशवदनम् । यद्वृत्तं साऽवादीत्तं + रामम् ॥३६६॥ दीनास्या शूर्पणखा क्रुद्धाज्येष्ठं जगादसचिवयुतम् । यदवरजकृत्तनासा तं खर + रामम् ॥३६७॥ यस्माद्भयमुत्पन्नं बोद्धव्यं नावबुद्ध्यसे मौढ्यात् । इति सा भ्रातरमभणत्तं खर + रामम् ॥३६८॥ येनैकेन चतुर्दश साहस्रं रक्षसां मृधेनिहतम् । ज्ञातं वेत्यवदत्सा तं खर + रामम् ॥३६९॥ अभयं दत्तमृषिभ्यो ये नाद्यापि त्वया न विज्ञातम् । इत्याहासृक्पं सा तं खर + रामम् ॥३७०॥ काष्ठैर्लोष्टैः कार्यं भवतिजनानां न राजभिर्मत्तैः । इति यदिषमूचे सा तं खर + रामम् ॥३७१॥ राजा त्वं यदि मूढो यदवर जोत्कृत्तकर्ण नासाहम् । यामिकेत्यरुदत्सा तं खर + रामम् ॥३७२॥ अथ शूर्पणखां क्रुद्धां मध्ये सचिवंसरावणोऽपृच्छत् । यद्वेषं कर्तुमनास्तं खर + रामम् ॥३७३॥ को रामः किं वीर्यः किं रूपो वदममेत्युवाचसताम् । यद्वेषं कर्तुमनास्तं खर + रामम् ॥३७४॥ इति सोक्ता यस्य बलं शौर्यं रूपं जगादखर हन्तुः । भ्रात्रे क्रुद्धाय तदा तं खर + रामम् ॥३७५॥ बाणान्युधिवर्षन्तं शत्रुषु यं कार्मुकं विकर्षन्तम् । नो वेद्मीत्यवदत्तं तं खर + रामम् ॥३७६॥ परिभूयाहं मुक्ता स्त्रीवधशङ्कां प्रकुर्वतायेन । इति सा रावणमूचे तं

खर + राम० ॥३७७॥ यत्तुल्य शीलविक्रम बुद्धिर्बलवांश्च लक्ष्मणाऽवरजः । इति सा रावणमूचे तं खर विध्वंसिनं भजे रामम् ॥३७८॥ तद्रमणीक्षीराब्धेः पुत्र्याश्शङ्कां तनोतिलोकानाम् । इति सायद्विषमूचे + रामम् ॥३७९॥ तद्रमणीसमरमणी लोकेकैश्चिन्न-दृष्टपूर्वाऽऽस्ते । इति सायद्विष + रामम् ॥३८०॥ तद्भार्यातव-भार्या स्याद्यदिते जन्मनस्तुसाफल्यम् । इति सा + रामम् ॥३८१॥ मृदुळकचाकठिनकुचा तत्पत्नीसातवानुरूपगुणा । इति सा + रामम् ॥३८२॥ उद्युक्तानेतुमहं भार्यात्वेतेयदीयरमणीन्ताम । इति सा रावण + रामम् ॥३८३॥ अथ यद्भ्रात्रा कोपा च्छिन्नानासाश्रुती च ममपश्य । इति सा रावण + रामम् ॥३८४॥ तस्या वचनं श्रुत्वा स्मृत्वा निधनं खरस्य यज्जनितम् । तोषं रोषं स दधौ तं खर + रामम् ॥३८५॥ बुध्वा मनसाकार्यं यद्विट्साचिवान्वहुं स्त-दाऽऽमन्त्र्य । रथमारुह्य प्रययौ तं खर + रामम् ॥३८६॥ उद-धेस्तीरेमार्गे पश्यन्मुक्ताफलानि शुष्काणि । यद्विट्प्रययौ वेगात्तं खर + रामम् ॥३८७॥ नगराण्युद्यानानि च विविधानि नदीस्समुद्र-गाः पश्यन् । यद्विट्प्रययौ वेगात्तं खर + रामम् ॥३८८॥ मार्ग-स्थं न्यग्रोधं पश्यन्वैखानसादि निलयं सः । यद्विट्प्रययौ वेगात्तं खर + रामम ॥३८९॥ तच्छाखायां गरुडं धृत कच्छपनाग कायमथशृण्वन् । यद्विट्प्रययौ वेगात्तं खर + रामम् ॥३९०॥ शाखाभञ्जनभीत्या गरुडं धृत शाखमप्यसौशृण्वन् । यद्विट्प्रययौ वेगात्तं खर + रामम् ॥३९१॥ मुनिरक्षणमथकृत्वा वेगादमृतार्थ-मेव तं यान्तम् । शृण्वन्प्रययौ यद्विट्तं खर + रामम् ॥३९२॥ अथ परपारङ्गत्वा नियताहारं ददर्श मारीचम् । साहाय्यार्थं यद्वि-ट्तं खर + रामम् ॥३९३॥ कच्चित्कुशलं राज न्पुनरागमने वदा-द्य मम हेतुम । इति यद्विषमूच स च तं खर + रामम् ॥३९४॥

इतिगृष्टोयद्वेषी खरदूषणमुख्यरक्षसां निधनम् । हेतुमवादीन्मौढ्यात्तं खरविध्वंसिनं भज रामम् ॥३९५॥ भगिनीनासाकर्ण च्छेदनमपि लक्ष्मणेन कृतमूचे । यद्वेषेबद्धमतिस्तं खर + रामम् ॥ ३९६ ॥ ऋषिवासस्थानमभू दद्यजनस्थानमित्यभाणीत्तम् । यद्वेषेबद्धमतिस्तं खर + रामम् ॥३९७॥ यत्पत्न्यपहरणात्र्थं कुरुसाचिव्यंत्वमद्यमारीच । इति तं प्राहदशास्यस्तं खर + रामम् ॥३९८॥ वीर्ये दर्पे युद्धे मायायां वानतेऽस्ति भुविसदृशः । इति तं प्रोचे यद्विट्तं खर + रामम् ॥३९९॥ काञ्चनमृगरूपधर श्चरवैदेहीसमक्षमधुनात्वम् । इति तमयाचतयद्विट्तं खर + रामम् ॥४००॥ दृष्ट्वात्वांमृगरूपं ग्रहणार्थं स्यात्प्रयत्न वान्रामः । इति तं प्राह च यद्विट्तं खरं + रामम् ॥४०१॥ त्वदनुगतौ बद्धमते स्तस्यास्त्रियमाहरामि तव साह्यात् । इति तमभाणीद्यद्विट्तं खर + रामम् ॥४०२॥ रामं स्त्रीविरह कृशं हत्वामोदं वहामि तवसाह्यात् । इति तमयाचत यद्वि-*ट्तं राक्षस मृत्यु माश्रये रामम् ॥४०३॥ इत्थं दशवदनोक्तां मारीचोयत्कथां तदाश्रुत्वा । शुष्कमुखोऽभूत्सद्यस्तं राक्षस + रामम् ॥४०४॥ कृष्णोष्ठोऽचलनेत्रो निस्संज्ञोऽभूत्तदा स मारीचः । यस्य कथाश्रुति समये तं राक्षस + रामम् ॥४०५॥ विहिताञ्जलि राह वच स्तस्मै हितमात्मनश्च मारीचः । यं स्मृत्वाहृदि भीतस्तं राक्षस + रामम् ॥४०६॥ सुलभाः पुरुषाराज न्प्रिय वक्तारो न पथ्यवक्तारः । इति यद्विषमाह सगां तं राक्षस + रामम् ॥४०७॥ क्रुद्धोयादि रामस्स्या ल्लोकं कुर्याद राक्षसं राजन् । इति यद्विषमाह सगां तं राक्षस + रामम् ॥४०८॥ अपि सीताहेतोर्नो व्यसनं मास्त्वद्य राक्षसाधिपते । इति यद्विष + रामम् ॥४०९॥ लङ्का राक्षसपूर्णा त्वां नाथं प्राप्यमाविनाशमियात् । इति यद्विष + रामम् ॥४१०॥ न च पित्रात्यक्तोऽयं न च दुश्शीलो न धर्मगुणहीनः । इति यद्विष

+ रामम् ॥४११॥ धर्मोऽयं विग्रहवां स्तत्पत्न्याशाग्यमास्तु दश-
वदन । इति यद्विषमाह सगां तं राक्षसमृत्यु माश्रये रामम् । ४१२॥
पूर्वं कौशिकमुनिना ऽऽनीतस्स्वमखस्य रक्षणार्थमयम्। इति यद्विष +
रामम् ।४१३॥ बालेनानेन तदा क्षिप्तं बाणं स्मराम्यहं राजन् ।
इति यद्विष + रामम् ॥४१४॥ हन्तुमनिच्छन्मामय मब्धौ शत-
योजनेऽक्षिपत्कृपया । इति यद्विष + रामम् । ४१५ संज्ञां प्राप्य
तदानीं लङ्कामापं पुनस्त्वहं राजन् । इति यद्विष + रामम् ॥४१६॥
कैकेयी प्रीत्यर्थं राज्यं त्यक्त्वाऽयमागतोरण्यम् । इति यद्विष +
रामम् ॥४१७॥ मा राक्षसनाशं कुरु भज कुशलेच्छां त्यजाद्यसी-
तेच्छाम् । इति यद्विषमाह + रामम् ।'४१८॥ अद्याऽहं रक्षोभ्यां
द्वाभ्यामचरं गृहीतमृगरूपः । इति यद्विष + रामम् ॥४१९॥
दिष्टेन त्यक्तोहं स प्राणस्तौ निशाचरौ निहतौ । इति यद्विषमाह
सगां + रामम् ॥४२०॥ तस्मात्प्रव्रजितोहं प्रतिवृक्षन्तं भियाऽद्य
पश्यामि । इति यद्विष + रामम् ॥४२१॥ स्वप्ने तं राममहं दृष्ट्वा
रात्रौ वहामिनो निद्राम् । इति यद्विष + रामम् ॥४२२॥ रथ
रत्न रागनामान्यपि मे प्राणान्व्यपोहितुं चालम् । इति यद्विष
+ रामम् ॥४२३॥ युधि शूर्पणखा हेतोः खरमुख्यान्राक्षसानयं
त्ववधीत् । इति यद्विष + रामम् ॥४२४॥ हितवचनं श्रुत्वेदं
मारीचोक्तं तदैव यद्वेषी । परुषां वाचमवोचत्तं राक्षस + रामम्
॥४२५॥ राजाहं भृत्यस्त्वं विपरीतं त्वं प्रभाषसेवचनम् । इति
तमवादीद्यद्विद्तं राक्षस + रामम् ॥४२६॥ कुशलं कांक्षसि चेत्त्वं
स्वीकुरुमद्वचन मद्यमारीच । इति तमवादीद्यद्विद्तं + रामम् ॥४२७॥
गुणदोषौ त्वां प्रष्टुं नागममहमद्यतत्प्रियापहृतौ । इति तमवादीद्य-
द्विद्तं + रामम् ॥४२८॥ काञ्चनमृगरूपस्त्वं मैथिल्यादृष्टि गोच-
रोभवतात् । इति तमवादीद्यद्विद्तं + रामम् ॥४२९॥ त्वां दृष्ट्वा

मृगरूपं साऽनयनाथेति चक्ष्यति क्षिप्रम् । इति तमवादीद्यद्विट्तं राक्षसमृत्यु माश्रये रामम् ॥४३०॥ सीता तुष्ट्यै राम स्त्वा मनु-सृत्य प्रयास्यति क्षिप्रम् । इति तम + रामम् ॥४३१॥ गत्वा दूरमुदाहर हा सीते लक्ष्मणेति वचनं त्वम् । इति तम + रामम् ॥४३२॥ रामध्वनि स दशन्त च्छ्रुत्वा सीता भविष्यति त्रस्ता । इति तम + रामम् ॥४३३॥ अथ सीता सौमित्रिं रामं द्रष्टुं प्रचो-दयिष्यतितम्। इति तमवादीद्यद्विट्तं + रामम् ॥४३४॥ इत्थं दशरथपुत्रौ त्वद्ग्रहणे च्छ्रनयस्व वञ्चनया । इति तमवादीद्यद्विट्तं + रामम् ॥४३५॥ तद्राहितां पर्णकुटीं गत्वाऽपहरामि मैथिलीं तुष्टः । इति तमवादीद्यद्विट्तं + रामम् ॥४३६॥ अर्धं राज्यस्याहं तोषा-त्प्रददामि तुभ्यमुपकर्त्रे । इति तमवादीद्यद्विट्तं + रामम् ॥४३७॥ सरथोहमिदानीं त्वा मनुयामि मुदाच दण्डकारण्यम् । इति तमवा + रामम् ॥४३८॥ ताभ्यां युद्धमकृत्वा सीतासहितस्त्वया वि-शामिपुरीम् । इति तमवा + रामम् ॥४३९॥ मम न श्रोष्यसि वचनं यदिमृत्युस्ते ध्रुवोद्यमारीच । इति तमवा + रामम् ॥४४०॥ इत्याज्ञप्तः परुषं वचनमभाणीत्तदा स मारीचः । यद्विषिणमतिमूढं तं राक्षस + रामम् ॥४४१॥ उपदिष्टा केनेयं बुद्धिस्ते राज्यनाशिनी वद भो । इति यद्विषमाह सगा तं राक्षस + रामम् ॥४४२॥ के नासहिष्णुनाते मृत्युद्वारं त्वपावृतं कपटात् । इति यद्विषमाह + रामम् ॥४४३॥ मां रामो विनिहत्यत्वामपि बाणैर्हनिष्यति क्रुद्धः । इति यद्विषमाह + रामम् ॥४४४॥ आयुर्विनाशकाले पथ्यं वचनं न रोचते पुंसां । इति यद्विषमाह + रामम् ॥४४५॥ इत्युक्त्वा मारीचो गच्छावेत्येति यद्विषासाक्रम्। प्रययौ भीतो मौनी तं राक्षस + रामम् ॥४४६॥ अथ तद्वचनं श्रुत्वास्यन्दनमारुह्यतां त्वयेदानीम् । इति तमवादीद्यद्विट्तं राक्षस + रामम् ॥४४७॥ सीतां प्रलोभ्य

कामं गच्छयथेच्छं हरामि तां कपटात् । इति तमवादीद्यद्विट्तं राक्षस मृत्युमाश्रये रामम् ॥४४८॥ अथ रावण मारीचा वारुह्य रथं यदाश्रमं ययतुः । तीर्त्वा गिरिनभरनदीस्तं राक्षस + रामम् ॥४४९॥ अवरुह्याथरथाद्राङ्मारीचः काञ्चनैण रूपधरः । यस्या श्रममध्य-चरत्तं राक्षस + रामम् ॥४५०॥ इन्द्रायुध समपुच्छो वैडूर्यखुरश्च *चारमृगरूपः । यस्याश्रम सविधे स च तं कनकैणान्तकं भजे रामम् ॥४५१॥ किसलय दूर्वादिततीः खादन्निवसंश्चचारकपट-मृगः । यस्याश्रमसविधेस च तं कन + रामम् ॥४५२॥ विवि-धालीलास्तन्व न्वैदेह्या दर्शनोत्सुको व्यचरत् । यस्याश्रम सविधेस च तं कन + रामम् ॥४५३॥ कुसुमापचयार्थं सा यत्पत्नी बहि-रुपेत्य तं दृष्ट्वा । ग्रहणेच्छामभजद्द्राक्तं कन + रामम् ॥४५४॥ यः पत्न्याहूतो द्रा ग्लक्ष्मणसहितस्तदा बहिस्स्थित्वा । कनकमृगं तमपश्यत्तं कन + रामम् ॥४५५॥ आर्यैमंजानेऽहं मारीचं निहत-मैनिभूपचयम् । इत्यनुजो यमवादीत्तं कन + रामम् ॥४५६॥ एवं विधोहि लोके नास्तिमृगः किन्तु रक्षसां माया । इत्यनुजोय + रामम् ॥४५७॥ अश्रुत्वा तद्वाक्यं मृगरूपमिदं तनोति कुतुकं मे । इत्यवदद्यं सीता तं कन + रामम् ॥४५८॥ जीवन्नेपमृगस्तव नो लभ्यश्चेत्त्वचं प्रदेहि विभो । इत्यवदद्यं सीता तं कन + रामम् ॥४५९॥ श्रुत्वा सीता गिरमथ लक्ष्मणमूचे ममापि तोषकरः । भवति मृगोऽसाविति य स्तं + रामम् ॥४६०॥ तावत्त्वमप्रमत्तो भवयावदहं मृगं समानेष्ये । इति लक्ष्मणमवदद्यस्तं कन + रामम् ॥४६१॥ सत्यमृगो नायं चेद्धत्वैनं कृत्ति माहरिष्यामि । इति लक्ष्मण + रामम् ॥४६२॥ धावन्तमवेक्ष्यमृगं चापकरोयो ददर्श बहुदूरे । बहुमृगमध्यगतं द्राक्तं कन + रामम् ॥४६३॥ कुपित-स्सुदृढे चापे सन्धायविकृष्य निर्मितं धात्रा । योऽस्त्रममुञ्चद्घोरं तं

कन + रामम् ॥४६४॥ यत्करमुक्तं ज्वलितं ब्रह्मास्त्रं मृगशरीरमपि बिभिदे । रक्षोहृदयं भित्वा तं कनकैणान्तकं भजे रामम् ॥४६५॥ म्रियमाणो मारीचो निपतदथो ताळमात्रमुत्प्लुत्य । यत्प्रहितास्त्र हतोभुवि तं कन + रामम् ॥४६६॥ स्मृत्वा रावणगिरमथ हा सीते लक्ष्मणे त्यसून्सजहौ । यत्प्रहितास्त्राभि हतस्तं कन + रामम् ॥४६७॥ दृष्ट्वा पतितं रक्ष स्स्व रसाम्यं स्वस्ययो विचिन्त्य यदा । मनसाप्रापत्सीतां तं कन + रामम् ॥४६८॥ सीता किमब्रवीद्वा तद्वचसा लक्ष्मणोपि किं वृत्तः । इति यश्चिन्तामतनोत्तं कन + ॥४६९॥ हत्वा मायाहरिणं हरिणं चान्यन्निहत्य मांसात्र्थम् । आदायप्रययौ य स्तं + रामम् ॥४७०॥ आर्तस्वरमथ भर्त्रा कृतमिति मत्वा जगादसौमित्रिम् । यत्पत्न्यात्त व्यसना तं कन + रामम् ॥४७१॥ नहिमेहृदयं स्थाने तिष्ठति गच्छाऽद्य पश्यमे रमणम् । इति तं यत्पत्न्यवदत्तं कन + रामम् ॥४७२॥ देवरसौमित्रेत्वं रक्षोवशगं ममाप्रियं रक्ष । इति तं यत्पत्न्यवदत्तं कन + रामम् ॥४७३॥ स्वोक्तं श्रुत्वाऽपि वच स्तमजिगमिषुमेत्यनिष्ठुरं वचनम् । यत्पत्न्यवदत्क्रुद्धा तं कन + रामम् ॥४७४॥ अस्यां त्वमवस्थायां शत्रुरिवत्वं न पश्यासिज्येष्ठम् । इति तं यत्पत्न्यवदत्तं कन + रामम् ॥४७५॥ रामस्य विनाशं त्वं मयिलोभादिच्छसीत्यहं मन्ये । इति तं यत्पत्न्यवदत्तं + रामम् ॥४७६॥ श्रुत्वा सीता वचनं मास्त्वार्येपापबुद्धिरेषाते । इति यद्भ्रातो चेगां तं कन + रामम् ॥४७७॥ अनिवार्य बलो रामो देवासुरयक्षपन्नगैश्चार्ये । इति यद्भ्रातो चेगां तं + रामम् ॥४७८॥ नैकां त्वां त्यक्त्वाहं गच्छेयं रामशासनात्सीते । इति यद्भ्रातो चेगां तं कन + रामम् ॥४७९॥ इति तद्ववचनं श्रुत्वा ऽहमसूं स्त्यक्ष्यामि पश्यत ऽवभो । इति तं यस्त्र्यूचेगां तं कन + रामम् ॥४८०॥ एकोऽनुगच्छसि त्वं

भरतप्रहितोऽपि वामदत्र्थमिति । यत्पत्न्यू चेतं गां तं कनकैणान्तकं भजे रामम् ॥४८१॥ भवती ममपूज्यासि त्वां प्रतिवक्तुं न चोत्सहेंचाहम् । इति तां यद्भ्रातो चेतं कन + रामम् ॥४८२॥ स्त्रीणामेवं लोके धात्राविहितस्स्वभाव इति मन्ये । इति तां यद्भ्रातो चेतं कन + रामम् ॥४८३॥ न सहेहं वाक्यमिदं सर्वे शृण्वंतु साक्षिणोदेवाः । इति तां यद्भ्रातो + रामम् ॥४८४॥ धिक्त्वाम्मत्त्यक्तामिह रक्षन्त्वेकाकिनीं सुरास्सर्वे । इति यद्भ्रातो चेगां तं कन + रामम् ॥४८५॥ सह रामेणाहं त्वां पश्येयं वानवेतिनो जाने । इति यद्भ्रातो चेगां तं कन + रामम् ॥४८६॥ घोराणि निमित्तानिच जायन्ते त्वामतो न पश्येयम् । इति तां यत्भ्रातो चे तं कन + रामम् ॥४८७॥ इत्युक्ताक्रन्दन्ती वैदेही बाष्पपूर्ण नयनासा । यद्भ्रातरमाह गिरं तं कन + रामम् ॥४८८॥ आबध्नीयां कण्ठे पास्यामि विषं नदीं प्रवेक्ष्यामि । इति तं यद्दयितो चेतं कन + रामम् ।४८९॥ रामादन्यं पुरुषं मनसावाचास्पृशामि न पदापि । इति तं यद्दयितो चेतं कन + रामम् ॥४९०॥ इति यद्भ्रातर मुक्त्वा क्रोधादुदरं प्रताडयाञ्चक्रे । तत्पुरतो यत्पत्नी तं कन + रामम् ॥४९१॥ श्रुत्वेत्थं परुषवचः प्रययौ सीतां प्रणम्य संक्रुद्धः । यं द्रष्टुं सौमित्रिस्तं कन + रामम् ॥४९२॥ अथ दशवदनश्शीघ्रं यत्पत्नी ग्रहण लोलुपः प्रययौ । रामाश्रममपनीतिस्तं कन + रामम् ॥४९३॥ यष्टिकमण्डलु धारी छत्री काषाय वर्णवस्त्रोगात् । यत्पत्न्य पहरणे च्छुस्तं कन + रामम् ॥४९४॥ राघव लक्ष्मणरहितां पर्णकुटीं प्राप्य जानकीं दृष्ट्वा । यद्विडिवेष च हर्तुं तं कन + रामम् ॥४९५॥ काञ्चनवर्णा भेत्वं कासि वने ते वदास्ति किं कार्यम् । इति यद्विडपृच्छतां तं कन + रामम् ।।४९६॥ ह्रीः कीर्तिर्भूतिर्वा लक्ष्मीर्वात्वं वदाद्यशशिवदने ।

इति यद्विडपृच्छत्ताँ तं कनकैनान्तकं भजे रामम् ॥४९७॥ पीनोन्नत वदनौ ते वक्षोजौ ताळपक्वफल सदृशौ। इति तामूचे यद्विट्तं कन + रामम् ॥४९८॥ रूपं तव तारुण्यं कानन वसतेर्नयोग्य मिन्दुमुखी। इति तामूचे यद्विट्तं कन + रामम् ॥४९९॥ उपवन सौधाग्रादि * त्वद्वासान्नोऽद्य पुण्यवद्भवतात् । इति तामूचे यद्विट्तं हतमारीच माश्रये रामम् ॥५००॥ कथमेकात्वमरण्ये न बिभेषि वदाद्य दुष्ट-मृगसहिते । इति तामूचे यद्विट्तं हत + रामम् ॥५०१॥ इत्थं तं पृच्छन्तं यत्पत्नी साद्विजातिरिति मत्वा । सत्कारं व्यतनोद्धात्कं हत + रामम् ॥५०२॥ ब्रस्यामुपविशतु भवा न्पाद्यं प्रतिगृह्यता-मिदं भवता । इति तं यत्स्त्र्यवदद्धां तं हत + रामम् ॥५०३॥ दुहिता जनकस्याहं सीतानाम्नास्मि रामभार्यार्यं । इति तं यत्स्त्र्य-वदद्धां तं हत + रामम् ॥५०४॥ [illegible]पभोगा न्द्वादश चाहं समागृहेन्यवसम् । इति तं यत्स्त्र्यवदद्धां तं हत + रामम् ॥५०५॥ अथ भूपोऽमन्त्रयत ज्येष्ठं पुत्रं नृपं तदाकर्तुम् । इति तं यत्स्त्र्यचेगां तं हत + रामम् ॥५०६॥ कैकेय्यथ भर्तारं राज्यं भरताय देयमि-त्यूचे । इति तं + रामम् ॥५०७॥ मम भर्त्रे वनवासं साऽया-चन्मत्कृते कृतासूया । इति तं यत्स्त्र्यचेगां तं + रामम् ॥५०८॥ दाशरथिर्मम भर्ता स च वयसा पञ्चविंशको हि तदा । इति तं + रामम् ॥५०९॥ मम जन्मन्यष्टादश वर्षाणि तदा च गण्यते लोके । इति तं + रामम् ॥५१०॥ द्वै मातुरस्तदनुजो लक्ष्मण-नामाति शौर्यवान्धन्वी । इति तं + रामम् ।५११॥ इत्थं कैके-य्यर्थे राज्यं त्यक्त्वा वयं वनं प्राप्ताः । इति तं + रामम् ॥५१२॥ हत्वारुरुगोधादी नादाय मृगान्ममैष्यति च नाथः । इति तं + रामम् ॥५१३॥ त्वं गोत्रं नाम कुलं ब्रुवन्वदते वनेऽस्ति किं कार्यम् । इति तमपृच्छद्यत्स्त्री तं हत + रामम् ॥ ५१४ ॥

इत्थं सीता वचनं श्रुत्वाऽथो च त्स्वकीय दौर्मनस्यम् । यःप्रैषी दश कण्ठस्तं हत मारीचमाश्रये रामम् ॥५१५॥ सीते रक्षोनाथो रावणनामाऽस्म्यहं वरारोहे । इति यत्सियमाह स गां तं हत + रामम् ॥५१६॥ दृष्ट्वा त्वां रंभोरुत्यक्ताशोऽस्मिस्वकेषु दारेषु । इति यत्स्त्रियमाह सगां तं हत + रामम् ॥५१७॥ बह्वीरुत्तम रमणी स्त्यजतोमेद्राग्भवाग्रमहिषीत्वम् । इति यत्स्त्रिय + रामम् ॥५१८॥ अन्तःपुर नार्यो मे सीते त्वामेव परिचरिष्यन्ति । इति यत्स्त्रिय + रामम् ॥५१९॥ अथ दुष्टां तस्यगिरं श्रुत्वा कुपिता जगादयत्पत्नी । न्याय्यं प्रतिवचनं द्राक्तं हत + रामम् ॥५२०॥ नाहं शक्यास्पृष्टुं काकुत्स्थस्त्री विदेहजामूढ । इति तं यत्स्त्र्याहगिरं तं हत + रामम् ॥५२१॥ आशी विषवदनात्त्वं दंष्ट्रामुद्धर्तु मिच्छसि क्रौर्यात् । इति तं यत्स्त्र्याहगिरं तं हत + रामम् ॥५२२॥ अवसज्य शिलां कण्ठे तर्तुमुदन्वन्तमिच्छसिह्यतरिः । इति तं यत्स्त्र्याहगिरं तं हत + रामम् ॥५२३॥ अग्निं ज्वालायुक्तं वस्त्रेणाहर्तुमिच्छसि ह्यमतिः । इति तं + रामम् ॥५२४॥ इत्युक्तोनामकुलं कर्मबलं स्वं जगाद दशवदनः । यत्पत्न्याभीत्यर्थं तं हत + रामम् ॥५२५॥ मद्भीत्यावैश्रवणो दत्वाऽगात्पुष्पकं विमानं मे । इति यत्स्त्रियमाह स गां तं हत + रामम् ॥५२६॥ इन्द्राद्या अमरा अपि मदनुग्रह कांक्षिणोनुवन्तिभिया। इति यत्स्त्रिय + रामम् ॥५२७॥ अङ्गुल्यामेन सम स्त्वद्भर्ता सामिति दुर्बलोमर्त्यः। इति यत्स्त्रिय + रामम् ॥५२८॥ इति भीतिकरं वचनं श्रुत्वा तं प्राह रावणं कुपिता । यत्पत्नी विगतभया तं हत + रामम् ॥५२९॥ त्वदविनयात्क्रव्यादा लंका निलया स्त्वयाविनंक्ष्यन्ति । इति तं यत्पत्न्य शपत्तं हत + रामम् ॥५३०॥ प्राप्स्यति शमनस्तोषं त्वामातिथिं प्राप्य रामबाणहतम् । इति तं यत्पत्न्यशपत्तं हत + रामम् ॥५३१॥ श्रुत्वा यत्स्त्री गिरमथ

अभिवादनपूर्वन्ते वाच्यास्सुग्रीव रामतत्सहजाः। इत्याह स यद्दूतं तंहनुमत्पूज्यमाश्रये रामम् ॥५३९॥ प्रियपुत्रां तारां मे मातरमाश्वासयन्तु कपिवीराः। इत्याह स यद्दूतं तंहनु = रामम् ॥५४०॥ अहमत्रैव प्रायं स्वासिष्ये मरणमेवमेश्रेयः। इत्याह स यद्दूतं तंहनु = रामम् ॥५४१॥ इति गिरमुक्त्वा वृद्धा न्यद्दूताद्यान्रुदन्सतारेयः। अविशत्कुशयुतभूम्यां तंहनु = रामम् ॥५४२॥ अथ यद्दूत प्रमुखाः कपयोप्यविशन्कुशास्तृतेऽगतटे। दृष्ट्वां गदमतिदीनं तंहनु= रामम् ॥५४३॥ रामस्य च वनवसतिं सीतापहृतिं जटायुषोऽथमृतिम्। यद्भृत्याद्याः प्रोचु स्तंहनु = रामम् ॥५४४॥ अशृणोज्जटायुमरणं यद्भृत्योक्तं तदैवसंपातिः। भक्ष्याशयाऽऽगतोद्रा क्तंहनु = रामम् ॥५४५॥ कोमेऽनुजस्यमरणं घोषयतीत्थं जटायुषोऽत्रगिरौ। इति यद्भृत्यमपृच्छ त्तंहनु = रामम् ॥५४६॥ सूर्यांशु दग्धपक्षो नाहं शक्तस्समीपमागन्तुम्। इत्याह स यद्भृत्यं तंहनु = रामम् ॥५४७॥ इति संपातेर्वचनं श्रुत्वा यन्मित्रसहज जोऽवादीत्। रावणनिहतस्य कथां तंहनु = रामम् ॥५४८॥ यस्य करात्संस्कारं प्राप्यागात्तेद्युलोकमनुज इति। वालिसुतोगामभण त्तंहनु = रामम् ॥५४९॥ ※इत्युक्तस्संपातिः प्रोचेवाचं सुखप्रदां स कपिम्। यन्मित्र भ्रातृसुतं तंवदजिह्मेऽगदप्रियं रामम् ॥५५०॥ वाङ्मात्रेणकरिष्ये साह्यं यस्मै प्रदग्ध पक्षोऽहम्। इत्यंगदमवददृद्वि स्तंवद = रामम् ॥५५१॥ तरुणीं भूषाग्रन्थिं त्वपविदूष्यन्तीं स्वगात्रतोऽदर्शम्। यत्स्त्रियमिति सतमवद त्तंवद = रामम् ॥५५२॥ दक्षिणतीरे जलधेर्लंकायां वर्ततेऽद्ययत्पत्नी। इत्याह स युवराजं तंवद = रामम् ॥५५३॥ एष सुपार्श्वः पुत्रो प्याहारार्थं गतोऽद्ययत्पत्नीम्। दृष्ट्वाऽऽगमादित्याह स तंवद = रामम् ॥५५४॥ यद्बाणालक्ष्यभिदो रावणशिरसां प्रसह्यभेत्तारः। इत्याह स युवराजं तंवद = रामम् ॥५५५॥ वर्ष

सहस्राण्यष्टौ वसतोऽभूवन्ममात्रतारेय । इति यद्भृत्यमवादी त्त्वंवद जिह्मंगदप्रियं रामम् ॥५५६॥ आदित्यदर्शनार्थं गत्वामत्पक्ष रक्षितो ह्यनुजः । इत्याह स यद्भृत्यं तंवद = रामम् ॥५५७॥ स जन-स्थानेन्यपत द्रक्षितपक्षो मया तदाऽवरजः । इत्याह स यद्भृत्यं तंवद = रामम् ॥५५८॥ अत्र निशाकरमुनिना रक्षितदेहोवसामि शून्यगरुत् । इत्याह स यद्भृत्यं तंवद = रामम् ॥५५९॥ गच्छ-न्मुनि रूचे मां सीतावृत्तं वदेति युष्मभ्यम् । इत्याह स यद्भृत्यं तंवद = रामम् ॥५६०॥ इति वाचं यद्भृत्यं प्रोक्त्वाप्रययौ तदैव संपातिः । अङ्कुरितोभयपक्ष स्तंवद = रामम् ॥५६१॥ अथ यद्भृत्य विधेयाः कपयः प्राप्स्सरित्पतेस्तीरम् । फलभरशोभित वृक्षं तंवद = रामम् ॥५६२॥ दृष्ट्वाऽपारं सागर मतिभी करमात्त साध्वसांश्च कपीन् । यद्भृत्यो गिरमूचे तंवद = रामम् ॥५६३॥ को योजनशतदूरं तर्तुं जलधिं समर्थ इह कपिषु । इति यद्भृत्यो ऽपृच्छ त्तंवद = रामम् ॥५६४॥ राजानं सत्यगिरं कर्तुं शक्तो भवेत्सपूज्योमे । इति यद्भृत्योऽवादी त्तंवद = रामम् ॥५६५॥ सामर्थ्यात्कस्य वयं पुत्रान्दारान्गृहाणि पश्येम । इति यद्भृत्यो-वादी त्तंवद ॥५६६॥ इति यद्भृत्यस्य गिरं श्रुत्वाऽवादीन्नकोपि-कपिषु गिरम् । जलधिमपारं दृष्ट्वा तंवद = रामम् ॥५६७॥ स्तिमितं कपि संघं तं दृष्ट्वाऽगाधं सरित्पतिश्च तदा । यद्भृत्योप्याह कपीं स्तंवद = रामम् ॥५६८॥ स्वां स्वां शक्तिं प्लवने कथयतयूयं प्रसिद्धकुल जाताः । इत्यवदद्यद्भृत्य स्तंवद = रामम् ॥५६९॥ श्रुत्वा यद्भृत्य गिरं प्लवने दशयोजनस्य सामर्थ्यम् । जगदुर्मैन्द-गजाद्या स्तंवद = रामम् ॥५७०॥ योजनविंशति मन्ये तर्तुं शक्तिं निवेदयामासुः । यद्भृत्येगवयाद्या स्तंवद = रामम् ॥५७१॥ इत्थं कपयः क्रमश स्स्वां स्वां शक्तिं समुद्रसन्तरणे । प्रोचुर्यद्भृत्याग्रे

तंवद जिह्वेंगदप्रियं रामम् ॥५७२॥ अथ जांबवानवादी द्वाचं यद्भृत्यमंगदं विनतः। ऋक्षाणामध्यक्ष स्तंवद = रामम् ॥५७३॥ पूर्वं बलियज्ञेहं विष्णुमकरवं प्रदक्षिणं सुलभम्। इत्याह स यद्भृत्यं तंवद = रामम् ॥५७४॥ योजन नवतेस्तरणे शक्तोऽस्म्यहमद्य नीरधौ वृद्धः। इत्याह स यद्भृत्यं तंवद = रामम् ॥५७५॥ अथ यद्भृत्यो युवरा ड्वाचमनीचामवोचदति धीरः। हनुमज्जांबवदार्दी स्तंवद = रामम् ॥५७६॥ अब्धौ योजनशतमपि गत्वा विशयो-निवर्तनेऽस्तिमम। इत्याह स यद्भृत्य स्तंवद = रामम् ॥५७७॥ इत्थं यद्भृत्य गिरं श्रुत्वो चुर्ब्रह्मनन्दन प्रमुखाः। कीशर्क्षाः प्राञ्ज-लय स्तंवद = रामम् ॥५७८॥ अस्माकं स्वामीत्वं युवराट्प्रेष्यः कथं भविष्यसि भो। इत्यवद न्यद्भृत्यं तंवद = रामम् ॥५७९॥ अथ यद्भृत्योऽवादी दृक्षाधिपतिं स जांबवन्तं द्राक्। दृष्टो दारां वाचं तंवद = रामम् ॥५८०॥ नाहं यदि तरणेच्छुः कार्यं प्रायो-पवेशनं कपिभिः। इति यद्भृत्योऽवादी त्तंवद = रामम् ॥५८१॥ राज्ञो निदेशकरणं नोचेत्प्रायोपवेशनं ह्युचितम्। इति यद्भृत्यो-ऽवादी त्तंवद = रामम् ॥५८२॥ राज्ञोतिक्रम्याज्ञां गमनेऽस्माकं विधीयतेहिवधः। इति यद्भृत्योऽवादी त्तंवद = रामम् ॥५८३॥ श्रुत्वा यद्भृत्य वचः प्रोवाच वचस्स जांबवान्वृद्धः। ऋक्षकपिक्षेम-कर स्तंवद = रामम् ॥५८४॥ हनुमंस्तूष्णीं स्थातुं कालोवाऽयं तवाद्य शक्तस्य। इत्याह स यद्दूतं तंवद = रामम् ॥५८५॥ सत्वबलबुद्धि तेजो विषयेसदृशस्तवास्तिको भुवने। इत्याह स यद्दूतं तंवद = रामम् ॥५८६॥ स्वीकृतमनुज शरीरा माताते ऽद्रौमुदैकदाऽव्यचरत्। इत्याह स यद्दूतं तंवद = रामम् ॥५८७॥ तामथरेमे पवनस्तस्यां जातस्त्वमङ्गपितृसदृशः। इत्याह स यद्दूतं तंवद = रामम् ॥५८८॥ बाल्येऽभ्युदितं सूर्यं फलबुध्यात्वं जिघृ-

क्षुरभवोद्राक् । इत्याह सयद्दूतं तंवद जिह्वेंगदप्रियं रामम् ॥५८९॥ वज्रेणेन्द्रेण हतः पर्वतशिखरेऽपतस्त्वमत्यार्तः । इत्याह स यद्दूतं तंवद = रामम् ॥५९०॥ अथ पवनकोपशान्त्यै ब्रह्मातेऽदा दशस्त्र-वध्यत्वम् । इत्याह स यद्दूतं तंवद = रामम् ॥५९१॥ स्व च्छन्दतोपि मरणं प्रददाविन्द्रोमुदात्रिलोकेशः । इत्याह स यद्दूतं तंवद = रामम् ॥५९२॥ हनुमानिति नामाभू द्धऽनुभङ्गात्ते सुतस्य केसरिणः । इत्याह स यद्दूतं तंवद = रामम् ॥५९३॥ त्यक्त प्राणे च्छान्न स्त्वाहित्वं कार्यं साधनाद्राज्ञः । इत्याह स यद्दूतं तंवद = रामम् ॥५९४॥ हनुमन्नुत्तिष्ठत्वं पश्यन्तु त्वां प्लवंगमाहर्षात् । इत्याह स यद्दूतं तंवद = रामम् ॥५९५॥ इत्थं जांबवतोक्तो यद्दूतो रूपमद्भुतं प्रापत् । शतयोजनतरणे च्छु स्तंवद = रामम् ॥५९६॥ प्लवने कृतिनिर्वहणे मत्सदृशोन्यो नकश्चिदिह लोके । इति यद्दूतो-ऽगर्ज त्तंवद = रामम् ॥ ५९७ ॥ द्रक्ष्याम्यहमद्यार्यां लंकायां राघवस्य महिषीन्ताम् । इति यद्दूतोऽगर्ज त्तंवद = रामम् ॥५९८॥ अथ वारावणसहिता मानेष्याम्यत्र पौरुषाल्लँङ्काम् । इति यद्दूतो ऽगर्ज त्तंवद = रामम् ॥५९९॥ केसरिणः पुत्रोहं ज्ञातीनां तोषम-द्यकरवैद्राक् । इति यद्दूतोऽगर्ज त्तंवद = रामम् ॥६००॥ अथ जांबवताकपयो वृद्धास्तोषं प्रपेदिरे सर्वे । श्रुत्वा यद्दूतवच स्तंवद = रामम् ॥६०१॥ यद्दूतक्षेमार्थं सर्वान्देवान्प्रपेदिरे शरणम् । कपिवृद्धास्साञ्जलय स्तंवद = रामम् ॥६०२॥ अथ यद्दूतं कपयः प्रोचुर्वाचं सुखेनतीर्त्वाऽब्धिम् । कृतकृत्यो भवतादिति तंवद = रामम् ॥६०३॥ स्थास्या मोऽत्र वयं त्व त्संगमपर्यन्तमेकचरणेन । इति यद्दूतं प्रोचु स्तंवद = रामम् ॥६०४॥ मम वेगमद्यभूमि र्नो सहतेऽद्रिर्महेन्द्र एव पटुः । इति यद्दूतोक्तिरभू त्तंवद = रामम् ॥६०५॥ इत्युक्त्वा यद्दूतो गिरिमारुक्षन्महेन्द्रमतिवेगः । बहु-

विधमृगखगयुक्तं तंवद जिह्वेंगदप्रियं रामम् ॥६०६॥ श्रीरामं जित-
कामं सौन्दर्यात्पूरितेष्ट जनकामम् । वामाङ्काश्रितसीतं कुक्षिस्थलवि-
हित भूतमाकलये ॥६०७॥ पाहि कृपाजलधेत्वं भक्तं त्वद्दतेन
कञ्चनार्तिहरम् । लोकत्रयेप्यदर्श्यं सर्वं त्वद्रूपमेवमे भाति ॥६०८॥

॥ श्रीरामचन्द्रायपरब्रह्मणे नमः ॥

## ॥ मङ्गलश्लोकाः ॥

भिक्षुरूपा ञ्जनायोक्त स्व वनागमहेतवे ।
हनुमद्वाह नायास्तु सततं बहुमङ्गळम् ॥
सुग्रीवदत्त राज्याय वालिमोक्षप्रदायिने ।
भृत्य वालि तनूजाय रामायास्तु सुमङ्गळम् ॥
वैदेही मार्गणव्यग्र मानसे मारुतात्मजे ।
न्यस्त स्वहस्त भूषाय रामभद्रायमङ्गळम् ॥
महेन्द्रगिरिमारुह्य समुद्रं शतयोजनम् ।
मनसागोष्प दसमं मे ने यस्तमहं भजे ॥
योऽद्राक्षी दोषधिस्थानं पर्वतं बुद्धिशाल्ली ।
भक्ताधिव्याधिशमनं तं हनूमन्तमाश्रये ॥
त्वद्दतेनन्यगतिकं भक्तंव्याधि प्रपीडितम् ।
रक्षाञ्जनेय हनुमन्मांध्यायन्तं पदौ तव ॥
रामानन्द परिव्राड्ग्रथितं भक्त्या विदेह जारमणे ।
किष्किन्धाकाण्डमिदं स्तुतिरूपं लोकविश्रुतं भूयात् ॥

॥ किष्किन्धाकाण्डस्समाप्तः ॥

॥ हरिः ओम् ॥

## ॥ किष्किन्धाकांडस्य शुद्धाशुद्ध पत्रिका ॥

| पुटम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १३ | इमि | इति |
| ३ | ४ | भ्राता | भ्रात्रा |
| ५ | ७ | वामि | वावामि |
| ,, | १० | स्त्रस्वस्य | स्त्रस्तस्य |
| ,, | २० | वेब्मिति | वेब्मीति |
| ७ | ४ | भाणत्कि | भाणीत्क |
| ११ | १ | त्रौं | तौं |
| ,, | २१ | यद्वत्त | यद्वृत्त |
| ,, | २२ | सुर्गाव | सुग्रीव |
| १३ | ११ | र्बा | बी |
| १५ | २२ | इति गिर | इति कपिगिर |
| ,, | २३ | घस्ते | घस्तं |
| १६ | २३ | इत्थाह | इत्याह |
| ,, | २५ | इत्थाह | इत्याह |
| १७ | २१ | लज्जवां | लज्जावां |
| ,, | २३ | णस्तं | णस्त्वं |
| १८ | २५ | मन्त्र | मत्प्र |
| १९ | ५ | भाणात्ति | भाणीत्ता |
| २४ | २२ | संती | संति |
| २७ | १ | नरवाङ्नि | नवाङ्नि |
| २८ | १ | त्ववादिन | तं दादिन |
| ,, | ३ | नुज | नुजं |
| ,, | ९ | कंट | कंठं |

## ॥ आरण्यकाण्ड शुद्धाशुद्ध पत्रिका ॥

| पृष्टम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ९ | पृपता | पृषता |
| ४ | १ | धम्या | धम्यो |
| ५ | ६ | द्रष्टु | द्रष्टुं |
| ७ | २१ | रम्य | रम्यं |
| ८ | ७ | क्तुष्ट | क्तुष्टः |
| ९ | ५ | चक्षुषा | चाक्षुषा |
| ,, | १८ | यंतं | यस्तं |
| १० | २२ | शैघ्यं | शैघ्र्यं |
| ११ | २ | मानाऽस्ते | मानाऽऽस्ते |
| १३ | २० | मेनुजा | मेऽनुजा |
| १५ | ८ | मिऽपश्य | मिपश्य |
| १७ | ४ | प्रतिव्य | प्रविव्य |
| १९ | ११ | पट् | षट् |
| २० | १ | यखर | यःखर |
| ,, | १२ | दग्ध्वाऽयां | दग्ध्वाऽऽयां |
| ,, | ,, | अछिशन्न | अछिशन |
| २१ | ३ | दृष्वाऽयां | दृष्वाऽऽयां |
| ,, | ४ | यापा | योपा |
| २४ | १२ | बहुं | बहूं |
| २५ | २० | यादि | यदि |
| २७ | १ | सानय | साऽऽनय |
| २९ | ७ | यदा | तदा |

| पुटम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३० | २३ | डिवेष | डियेष |
| ३१ | ३ | मुखी | मुखि |
| ,, | १४ | यस्त्र्युचे | यत्स्त्र्यूचे |
| ,, | १७ | यस्त्रूचे | यत्स्त्र्यूचे |
| ३२ | ३ | यस्तिय | यत्स्त्रिय |
| ३४ | १५ | अघत्व | अद्यक्व |
| ३५ | ७ | कुंद्तीं | क्रंदंतीं |
| ३७ | १४ | आप्तोका | आप्तोथंका |
| ३८ | १४ | इदि | इति |
| ३९ | ६ | सीताया | सीतया |
| ,, | १८ | पशाला | पसाला |
| ४० | १ | ऋंतो | ऋांतो |
| ४१ | २५ | द्रुष्टं | दुष्टं |
| ४३ | १२ | घोर | घोरा |





॥ श्रीः ॥

॥ ओन्नमःपरमात्मने ॥

श्रीवाल्मीकिरामायणकथानुपूर्वीसहितः

# ॥ रामस्तुत्याख्यो ग्रंथः ॥



श्रीशृङ्गगिरिमठस्थव्याख्यान सिंहासनाधीश्वराणां श्रीसच्चिदानन्द-
शिवाभिनव नृसिंहभारतीस्वामिनां तच्छिष्य, श्रीचन्द्रशेखर
भारतीस्वामिनांच पदसरासिज चञ्चरीकायमाणस्वांतेन तत्कृपा
वीक्षणकण समासादित सरस्वतीप्रसाद विशदमतिना

## श्रीरामानन्दसरस्वत्याख्ययतिना

विरचितः

तत्रच हनुमतासीतासंदर्शन रामसमक्ष निवेदनकथालङ्कृतोऽयं
सुन्दरकाण्डः नल्लूराख्य सुन्दरपुरवास्तव्य
महाजनैकदेश प्रेषित द्रव्येण,



कुम्भघोणस्थ श्री जनार्दनाख्य मुद्रणालये मुद्राप्यप्रकाशितो
विजयतेतमाम् ॥



प्रजोत्पत्तिसंवत्सर माघमास शुक्लद्वितीयायाम् ॥

एतस्यमूल्यम् ] [ ०—४—०

## ॥ नल्लूराख्य सुन्दरपुरवर्णनम् ॥

---

अधिवसतिचोळमण्डलमध्येप्रोद्दंडपंडिताध्युषितः ।
कल्याणैकनिदानं सुन्दरपुरमित्याभिख्ययाग्रामः ॥ ॥ १ ॥
तस्योत्तरदिग्भागेकाश्चिद्देवालयोस्तिगगनस्पृक् ।
यत्रनिवासीशंभुर्नाम्नाकल्याणसुन्दरेशाख्यः ॥ ॥ २ ॥
तत्पुरतोस्तितटाकस्संपूर्णस्सप्तसागराभिख्यः ।
मुक्त्यैकनिदानं स्नानाद्धत्यादिदोषतूलाग्निः ॥ ॥ ३ ॥
यत्रस्नास्यन्मनुजस्सङ्कल्पितवस्तुजातमाप्नोति ।
श्रीरामभक्तियुक्तोज्ञानीभूत्वाचतत्पदंलभते ॥ ॥ ४ ॥
तद्ग्रामेऽस्त्युपनिषदां सूत्राणांचैव भाष्यपठितॄणाम् ।
अध्यापकयुक्चोलाधनिकेनैकेननिर्मितापुण्यैः ॥ ॥ ५ ॥
तत्रत्रसत्सुद्विजनिषुकोपिनरोनास्तिखंडिताशिरोजः ।
कच्छविहीनोपितथाभक्तिविहीनोपिसांबशिवविष्ण्वोः ॥ ॥ ६ ॥
तस्मादत्रत्यानांभत्यानामिष्टपुष्टिदोभूत्वा ।
आस्तिक्यंवर्धयितुं ग्रामेऽस्मिन्वसतिजानकी जानिः ॥ ॥ ७ ॥
सर्वेसुखिनश्शांताः कर्मानुष्ठानसक्तहृत्कमलाः ।
रामंहृत्कमलस्थं ध्यात्वासुखिनस्सुपुत्रिणस्सन्ति ॥ ॥ ८ ॥
ध्यानप्राप्तानन्दाराविसुतभटभीकरास्सदादांताः ।
आप्रारब्धंस्थित्वाजनिमृतिहीनं प्रयांतिलोकममी ॥ ॥ ९ ॥
यतिरामानन्दकृतंसुन्दरपुरवर्णनं यथास्थित्या ।
अनुमोदंत्वत्रबुधास्त्यक्त्वाऽसूयां स्वभावतास्सिद्धाम् ॥ ॥ १० ॥

हरिः ओम् ॥

---

॥ शुद्धाशुद्धम् ॥

| स्पुटं | पङ्क्ति | अशुद्धं | शुद्धं | स्पुटं | पङ्क्ति | अशुद्धं | शुद्धं |
|---|---|---|---|---|---|---|---|
| १ | ४ | रमार्णम् | रमणीम् | १९ | २० | सति | सीता |
| २ | ६ | मार्न | मनि | २० | २ | मदाभजे | सदाभजे |
| ,, | ११ | पङ्कयां | पद्यां | ,, | २३ | वादात् | वादीत् |
| ३ | ९ | संबद्धो | संबन्धो | ,, | २४ | क्रीडमया | क्रीडस्वच |
| | | | | २२ | ५ | तोप | तोष |
| ५ | १३ | लङ्कां | लङ्का | २३ | १६ | रमणां | रमणीं |
| ६ | ८ | अप्रच्छत् | अपृच्छत् | २४ | १६ | उच्चे | उच्चैर्य |
| ७ | १८ | श्चितरम | श्चिरम | ,, | २४ | २८७ | २९७ |
| ८ | १ | न्प्रमदाः | त्प्रमदाः | २६ | २ | स्वप्ने | स्वप्नं |
| ९ | १६ | तस्तम | तस्सम | ,, | २० | मसुमि | ससुमि |
| ११ | ७ | स्थात् | स्यात् | ३७ | ६ | कपिसि | कपिभि |
| ,, | १९ | पस्यन्या | पश्यन्या | ३९ | १ | जंबुम | जंबुमा |
| ,, | ,, | र्थस्यात् | र्थस्स्यात् | ४१ | ७ | दाऽगृही | दाऽग्रदी |
| १३ | ११ | प्रोच्या | प्रोच्य | ४२ | १६ | मिमौ | मिमो |
| १४ | १५ | मुच्छितं | मुच्छ्रितं | ४३ | ६ | यद्रूत | यद्गूत |
| १९ | ७ | हं | त्कं | ,, | ११ | चंन | चनं |
| ,, | ११ | भोम | भोग | ४४ | ८ | ययं | वयं |
| ,, | १६ | वाञ्छामि | वाञ्छासि | ,, | १७ | द्रुनाः | चनात् |
| ,, | १८ | शुभं | शुभां | ४६ | २ | साता | सीता |

अवसावचित्रकूट इति श्लोकानन्तरं एषश्लोकःपठनीयः ॥
उपवनविरहणजातश्रमपरिहारायेतङ्कमविशमहं। इतियत्त्विय * रामम्॥



॥ शुभमस्तु ॥

श्रीगुरुचरणारविन्दाभ्यां नमः ॥

श्रीरामचन्द्राय परब्रह्मणे नमः ॥

# सुन्दरकाण्ड प्रारंभः ॥

ओं श्रीगणेशाय नमः। शारदाम्बिकायै नमः ॥

चन्द्रमौळये नमः। श्रीमते हनुमते नमः ॥

॥ हरिः ओं ॥

आदौ विधिवद्रामस्तीरे ऽब्धेर्यं स्वयं प्रतिष्ठाप्य।
सेतुमबध्नादब्धौ गणप न्तमहं नमाम्यभीष्टकरम् ॥ ॥ १ ॥

यन्मूर्त्यनुसंधाना द्यक्षामोच्चारणाच्च कवितायाम्।
वाक्पटुता दृढताऽङ्गे जायेते तां नमामि विधिरमणीम् ॥ ॥ २ ॥

यन्नाम्नोऽन्तस्स्मरणा द्वाल्मीकिर्लोकपूज्यतां प्रापत्।
तं वैदेहीरमणं ध्यायाम्यनिशं मदिष्टसंपूर्त्यै ॥ ॥ ३ ॥

यत्स्मरणाद्बुद्धिबले कीर्तिर्धैर्यं त्वभीति रारोग्यम्।
निर्जडता वाक्पटुता जायेते तं नमामि हनुमन्तम् ॥ ॥ ४ ॥

सुन्दरकाण्डकथास्तुतिरचनोद्युक्तं सदाऽपि रुग्णं माम्।
दृष्टौषधिनग हनुम न्नौषधदानेन नीरुजं कुरुतात् ॥ ॥ ५ ॥

सुन्दरकाण्डकथास्तुति प्रारंभः ॥

॥ ओं श्रीरामाय नमः ॥

अथ रावणनीतां तां पद्ममणीं द्रष्टु मुत्सुको हनुमान्।
आरुक्षत्स महेन्द्रं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १ ॥

शतयोजनमंभोधिं गोष्पदवन्मानसे तदा बुबुधे ।
यद्दूतस्सतितीर्षु स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २ ॥

वित्रासयन्विहङ्गानुरसा विटपान् हरन् मृगान् भीतान् ।
कुर्वन्यद्दूतोऽभा त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३ ॥

अवृधद्यद्दूतोऽब्धे स्तरणायाब्धौ विचिंत्य पितरं स्वं ।
लक्षीकृतपरतीरं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४ ॥

संकोचीकृतचरण स्संहृत्य भुजौ शिरोधरां च कटिं ।
यद्दूतो ववृधेऽद्रौ सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ५ ॥

प्रणिहितनयनो मार्गं दूरादालोकयंस्तदा लक्ष्यं ।
यद्दूतो ववृधेऽद्रौ सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ६ ॥

प्राणान्हृदये रुंध न्पद्भ्यां सुदृढं स्थितिं तदा तन्वन् ।
यद्दूतोववृधेऽद्रौ सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ७ ॥

स्वस्मिन् कृतनयनांस्ता नूचे वाचं तदाऽङ्गदप्रमुखान् ।
यद्दूतश्शैलस्थ स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ८ ॥

राघवकरनिर्मुक्त श्शर इव लङ्कामहं गमिष्यामि ।
इति यद्दूतोऽवादी त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ९ ॥

सीतां द्रक्ष्यामि न चे द्बध्वा नेष्यामि राक्षसेशमहम् ।
इतियद्दूतोऽवादीत्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १० ॥

लङ्कामुत्पाट्याहं राक्षससहितामिहागमिष्यामि ।
इति यद्दूतोऽवादी त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ११ ॥

इत्युक्त्वा यद्दूतश्शिखरा त्तस्मात्समुत्पपाताद्रेः ।
वेगादनुगतवृक्ष स्सीताकान्तंभजेऽहमनिशन्तम् ॥ ॥ १२ ॥

प्लवमानं यद्दूतं दृष्ट्वा देवा बभूवुरतितुष्टाः ।
कुसुमानिव नच्छीर्षे सिताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १३ ॥

प्लवमानं मैनाको दृष्ट्वा यद्‌भूतमंबुधेरुपरि ।
प्रार्थयत स्थित्यर्थं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १४ ॥
रघुवंश्यप्रार्थे रब्धेर्वचनादवापमिति शैलः ।
यद्‌भूतं गिरमवदत्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १५ ॥
तव पित्रा त्रातोऽहं पक्षच्छेदोद्यतान्महेंद्राद्द्राक् ।
इत्याह स यद्‌भूतं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १६ ॥
क्षणिकं शिखरे स्थित्वा भुक्त्वा पीत्वा फलं च मधु गच्छ ।
इत्याह सयद्‌भूतं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १७ ॥
अतिथिः पूज्योऽसि त्वं संबद्धोऽप्यस्ति नौ सदागतिज ।
इत्याह स यद्‌भूतं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १८ ॥
इत्थं मैनाकगिरं श्रुत्वा प्रत्याह तं गिरं तुष्टः ।
यद्‌भूतो वायुसुत स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ १९ ॥
प्रीतोऽस्म्यहमद्य गिरे त्वरते कार्यन्त्वनल्पमेवास्ते ।
इति यद्‌भूतोऽवादी त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २० ॥
इति गिरिमालभ्यासौ यद्‌भूतः पाणिनाऽन्तरिक्षस्थः ।
प्रययावेकाग्रमना स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २१ ॥
अथ सुरसिद्धमहर्षिप्रोक्ता सुरसा भुजङ्गजनयित्री ।
यद्‌भूतं गिरमूचे सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २२ ॥
ईश्वरदत्तोभक्ष स्त्वं विश वदने ममाद्य कपिवीर ।
इति सोचे यद्‌भूतं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २३ ॥
इत्थं विरसं सुरसाप्रोक्तं वचनं निशम्य यद्‌भूतः ।
सुरसां वाक्यमभाणी त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २४ ॥
रावणनीतां सीतां यामि दिदृक्षुर्दयां कुरु त्वमिति ।
यद्‌भूतोऽयाचतत्तां सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २५ ॥

साह्यं कुरु दाशरथे देहि त्वं मार्गमस्य दूतस्य ।
इति यद्दूतोऽवादी त्सीताकान्तंभजेऽहमनिशन्तम् ॥ ॥ २६ ॥

सीतां दृष्ट्वा रामे विनिवेद्याऽहं विशामि तव वक्त्रं ।
इति यद्दूतोऽवादी त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २७ ॥

इत्युक्त्वा साऽवादीद्यद्दूतम्मे प्रविश्य वदनं त्वं ।
याहीति तदा सुरसा सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २८ ॥

इति वक्त्रं सा विपुलं व्यादायाग्रे प्रयान्तमभिरुध्य ।
यद्दूतं पथि तस्थौ सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ २९ ॥

अथ दशयोजनमायतमास्यं तस्या विलोक्य यद्दूतः ।
देहं तत्सममकरो त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३० ॥

अथ शतयोजनवदनां तां वीक्ष्याल्पीकृतस्वतनुरतरत् ।
यद्दूतस्तद्वदना त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३१ ॥

दाक्षायणि तव वचनं पूजितमद्य प्रयामि कार्यार्थं ।
इति यद्दूतोऽगाद्द्राक्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३२ ॥

दृष्ट्वा तं प्लवमानं गगने यद्दूतमब्धिकृतवासा ।
छायाग्राहिण्यरुण त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३३ ॥

अथयद्दूतोऽपश्यत्सागरमध्येधृतस्वतनुकान्ति ।
तां सिंहिकां नृपोक्तां सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३४ ॥

गगनेविवर्धमानं यद्दूतशरीरमाशु सा दृष्ट्वा ।
स्वास्यं विस्तृतमकरो त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३५ ॥

अथसंक्षिप्ततनुद्रा क्तन्मुखकुहरे निपत्य यद्दूतः ।
उदपतद्दुतकृत्यतनुं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३६ ॥

प्लवमानः परपारे ऽपश्यद्वनराजिमुल्लसद्वृक्षां ।
यद्दूतस्सन्तुष्ट स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३७ ॥

अथसंक्षिप्य तनुं स्वां राक्षस कुतुकास्पदां पपाताद्रौ ।
यद्रूतोऽब्धितटस्थ स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३८ ॥

शतयोजनविस्तारः पर्याप्तो वा ममोदधिं प्लवतः ।
इतिमेनेयद्रूत स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ३९ ॥

लङ्कां त्रिकूटपर्वत शिखरस्थां वीक्ष्य रत्नमयवप्रां ।
यद्रूतोभृशमतुष त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४० ॥

काञ्चनतोरणरम्यां प्रासादयुतैर्गृहैस्सुनिबिडान्तां ।
यद्रूतः प्राद्राक्षी त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४१ ॥

रक्षोभि र्धृतशस्त्रैः परितो गुप्तां निरीक्ष्य यद्रूतः ।
दुरवापान्तां मेने सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४२ ॥

नोसामदानभेदाः फलपर्यन्ता भवन्ति रक्षस्सु ।
इति मेने यद्रूत स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४३ ॥

जेतुमशक्या लङ्कां देवैरसुरैश्च संघशो युक्तैः ।
इति मेने यद्रूत स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४४ ॥

आगत्येह कपीन्द्राः किं कुर्वन्त्वद्य राक्षसैर्गुप्ते ।
इति मेने यद्रूत स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४५ ॥

अथ यद्रूतस्स्वांतेऽचिन्तयादित्थं गिरीन्द्रशिखरस्थः ।
स्वागमसाफल्यकृते सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४६ ॥

रात्रौ प्रविश्य लङ्कां ह्रस्वस्सीतामहं विचेष्यामि ।
इति यद्रूतो मेने सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४७ ॥

इति यद्रूतो मत्वा पृषदंशुकमात्रदेहभागभवत् ।
सीतादर्शनकाम स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४८ ॥

रम्यां प्रविवेश पुरीं सुविभक्तपथां विचित्रहर्म्ययुतां ।
यद्रूतोऽदृश्यतनु स्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ४९ ॥

कुमुदाङ्गदमैन्दानां मम च सुषेणस्य गमनमत्र भवेत् ।
इतियद्गूतोऽबुध्यत सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ५० ॥

ऋक्षपतेर्द्विविदस्य च गतिरत्र भवेत्प्रयाससाध्यापि ।
इति यद्गूतोऽबुध्यत सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ५१ ॥

अथ लङ्कां प्रविशन्तं यद्गूतं नगरदेवता दृष्ट्वा ।
धृतरूपा गिरमभण त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ५२ ॥

कस्त्वं तव किङ्कार्यं कस्य प्रेष्योऽसि तत्वमिह कथय ।
इति यद्गूतमप्रच्छ त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ५३ ॥

अथ का त्वं वद सत्यं भीषयसि त्वं किमर्थमिह वद मां ।
इतियद्गूतोऽप्यभण त्सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ५४ ॥

साहं नगरी लङ्का स्वयमिह रक्षामि वेधसो वचनात् ।
इति सोचेयद्गूतं सीताकान्तं भजेऽहमनिशन्तम् ॥ ॥ ५५ ॥

❀ श्रुत्वा तस्या वचनं प्रत्यूचे तामसहरूपधरां ।
हनुमानपि यद्गूतस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ५६ ॥

श्रुत्वा लङ्काविभवं चक्षुर्भ्यांप्रेक्षितुं प्रविष्टोऽहं ।
इति यद्गूतोक्तिरभूत्तं सुन्दरमूर्त्तिमाश्रये रामम् ॥ ॥ ५७ ॥

श्रुत्वा यद्गूतगिरं लङ्का परुषाक्षरं वचोऽभाणीत् ।
विकृततनूरक्ताक्षी तं सुन्दरमूर्त्तिमाश्रये रामम् ॥ ॥ ५८ ॥

जित्वा मां प्रविशान्त नोचेत्प्राणान्विमुञ्च दुर्बुद्धे ।
इति सोचे यद्गूतन्तं सुन्दरमूर्त्तिमाश्रये रामम् ॥ ॥ ५९ ॥

अथ कृत्वा सा नादं भयदं लङ्काप्यतीतडद्वेगात् ।
यद्गूतं कोपिष्ठा तं सुन्दरमूर्त्तिमाश्रये रामम् ॥ ॥ ६० ॥

अथ यद्गूतः कुपितोऽताडयदेनां स्वमुष्टिना लघुना ।
अबलेयं स्त्रीति मत्वा तं सुन्दरमूर्त्तिमाश्रये रामम् ॥ ॥ ६१ ॥

अथसात्रिह्वलदेहान्यपतद्भूम्यां भृशं रुदन्तीद्राक् ।
यद्दूतताडनाद्गार्त्तं सुन्दरमूर्त्तिमाश्रये रामम् ॥ ॥ ६२ ॥

अथयद्दूतं दृष्ट्वा भुविपतितासा निशाचरीवाचम् ।
हीनगळध्वनिरूचेतं सुन्दरमूर्त्तिमाश्रये रामम् ॥ ॥ ६३ ॥

हरिसत्तममांदीनां त्रायस्वत्वं विधेहि मयिकरुणाम् ।
इति सोचे यद्दूतं तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ६४ ॥

सीताहेतोराज्ञः कालोवैनाशिकोऽयमागच्छत् ।
इति सोचे यद्दूतं तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ६५ ॥

लङ्कां प्रविश्यसीतादर्शनविषये विधत्स्वयत्कार्यम् ।
इति सोचेयद्दूतं तं सुन्दरमूर्तिं माश्रये रामम् ॥ ॥ ६६ ॥

निर्जित्यपुरींश्रेष्ठां लङ्कां तां कामरूपिणीं हनुमान् ।
यद्दूतोऽन्तरविक्षत्तं सुन्दरमूर्तिं माश्रये रामम् ॥ ॥ ६७ ॥

सालमभिप्लुत्यरयात्सव्यं पादं न्यवेशयत्पुर्याम् ।
रिपुमूर्ध्निच यद्दूतस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ६८ ॥

यद्दूतस्तद्वीथ्यां वेदत्रयपाठकैर्मुदाभ्यस्तान् ।
शब्दान्विविधानशृणोत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ६९ ॥

भवनाद्भवनं गच्छन्मधुरं गीतम् च मुग्धवनितानाम् ।
यद्दूताश्चितरमशृणोत्तं सुन्दरमूर्तिं माश्रये रामम् ॥ ॥ ७० ॥

आस्फोटितनिनदांश्चक्ष्वेळित युक्तान्बलिष्ठ शूरकृतान् ।
यद्दूतश्चिरमशृणोत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७१ ॥

मध्यमगुल्ममपश्यद्धानुष्कैरस्त्रपाणिभिर्निबिडम् ।
यद्दूतोऽदृश्यतनुस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७२ ॥

अथरक्षोधिप गेहं गुप्तं शूरैर्धनुर्धरैरभितः ।
यद्दूतः प्राविक्षत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७३ ॥

तत्रापश्यन्प्रमदाः प्रमदाश्शयने मुदाकृतस्वापाः ।
यद्दूतोनिर्भीकस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७४ ॥

तत्राऽपश्यन्सीतां यद्दूतोऽपश्यदुन्नतं सौधम् ।
पुष्पकसदृशाकारं तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७५ ॥

तत्रान्तर्गृहमन्यद्ब्रह्मगिराविश्वकर्मणा रचितम् ।
अद्राक्षीद्यद्दूतस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७६ ॥

तत्राष्टदिक्पतीनामृध्यापूर्णं ददर्शगृहमपरम् ।
यद्दूतोविस्मितधीस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७७ ॥

तत्रददर्शविमानं पुष्पकमात्तं कुबेरमपिजित्वा ।
यद्दूतोविस्मितधीस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७८ ॥

क्रीडाश्रमभरसुप्तं बहुविधमधुपानदृप्तमद्राक्षीत् ।
यद्दूतस्त्रीसङ्घं तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ७९ ॥

पार्श्वप्रगळितहारास्स्रस्तदुकूलाददर्शयद्दूतः ।
तत्प्रमदास्सुप्तास्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८० ॥

स्रस्तकचा व्यक्तकुचास्तन्वंगीस्सुरतताँतसर्वाङ्गीः ।
यद्दूतोऽपश्यत्तास्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८१ ॥

कृतरावणमुखशङ्कास्स्व सपत्न्यधरप्रचुंबने सक्ताः ।
यद्दूतोऽपश्यत्तास्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८२ ॥

पार्श्वोरुकटीपृष्ठं त्वन्योन्यस्य प्रगाढमाश्लिष्टाः ।
यद्दूतोऽपश्यत्तास्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८३ ॥

देवासुरनरकिन्नरगन्धर्वाणां स्त्रियस्तदाऽनीताः ।
यद्दूतोऽपश्यत्तास्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८४ ॥

इत्थं रावणभवनेऽपश्यल्लॅलनामदेन कृतनिद्राः ।
तल्पगतायद्दूतस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८५ ॥

अथयद्दूतोमेने राघवभार्यायदीदृशीकुशलम् ।
अस्येतिच यद्दूतस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८६ ॥
राघवपत्न्यांक्रूरामकरोद्बुद्धिं प्रभुश्चलंकेशः ।
इति मेने यद्दूतस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८७ ॥
तत्रस्फाटिकपीठं नवरत्नविभूषितं शुभंरुचिरम् ।
यद्दूतस्तदपश्यत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८८ ॥
रम्यास्तरणोपेतं सच्छत्रं चामरद्वयेनयुतम् ।
यद्दूतस्तदपश्यत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ८९ ॥
तस्मिन्जीमूतनिभं रक्षोधिपमैक्षतादरात्सुप्तम् ।
यद्दूतोधृतमकुटं तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९० ॥
हैमाङ्गदनद्धभुजंचैरावतदन्तविक्षतोरस्कम् ।
यद्दूतस्तमपश्यत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९१ ॥
स्वीकृतचन्दनचर्चं कुण्डलकान्तिप्रशोभितश्रवणम् ।
यद्दूतस्तमपश्यत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९२ ॥
तच्चरणतलेसुप्तास्सुरतश्रान्तास्सुभूषणास्तरुणीः ।
यद्दूतस्तमपश्यत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९३ ॥
करधृतवीणाः काश्चिन्मड्डुकहस्ताऽश्रमात्तदासुप्ताः ।
यद्दूतोऽपश्यत्तास्तंसुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९४ ॥
करधृतडिण्डिमवाद्यावत्सभ्रान्त्यातथैव सुप्तास्ताः ।
यद्दूतस्समपश्यत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९५ ॥
काश्चिद्रमणभ्रान्त्याऽऽलिंग्यमृदङ्गं प्रगाढमथसुप्ताः ।
यद्दूतोपश्यत्तास्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९६ ॥
अथरमणीमध्यस्थां सुभ्रूं मन्दोदरीं तदाशयने ।
यद्दूतस्समपश्यत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९७ ॥

गौरीं कनकसवर्णामिष्टां लङ्केश्वरस्यमहिषीन्ताम् ।
यद्दूतस्समपश्यत्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९८ ॥
यौवनसंपद्युक्तां तामथसीतेत्यतर्कयन्मनसा ।
यद्दूतोधृततोषस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥ ९९ ॥
पुच्छमचुंबत्तोषात्स्तंभमरोहन्ननन्दचिक्रीड ।
प्रजगावपि यद्दूतस्तं सुन्दरमूर्तिमाश्रये रामम् ॥ ॥१००॥
रामेण वियुक्तासा सीता किंस्वप्तुमर्हतिस्वधिया ।
इति यद्दूतोमेनेतं वातजदूतमाश्रये रामम् ॥ ॥१०१॥
नालंकर्तुं योग्याभोक्तुंपानंप्रसेवितुंवाऽद्य ।
इति यद्दूतोमेनेतं वातजदूतमाश्रये रामम् ॥ ॥१०२॥
अन्येयमितिस्वधिया निश्चित्यचचारपानभूमिगतः ।
यद्दूतोऽव्यपगतभीस्तं वातजदूतमाश्रये रामम् ॥ ॥१०३॥
तत्रापश्यल्लेह्यान्पेयान्भोज्याननेकमांसकृतान् ।
यद्दूतः पात्रस्थांस्तं वातजदूतमाश्रये रामम् ॥ ॥१०४॥
अथभूगृहचैत्यालयपुष्करिणीदीर्घिकाश्वसोद्यानाः ।
यद्दूतेनसुदृष्टास्तंवातजदूतमाश्रये रामम् ॥ ॥१०५॥
राक्षस्यो विकृताङ्ग्यो विद्याधरनागकन्यकाश्चान्याः ।
यद्दूतेनसुदृष्टास्तंवातजदूतमाश्रये रामम् ॥ ॥१०६॥
धीमान्विषसादमुहुस्तत्रापश्यन्विदेहजां सीताम् ।
यद्दूतोऽत्रातरदथतंवातजदूतमाश्रये रामम् ॥ ॥१०७॥
कपिराट्कृतमुद्योगं स्वकृतं तरणं सरित्पतेर्व्यर्थम् ।
अमनुतहृदि यद्दूतस्तं वातजदूतमाश्रये रामम् ॥ ॥१०८॥
रामप्रीतिमभीप्सुस्सर्वां लंकामदर्शं महमेकः ।
इतियद्दूतोऽशोचत्तंवातजदूतमाश्रये रामम् ॥ ॥१०९॥

संपातिनेहसीता वासः कथितो नवेद्म्यहं त्विहताम् ।
इतियद्दूतोऽशोचत्तं वातजदूतमाश्रये रामम् ॥ ॥११०॥
सीतावैदेह्यथवा रावणवश्याऽभवत्किमशरण्या ।
इतियद्दूतोऽशोचत्तं वातजदूतमाश्रये रामम् ॥ ॥१११॥
अथवारावणहस्ताद्ब्धौ पतितारिरक्षिषुश्शीलम् ।
इतियद्दूतोऽशोचत्तंवातजदूतमाश्रये रामम् ॥ ॥११२॥
अथवाराक्षसपतिनाविवशासीताचभक्षिताकिंस्यात् ।
इतियद्दूतोशोचत्तं वातजदूतमाश्रये रामम् ॥ ॥११३॥
अथवारावणपत्न्यो मास्तुसपत्नीयमित्यभुञ्जन्वा ।
इतियद्दूतोऽशोचत्तंवातजदूतमाश्रये रामम् ॥ ॥११४॥
अथसाविदेहदुहिता राघवपत्नी भवेन्नतद्वश्या ।
इतिमेनेयद्दूतस्तंवातजदूतमाश्रये रामम् ॥ ॥११५॥
नष्टांवाऽथमृतांवा रामायाहं कथं वदिष्यामि ।
इतिमेनेयद्दूतस्तं वातजदूतमाश्रये रामम् ॥ ॥११६॥
वृत्तेनिवेदितेस्युर्दोषाबहवोऽनिवेदितेपितथा ।
इतिमेनेयद्दूतस्तंवातजदूतमाश्रये रामम् ॥ ॥११७॥
विषमं प्रतिभातीदं कर्तव्यं खलुकथंन्वितिस्वधिया ।
यद्दूतः प्रालोकततंवातजदूतमाश्रये रामम् ॥ ॥११८॥
यदिमैथिलीमपश्यन्याम्यहमेकश्चकः पुमर्थस्स्यात् ।
इतियद्दूतोऽबोधत्तं वातजदूतमाश्रये रामम् ॥ ॥११९॥
सागरतरणं व्यर्थं लंकारक्षः प्रदर्शनं विफलम् ।
इतियद्दूतोबोधत्तंवातजदूतमाश्रये रामम् ॥ ॥१२०॥
किंवक्ष्यति सुग्रीवः कपयोवक्ष्यन्ति मामनुप्राप्तम् ।
इतियद्दूतोमेनेतंवातजदूतमाश्रये रामम् ॥ ॥१२१॥

दशरथपुत्रौद्वावपिसंप्राप्तं वीक्ष्यवक्ष्यतः किंमाम् ।
इतियद्गतोमेनेतंवातजदूतमाश्रये रामम् ॥ ॥१२२॥

सीतानमयादृष्टेत्युक्तस्त्यक्ष्यत्यसूंस्तदारामः ।
इत्यमनुतयद्गतस्तं वातजदूतमाश्रये रामम् ॥ ॥१२३॥

अथरामं सौमित्रिर्दृष्ट्वात्यक्ष्यत्यसूंस्तदेवहठात् ।
इत्यमनुतयद्गतस्तं वातजदूतमाश्रये रामम् ॥ ॥१२४॥

अथभरतश्शत्रुघ्नश्श्रुत्वावृत्तं भविष्यतो नचिरात् ।
इत्यमनुतयद्गतस्तंवातजदूतमाश्रये रामम् ॥ ॥१२५॥

कौसल्याद्यानार्यश्श्रुत्वैतद्विप्रियं मरिष्यन्ति ।
इत्यमनुतयद्गतस्तंवातजदूतमाश्रये रामम् ॥ ॥१२६॥

सुग्रीवस्सत्यवचा नभविष्यति दृष्ट राम वृत्तान्तः ।
इत्यमनुतयद्गतस्तं वातजदूतमाश्रये रामम् ॥ ॥१२७॥

अङ्गदमुख्याः कपयस्ताराद्यायोषितोऽपिनंक्ष्यन्ति ।
इत्यमनुतयद्गतस्तं वातजदूतमाश्रये रामम् ॥ ॥१२८॥

मद्गमनेकुलनाशश्चेक्ष्वाकूणांभवेत्कपीनां च ।
इत्यमनुतयद्गतस्तं वातजदूतमाश्रये रामम् ॥ ॥१२९॥

नेच्छामिपुरीं गन्तुं किष्किन्धांमैथिलींविनाऽद्याऽहम् ।
इत्यमनुतयद्गतस्तं वातजदूतमाश्रये रामम् ॥ ॥१३०॥

मयिचेहस्थे रामस्सीताप्राप्त्याशयावसेत्सासुः ।
इत्यमनुतयद्गतस्तंवातजदूतमाश्रये रामम् ॥ ॥१३१॥

हस्तमुखादानोऽहं वानप्रस्थोऽथवाभविष्यामि ।
इत्यमनुतयद्गतस्तंवातजदूतमाश्रये रामम् ॥ ॥१३२॥

अथवोदधितीरेऽहं कृत्वा रुचिरांचितां प्रवेक्ष्यामि ।
इत्यमनुतयद्गतस्तं वातजदूतमाश्रये रामम् ॥ ॥१३३॥

काकश्वापदगृध्रश्येनास्तृप्यन्तुमामकैर्मांसैः ।
इत्यमनुतयद्रूतस्तं वातजदूतमाश्रये रामम् ॥ ॥१३४॥
नाहमदृष्ट्वासीतां कपिवीराणां पुरोगमिष्यामि ।
इत्यमनुतयद्रूतस्तंवातजदूतमाश्रये रामम् ॥ ॥१३५॥
रामोऽपश्यन्सीतां वानरजातीर्विनिर्दहेत्कोपात् ।
इत्यमनुतयद्रूतस्तंवातजदूतमाश्रये रामम् ॥ ॥१३६॥
सर्वेवानरसङ्घा न विनश्येयुर्यथातथाकुर्याम् ।
इत्यमनुतयद्रूतस्तं वातजदूतमाश्रये रामम् ॥ ॥१३७॥
उदतिष्ठद्ध्यात्वेत्थं तदशोकवनं विचेतुमथपरितः ।
यद्रूतस्तत्स्थानात्तंवातजदूतमाश्रये रामम् ॥ ॥१३८॥
रामायलक्ष्मणायच देव्यै तस्यै नमोस्त्वितिप्रोच्या ।
उदतिष्ठद्यद्रूतस्तं वातजदूतमाश्रये रामम् ॥ ॥१३९॥
रुद्रादित्याश्विमरुद्वस्वादिभ्यो नमोवचस्तन्वन् ।
उदतिष्ठद्यद्रूतस्तं वातजदूतमाश्रये रामम् ॥ ॥१४०॥
तदिदश्चाशोकवनं विचितं नमयासुरक्षितं शूरैः ।
इतियद्रूतोऽमन्यततं वातजदूतमाश्रये रामम् ॥ ॥१४१॥
भगवानपिमत्तातो नात्रयथेच्छं प्रवातितद्भीतः ।
इतियद्रूतोमन्यततं वातजदूतमाश्रये रामम् ॥ ॥१४२॥
संक्षिप्तोऽयंदेहो रामार्थं राक्षसार्थमिहचमया ।
इतियद्रूतोमन्यततंवातजदूतमाश्रये रामम् ॥ ॥१४३॥
सिद्धिं सर्वे देवास्तुष्टामह्यंदिशंत्वशोकवने ।
इतियद्रूतोमन्यततंवातजदूतमाश्रये रामम् ॥ ॥१४४॥
इत्थंध्यात्वामनसा प्राकारात्पुप्लुवेऽथवृक्षेषु ।
यद्रूतोऽशोकवनेतंवातजदूतमाश्रये रामम् ॥ ॥१४५॥

मुखधिकृतविधुशोभां तनुधिकृतकामसुन्दरीसुषमाम् ।
यद्दूतोऽपश्यत्तां तं हनुमद्दूतमाश्रये रामम् ॥ ॥१५८॥

प्रथमातिधयभ्यस्तां विद्यामिवकार्श्यनिलयसर्वाङ्गीम् ।
यद्दूतोऽपश्यत्तां तं हनुमद्दूतमाश्रये रामम् ॥ ॥१५९॥

आम्नायासम्बन्धाद्विद्यांशिथिलामिवस्थितां सीताम् ।
यद्दूतोऽपश्यत्तां तं हनुमद्दूतमाश्रये रामम् ॥ ॥१६०॥

वैदेह्याभरणानि च रामेणोक्तानिवृक्षलग्नानि ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१६१॥

वस्त्रंसुवर्णपट्टप्रभमेतद्दृष्टपूर्वमस्माभिः ।
इतियद्दूतोऽपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१६२॥

अपविद्धान्यनयैवस्वनवन्ति विभूषणानिगिरिशिखरे ।
इतियद्दूतोऽमन्यततं हनुमद्दूतमाश्रये रामम् ॥ ॥१६३॥

एनांविहायरामोजीवतिकथमाश्रितापदांभित्ता ।
इतियद्दूतोऽमन्यततं हनुमद्दूतमाश्रये रामम् ॥ ॥१६४॥

समुहूर्तंध्यात्वाहृदियद्दूतस्तामुदश्रुविक्लतमुखः ।
विललापहतेजस्वी तं हनुमद्दूतमाश्रये रामम् ॥ ॥१६५॥

मान्यासीतापीयं यदिदुःखार्तादुरत्ययःकालः ।
इतियद्दूतोव्यलपत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१६६॥

रामव्यवसायञ्चालक्ष्मणधैर्यञ्चजानतीसहते ।
इति यद्दूतोव्यलपत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१६७॥

सुग्रीवोऽस्याहेतोरैश्वर्यं वालिपालितंलेभे ।
इत्यमनुतयद्दूतस्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१६८॥

अस्याहेतोर्वाली रावणसदृशोहतः कबन्धोऽपि ।
इत्यमनुतयद्दूतस्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१६९॥

सुखयोग्यांश्रितदुःखां दृष्ट्वाऽभ्यधितं ममापिचित्तमिमाम् ।
इत्यमनुतयद्दूतस्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७०॥

इतिमत्वाऽर्थं हनुमान्सीतेयं से तेनिश्चितात्ममतिः ।
यद्दूतोऽगेऽवात्सीत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७१॥

सीतांदिदृक्षुरग्रेविकृताननपादलोचना नारीः ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७२॥

एकाक्षीमनलाक्षींमार्जाराक्षीं त्रिरुद्धपक्ष्माक्षीम् ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७३॥

मृगशार्दूलवराहोष्ट्राजमुखीःक्रोष्ट्रासभैणमुखीः ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७४॥

अतिमात्रशिरोग्रीवोदरकुचकट्यूरुगुल्फजङ्घास्ताः ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७५॥

विस्तृतशाखंवृक्षं समयामधुपानमाचरन्तीस्ताः ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७६॥

तस्यनगस्याधस्थाञ्जनकसुतां तामनिन्दितांतान्ताम् ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७७॥

तांक्लिष्टवस्त्रसंवृतगात्रां शीलेनरक्षितांस्वेन ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७८॥

सीतां सुविभक्ताङ्गींदृष्ट्वालेभे प्रहर्षमतुलंसः ।
यद्दूतस्समपश्यत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१७९॥

दृष्ट्वाऽऽनन्दाश्रूणिप्रमुमोचतदास्वदेहविस्मृत्या ।
यद्दूतोजनकसुतां तं हनुमद्दूतमाश्रये रामम् ॥ ॥१८०॥

लक्ष्मणसहितायनमस्कृत्वा रामायसंवृताङ्गोऽभूत् ।
यद्दूतःपत्रचयेतंहनुमद्दूतमाश्रये रामम् ॥ ॥१८०॥

सीतां विचिन्वतोऽथोकिञ्चिच्छेषानिशाऽभवद्विपिने ।
यद्दूतस्यतदानींतं हनुमद्दूतमाश्रये रामम् ॥ ॥१८२॥

कल्येषडङ्गवेदत्रयघोषान्ब्रह्मराक्षसैःप्रोक्तान् ।
यद्दूतश्चाश्रौषीत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१८३॥

अथमङ्गळवादित्रैश्शब्दैः प्राबुद्ध्यताऽऽशुयद्द्वेषी ।
दशवदनोभृशमदनस्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१८४॥

सर्वाभरणैर्युक्तस्त्रीजनमात्रप्रजुष्टपार्श्वतलः ।
यद्विट्प्रययौ वीथ्यांतं हनुमद्दूतमाश्रये रामम् ॥ ॥१८५॥

प्राविक्षदशोकवनं स्त्रीभिर्धृतदीपिकाभिरबलाभिः ।
दर्शितमार्गोय द्विट्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१८६॥

निद्रामदरक्ताक्ष्योयद्विट्पत्न्योऽनुजग्मुराशुपतिम् ।
कामाद्बहुमानादपितंहनुमद्दूतमाश्रये रामम् ॥ ॥१८७॥

आगच्छन्तंहनुमान्यद्विषमाराददर्शवृक्षस्थः ।
प्रमदाभिःश्रितपार्श्वस्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१८८॥

यद्दूतोऽवप्लुत्यद्रष्टुंवृक्षात्सरावणं हनुमान् ।
पत्रावृतगात्रोऽभूत्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१८९॥

सीतांदिदृक्षुमागतमथयद्दूतोददर्शदशवदनम् ।
पत्रछन्नशरीरस्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१९०॥

सुश्रोणींपिकवाणीं मधुपश्रेणीसदृक्षघनवेणीम् ।
यद्विड्पश्यत्सीतांतं हनुमद्दूतमाश्रये रामम् ॥ ॥१९१॥

दृष्ट्वायद्विषमथसा बाहूरुपिनद्धरम्यकुचजठरा ।
उपाविष्टाप्रावेपततं हनुमद्दूतमाश्रये रामम् ॥ ॥१९२॥

यद्विड्वैदेहीन्तांरक्षस्त्रीभिस्सुरक्षितां परितः ।
समपश्यद्बाष्पार्द्रांतं हनुमद्दूतमाश्रये रामम् ॥ ॥१९३॥

दुःखां तमपश्यन्तीं शोकध्यानोपवाससभीतियुताम् ।
यद्विडपश्यत्सीतां तं हनुमद्दूतमाश्रये रामम् ॥ ॥१९४॥
राघवपदाब्जभृङ्गीं शीघ्रं शत्रोः प्रणाशमिच्छन्तीम् ।
यद्विडपश्यत्सीतां तं हनुद्दूतमाश्रये रामम् ॥ ॥१९५॥
साध्वीं तां साकारैर्वाक्यैर्मधुरैः प्रलोभयामास ।
यद्विट्स्ववधायद्राक्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१९६॥
मां दृष्ट्वा कुचजठरं कलभोरुत्वं निगूहसे व्यर्थम् ।
इतितामवदद्यद्विट्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१९७॥
गीतं नृत्तं वाद्यं लभमां प्राप्य त्वमद्य शशिवदने ।
इतितामवदद्यद्विट्तं हनुमद्दूतमाश्रये रामम् ॥ ॥१९८॥
भार्या भवममभैथिलि मोहमिमं त्वं त्यजाद्य शृणु वाणीम् ।
इतितामवदद्यद्विट्तंहनुमद्दूतमाश्रये रामम् ॥ ॥१९९॥
*तत्र सां महिषीणां पूर्वासां भव त्वाग्रमहिषीत्वम् ।
इतितामवदद्यद्विट्तंदेवमहं सदाभजे रामम् ॥ ॥२००॥
सर्वां विजित्य पृथिवीं जनकाय ददै तवाद्य जनकाय ।
इतितामवदद्यद्विट्तंदेवमहं सदाभजे रामम् ॥ ॥२०१॥
भोगान्भुङ्क्ष्वयथेच्छं पिब मीरु रमस्व भवपत्नी । इति * रामम् ॥२०२॥
रामेण किं करिष्यसि राज्यभ्रष्टेन हीनशौर्येण । इति * रामम् ॥२०३॥
द्रागाशां त्यज तस्मिन्कुरु मय्याशामपारशौर्ये त्वम् । इति * रामम् ॥२०४॥
चारुस्मितशोभिमुखि स्वान्तं हरसि त्वमद्य प्रथुजघने । इति * रामम् ॥२०५॥
इत्थं रावणगदितं श्रुत्वा वचनं जगाद तं क्रुद्धा ।
यत्पत्नी पतिदेवा तं देवमहं सदाभजे रामम् ॥ ॥२०६॥
कृत्वा तृणमन्तरतस्मृतबहुत्थां जगाद यत्पत्नी ।
दुष्टधियं दशवदनं तं देवमहं सदाभजे रामम् ॥ ॥२०७॥

मत्तोमनोनिवर्तय कुर्वद्यत्नंमतिंस्वकीयजने ।
इतितंयत्स्न्यवदद्दांतं देवमहं सदाभजे रामम् ॥ ॥२०८॥
कार्यमकार्यंनमयाजनककुलेजातयानृपस्नुषया । इति * रामम् ॥२०९॥
उक्तेत्थंयत्पत्नीदशकण्ठमुवाचपृष्ठतःकृत्वा ।
पुनरपिशास्त्रीयां गांतदेवमहं सदाभजे रामम् ॥ ॥२१०॥
तेऽहंभार्यायोग्यानभवेयं रामबद्धगळसूत्रा ।
इतितंयत्पत्न्यवदन्तंदेवमहं सदाभजे रामम् ॥ ॥२११॥
अन्येनगृहीतकरा नान्यमथामुंमभिच्छतिप्राज्ञा ।
इतितं यत्स्न्यवदद्दांतंदेवमहं सदाभजे रामम् ॥ ॥२१२॥
तवपाणिगृहीतास्त्रीपरमिच्छतिचेन्मतंभवेत्तवकिम् । इति * रामम् ॥२१३॥
आत्मसमंमत्वाऽन्यंस्वासुत्वंस्त्रीषुभोममनुभूयाः । इति * रामम् ॥२१४॥
स्वस्त्रीष्वतुष्टमनसंनयतिपरस्त्रीपराभवं पुरुषम् । इति * रामम् ॥२१५॥
सन्तोनसन्तिवात्रत्वंवातान्नानुवर्तसेकुमतिः । इति * रामम् ॥२१६॥
प्राप्यत्वांराजानंनङ्क्ष्यत्यचिरात्पुरीयमतिरम्या । इति * रामम् ॥२१७॥
उपधायचतद्भुजमहमन्यस्यभुजंकथंभजेमूढ । इति * रामम् ॥२१८॥
मांराघवेणयोजयकुशलंयदिवाञ्छामत्वमतिशीघ्रम् । इति * रामम् ॥२१९॥
त्वंयदिजीवितुमिच्छसिमैत्रीभूयात्तवाद्यतेनसमम् । इति * रामम् ॥२२०॥
यावत्तत्रापरवंश्रोष्यसितावन्नयाऽऽशुभंरामे । इति * रामम् ॥२२१॥
निहतेस्वजनस्थानेभीतोद्राक्कृत्यमेतदकरोस्त्वम् । इति * रामम् ॥२२२॥
इत्थंसीतावचनं श्रुत्वातांप्रत्युवाचयद्द्वेषी ।
परुषंवचनंक्रोधात्तं देवमहं सदाभजे रामम् ॥ ॥२२३॥
उवाचिथयद्यद्वचनंतस्मिंस्तस्मिन्वधस्तुतेयुक्तः ।
इति तामवदद्यद्विट्तं देवमहं सदाभजे रामम् ॥ ॥२२४॥
द्वौमासाववधीतवदत्तावथमांभजस्वशयनगतम् । इति * रामम् ॥२२५॥

अथमांत्वमनिच्छन्तीभवसिप्रातस्सुभोज्यतनुमांसा ।
इति तामवदद्यद्विट्तं देवमहं सदाभजे रामम् ॥ ॥२२६॥
इत्थंयद्विट्प्रोक्ताऽश्वस्तानिकटस्थिताभिरबलाभिः ।
ऊचेतंवाचंसातंदेवमहं सदाभजे रामम् ॥ ॥२२७॥
भार्यां रामस्यसतींप्रोक्त्वेत्थंत्वं विमोक्ष्यसेक्षगतः ।
इतितंयत्पत्न्यवदत्तंदेवमहं सदाभजे रामम् ॥ ॥२२८॥
क्रूरेतवनयनेद्वेभूमौपततःकुतोनपापस्य । इति * रामम् ॥ ॥२२९॥
मामेवंब्रुवतस्ते जिह्वाछिन्नाकथंनभुविपतिता । इति * रामम् ॥२३०॥
भर्त्राज्ञाविरहात्त्वांनोकुर्म्यहमद्यभस्मसात्तपसा । इति * रामम् ॥२३१॥
परदारचौर्यमेतन्न्याय्यंत्रधनदसोदरस्यतत्र । इति * रामम् ॥२३२॥
त्वद्वधकामंदिष्टंकुरुतेहेतुंमदीयमपहरणम् । इति * रामम् ॥२३३॥
इत्युक्तोयत्पत्न्या कोपात्संरक्तलोचनःक्रूरः ।
सीतामाहदशास्यस्तं देवमहंसदाभजे रामम् ॥ ॥२३४॥
त्वांनाशयामिदुष्टामद्येत्युक्त्वा जगादरक्षन्तीः ।
यद्वेषीदुष्टास्त्रीस्तं देवमहं सदाभजे रामम् ॥ ॥२३५॥
राक्षस्यश्शृणुतवचो ममवैदेहीमिमांशुभां वशगाम् ।
कुरुतेत्यवदद्यद्विट्तंदेवमहं सदाभजे रामम् ॥ ॥२३६॥
आवर्जयतैनां द्राङ्मृदुवाक्यैर्दानभेददण्डाद्यैः ।
इत्यवदद्यद्विट्तास्तं देवमहं सदाभजे रामम् ॥ ॥२३७॥
आदिश्येत्थंयद्विद्भूयस्सीतासमीपमागत्य ।
कोपादतर्जयत्तां तं देवमहं सदाभजे रामम् ॥ ॥२३८॥
अथधान्यमालिनीसायद्विट्पत्नीपतिंपरिष्वज्य ।
वाक्यं सरसमवादीत्तंदेवमहं सदाभजे रामम् ॥ ॥२३९॥
क्रीडमयासुन्दर्या समवलयानाथभार्ययातुष्टः । इति * रामम् ॥२४०॥

अनयाकिमनिच्छन्त्यावैदेह्यातेसुखंभवेत्कान्त ।
इतिसायद्विषमभणत्तं देवमहं सदाभजे रामम् ॥ ॥२४१॥

उभयेच्छाखलुसुखदारसिकैरुक्ताजनैश्शृणुत्वमिह ।
इतिसायद्विषमभणत्तं देवमहं सदाभजेरामम् ॥ ॥२४२॥

इत्युक्तःपद्माक्ष्याप्रहसन्पत्न्याययौगृहंस्त्रीभिः ।
यद्वेषीदशवदनस्तं देवमहं सदाभजे रामम् ॥ ॥२४३॥

तस्मिन्स्वगृहंप्राप्तेयत्स्त्रियमभितस्स्त्रियस्समावृण्वन् ।
भीतिकराविकृताङ्ग्यस्तं देवमहं सदाभजे रामम् ॥ ॥२४४॥

राक्षसराजस्यत्वं भार्यात्वं नानुमन्यसेहिकुतः ।
इतियत्स्त्रियमहसंस्तास्तं देवमहं सदाभजे रामम् ॥ ॥२४५॥

तत्रैकजटानाम्नीकाचिद्वचनं जगादयत्पत्नीम् ।
रक्षस्त्रीमध्यगतां तं देवमहं सदाभजे रामम् ॥ ॥२४६॥

विधिकुलजातस्य त्वं भार्याभवरावणस्यमद्वचसा ।
इति सोचेयत्पत्नीं तं देवमहं सदाभजे रामम् ॥ ॥२४७॥

अथमार्जारसदृक्षेक्षणयुग्मोचेवचस्तदाविकटा ।
यत्पत्नीं मुसलकरातं देवमहं सदाभजे रामम् ॥ ॥२४८॥

असकृन्निर्जितदेवं प्राप्तंपतिमद्यरावणं जहिमा ।
इतिसोचेयत्पत्नीं तं देवमहं सदाभजे रामम् ॥ ॥२४९॥

❀ अन्याकाचिदवोचज्जन्मान्तरपुण्यतस्त्वमेनमियाः ।
इतियत्स्त्रियमतिदीनां तं भजधिषणेश्रितेष्टदं रामम् ॥ ॥२५०॥

अथदुर्मुखीतिकाचिद्यत्पत्नींगामुवाचकुटिलमतिः ।
रावणवशगांकर्तुं तं भजधिषणेश्रितेष्टदं रामम् ॥ ॥२५१॥

त्वधीनं राज्यमिदंकुरुते राजास्वकीयमपिदेहम् ।
इतियत्पत्नीं सोचेतं भजधिषणेश्रितेष्टदं रामम् ॥ ॥२५२॥

मन्दोदर्याद्यानां महिषीणां त्वंभवेश्शिरोग्रस्था ।
इति यत्पत्नींसोचेतं भजधिषणेश्रितेष्टदं रामम् ॥ ॥२५३॥
नतपतितद्भयतोऽर्कोवातिनवायुर्ददातिजलमब्दः।इति*रामम् ॥२५४॥
विफलंमाकुरुयौवनमजरामरणंभजत्वममरारिपुम् । इति * रामम्॥२५५॥
कथितंतवसाधुवचोभामिनिकल्याणितोषतश्शृणुमे।इति*रामम्॥२५६॥
अथराक्षस्यःपरितस्स्थित्वापरुषंवचोभृशंबभणुः ।
यत्पत्नींनिकटस्थांतं भजधिषणेश्रितेष्टदं रामम् ॥ ॥२५७॥
प्रत्याहरबुद्धिंत्वंरामात्सीतेनचेद्धनामत्वाम् ।
इतियत्पत्नीमूचुस्तंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२५८॥
सन्त्यजयाशांरामेभजलंकेशंनचेद्गळेपिष्मः । इति * रामम् ॥२५९॥
भक्त्यालंभर्तरितेत्यकैश्वर्येभजाद्यलङ्केभ्यम् । इति * रामम् ॥२६०॥
त्रैलोक्याभोक्तारं विधिनप्तारंभजेहभर्तारम् ।
इतियांस्त्रियमूचुस्तास्तंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२६१॥
श्रुत्वाथराक्षसीनांपरुषं वचनंजगादयत्पत्नी ।
प्रतिगिरमश्रुमुखीतास्तंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२६२॥
युष्मत्कथितंवचनंलोकविरुद्धं विभातिराक्षस्यः ।
इतितायत्पत्न्यूचेतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२६३॥
स्रष्टाजातिं विविधांसृष्ट्वाममजातियोगमप्यतनोत् ।
इतितायत्पत्न्यभणत्तंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२६४॥
मानुषजात्युत्पन्नारक्षोभार्याकथंभवेयमहम् । इति * रामम् ॥२६५॥
यूयंखादतकामं देहं मेवोवचोनशृणवानि । इति * रामम् ॥ ॥२६६॥
छायादेवीसूर्यंपतिमिवरामं कदापिनोजह्याम् । इति * रामम् ॥२६७॥
पौलोमीवमहेन्द्रं स्वनुरक्ताऽहंभवामिरघुनाथे । इति * रामम् ॥२६८॥
लोपामुद्राऽगस्त्यंपतिमिवरामंभजाम्यहंसततम् । इति * रामम् ॥२६९॥

श्रुत्वासीतावचनंराक्षस्यस्तास्ततर्जुरतिवेलम् ।
यत्पत्नींदुःखार्तां तं भजधिषणेश्रितेष्टदं रामम् ॥ ॥२७०॥
अपमार्जन्तीबाष्पंयत्पत्न्यगमत्सुरक्षितातामिः ।
तांशिशुपांसुपत्रांतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२७१॥
वृक्षस्थोयद्दूतोहनुमान्पश्यन्सतींसुदुःखार्ताम् ।
अश्रूणोद्धत्संनरीतींस्तंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२७२॥
सीतेपर्याप्तोयंभर्तृस्नेहोनिदर्शितोलमिति ।
विनतोचेयत्पत्नीं तं भजधिषणेश्रितेष्टदं रामम् ॥ ॥२७३॥
सर्वत्रैवातिक्रुतंव्यसनायैवप्रकल्पतेभद्रे ।
इतिसोचे यत्पत्नींतं भजधिषणेश्रितेष्टदं रामम्॥ ॥२७४॥
अन्याविकटानाम्नीमुष्टिंचोद्यम्यगर्जतीक्रुद्धा ।
यत्पत्नीमवदद्वांतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२७५॥
नचनःकुरुषेवाक्यंदुर्बुद्धिस्त्वंहितंप्रयुक्तमपि ।
इतियत्पत्नींसोचेतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२७६॥
अलमश्रुमोचनेनत्यजशोकंत्वंभजाद्यलङ्केशम् ।
इतिसोचेयद्रमणींतंभजधिषणेश्रितेष्टदं रामम्॥ ॥२७७॥
रम्याण्युद्यानानित्वंसश्वरराक्षसाधिपेनात्र। इति * रामम् ॥२७८॥
भजभर्तारमिमंत्वं नोचेत्त्वाऽहंचभक्षयिष्यामि। इति * रामम् ॥२७९॥
अथचण्डोदर्यूचेशूलंहस्तेप्रगृह्यदुर्वचनम् ।
यत्पत्नींचलजिह्वातं भजधिषणेश्रितेष्टदं रामम् ॥ ॥२८०॥
नासोत्कंपिकुचां त्वांदृष्ट्वामेवपुषिदौहृदोप्यासीत् ।
इतियत्पत्नींसोचेतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२८१॥
तवहृदयाब्जंशीर्षंप्लीहं मांसंचभक्षयिष्यामि ।
इतियत्पत्नींसोचेतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२८२॥

प्रघसाऽथोचेवचनं कण्ठंतेऽद्यप्रपीडयाम्यचिरात् ।
इतियत्पत्नींदुष्टातंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२८३॥

वाचमजामुख्यूचेदेहंचास्याविशस्यविभजाम ।
इतियत्पत्न्याःपुरतस्तंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२८४॥

पेयंलेह्यं साद्यं कृत्वाचैनां प्रभक्षयामवयम् ।
इतियत्स्त्र्यग्रत ऊचेतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२८५॥

उक्तिरजामुख्योक्तातोषंकुरुते ममेतिशूर्पणखा ।
यत्पत्न्यग्रतऊचेतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२८६॥

इत्थंसुभत्सर्यमानायत्पत्नीराक्षसीभिरतिवेलम् ।
प्रारोदीद्बाष्पाक्षीतंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२८७॥

अथयत्पत्नीत्रस्तामध्येस्थित्वाजगादरक्षस्त्रीः ।
वाचमधोमुखकमलातंभजधिषणेश्रितेष्टदं रामम् ॥ ॥२८८॥

कामंखादतयूयं नशृणोमित्वद्वचोऽहमीषदपि ।
इतिगिरमभणद्यत्स्त्रीतंसाधुजनस्तुतंभजे रामम् ॥ ॥२८९॥

अथसाऽशोकस्यशिफां विपुलामालम्ब्यभर्तृगतचित्ता ।
उचेयत्पत्न्यरुदत्तंसाधुजनस्तुतंभजे रामम् ॥ ॥२९०॥

कौसल्येचसुमित्रेदुर्लभमरणाऽहमत्रसीदामि ।
इतियत्पत्न्यरुदत्सातंसाधुजनस्तुतंभजे रामम् ॥ ॥२९१॥

धन्याद्रक्ष्यन्तिजनास्तंद्रष्टुंजीवनं ममासुलभम् । इति * रामम् ॥२९२॥

पापंकीदृगकरवं त्विहजन्मनिवाऽथपूर्वजन्मनिवा।इति*रामम्॥२९३॥

रक्षस्त्रीणांपुरतःप्राणास्त्यक्तुं कथंमयाशक्याः । इति * रामम् ॥२९४॥

रामंविनावसन्त्याममजीवनधारणेकिमस्तिफलम्। इति * रामम् ॥२९५॥

येनविराधोरण्येनिहतः किन्नाभिपद्यतेसचमाम्। इति * रामम् ॥२९६॥

यश्चजनस्थानस्थानवधीत्किन्नाभिपद्यतेसचमाम्।इति * रामम् ॥२८७॥

राघवबाणानांभुविगतिरोध्यब्धौचकोऽस्तिबलशाली ।
इतियत्पत्न्यरुदत्सा तं साधुजनस्तुतंभजे रामम् ॥ ॥२९८॥
ममविरहात्स्वर्गेकिंयातोरामोमहीतलंत्यक्त्वा । इति * रामम् ॥२९९॥
धन्यादेवास्सिद्धानाथं द्रक्ष्यन्तिमेऽद्यमुनयोऽपि । इति * रामम् ॥३००॥
रामेणवियुक्ताऽहंप्राणांस्त्यक्ष्याम्यशोकवनिकायाम् । इति* रामम् ३०१॥
इत्थंयत्पत्नींतांविलपन्तींतांविलोक्यराक्षस्यः ।
राज्ञ्याख्यातुंजग्मुस्तंसाधुजनस्तुतं भजे रामम् ॥ ॥३०२॥
ताभिस्सीतांदृष्ट्वाऽनार्याभिस्तर्जितांतुयत्पत्नीम् ।
त्रिजटाऽऽहाऽसृक्पस्त्रीस्तंसाधुजनस्तुतंभजे रामम् ॥ ॥३०३॥
खादतयूयमनार्यादेहंस्वंस्वंयथेच्छमितिसोचे ।
यत्पत्न्याःपुरतोगांतंसाधुजनस्तुतंभजे रामम् ॥ ॥३०४॥
स्वप्नोदृष्टोऽद्यमयाराक्षसनाशंप्रतीतिगामभणत् ।
यत्पत्न्याःपुरतस्सा तं साधुजनस्तुतंभजे रामम् ॥ ॥३०५॥
अथपृष्टात्रिजटासारक्षस्त्रीभ्यःप्रवक्तुमारेभे ।
यत्पत्न्याःपुरतोगां तं साधुजनस्तुतंभजे रामम् ॥ ॥३०६॥
गजदन्तमयींशिबिकामारुह्याविक्षदत्रराम इति ।
साऽऽहाग्रेयत्पत्न्यास्तं साधुजनस्तुतंभजे रामम् ॥ ॥३०७॥
शुक्लांबरमाल्यधरोरामोदृष्टस्ससीत इतिवाचं ।
साऽऽहाग्रेयत्पत्न्यास्तं साधुजनस्तुतंभजे रामम् ॥ ॥३०८॥
रामस्सानुजसीतःप्रापदयोध्यांविमानगत इतिगाम् । इतिसाऽऽहा* रामम् ॥
नहिरामोऽन्यैश्शक्योजेतुंदेवासुरादिभिस्सर्वैः । इति साऽऽहा* रामम् ॥
दृष्टस्तैलाभ्यक्तोधृतकरवीरस्स्रुगद्यराजेति । इतिसाऽऽहा* रामम् ॥३११॥
गर्दभवाहाद्भीतोऽवाक्छीर्षोभूतलेपपातरुदन् ।
यद्वेषीत्यवदत्सातं साधुजनस्तुतंभजे रामम् ॥ ॥३१२॥

यद्वेषिणमथकालींकंठेबध्वाचकर्षयाम्यदिशम् ।
इत्यवदत्स्वप्नेसातंसाधुजनस्तुतंभजे रामम् ॥ ॥३१३॥

दृष्टायद्वेषिसुताः काल्याकृष्टावटश्ववाश्वमया ।
स्वप्नेऽद्येत्यवदत्सातं साधुजनस्तुतंभजे रामम् ॥ ॥३१४॥

दत्रमयैकोदृष्टश्श्वेतच्छत्रो विभीषणस्स इति ।
साऽऽहपुरोयत्पत्न्यास्तं साधुजनस्तुतंभजे रामम् ॥ ॥३१५॥

यद्भक्तोमत्तगजं चारूह्ययौविभीषणोद्युपथम् ।
इत्यवदत्तास्त्रिजटातं साधुजनस्तुतंभजे रामम् ॥ ॥३१६॥

लङ्काऽब्धौपतिताऽभूद्दग्धायद्दूतवालदहनेन ।इत्य * रामम् ॥३१७॥

तदलंकूरवाक्यैर्याचामिनां वयंचयत्पत्नीम् । इत्य * रामम् ॥३१८॥

याचध्वंराक्षस्योयत्पत्नीं तांसमेत्यमृदुवचसा । इत्य * रामम् ॥३१९॥

अलमेषाऽस्मांस्त्रातुं भीतेर्यत्कोपवह्निजातायाः । इत्य * रामम् ॥३२०॥

यत्पत्न्यस्माद्विषयेप्रणिपातादेवरक्षकोभवति । इत्य * रामम् ॥३२१॥

स्मृत्वायद्विड्वचनं श्रुत्वासन्तर्जनंरिपुस्त्रीणाम् ।
विललापोच्चैस्सीतातंसाधुजनस्तुतं भजेरामम् ॥ ॥३२२॥

नाऽकालेभवतिमृतिःपत्यात्यक्ताऽप्यसून्दधामि खलु ।
इतियत्स्त्र्यरुदत्सोच्चैस्तंसाधुजनस्तुतंभजे रामम् ॥ ॥३२३॥

हारामलक्ष्मणौवा रक्षकशून्याऽधुनाविपद्यामि । इति * रामम् ॥३२४॥

कौसल्येमसुमित्रेहाश्वश्र्वाऽधुनाविपद्यामि । इति * रामम् ॥३२५॥

भूमौशय्यानियमःपातिव्रत्यं ममाऽद्यविफलमहो । इति * रामम् ॥३२६॥

दातात्विषस्यकश्चिन्नहिमेशस्त्रस्यवाऽत्रलङ्कायाम् । इति * रामम् ॥३२७॥

इतियद्वधूयस्सतीसोच्चैराक्रन्द्यपुष्पितेवृक्षे ।
वेण्युद्बन्धनमकरोत्तं साधुजनस्तुतंभजे रामम् ॥ ॥३२८॥

शीघ्रंयमस्यमूलंयामीत्युक्त्वापतिंससौमित्रम् ।
यत्स्मृत्यसरदथहृदयेतं साधुजनस्तुतंभजे रामम् ॥ ॥३२९॥

यत्पत्न्यास्तुशुभाङ्ग्याश्शोकाकरणानिपूर्वसिद्धानि ।
शकुनानिबहून्यभवंस्तंसाधुजनस्तुतंभजे रामम् ॥ ॥३३०॥

अथयद्दूतोहनुमान्सर्वंत्रिजटावचस्समश्रौषीत् ।
वृक्षस्थोऽस्पष्टतनुस्तं साधुजनस्तुतंभजे रामम् ॥ ॥३३१॥

उद्योगंसीतायारक्षस्त्रीणांचभर्त्सनंबहुधा ।
यद्दूतोऽथापश्यत्तंसाधुजनस्तुतंभजे रामम् ॥ ॥३३२॥

रक्षस्त्रीणांपुरतस्सीतासंभाषणं कथंमेस्यात् ।
इति यद्दूतोऽमन्यततं साधुजनस्तुतंभजे रामम् ॥ ॥३३३॥

त्यक्ष्यतिजीवितमधुनासीतानाश्वासितायदीहमया।इति*रामम्॥३३४॥

सीताकिमुवाचत्वामितिपृष्टोऽहंचकिंवदिष्यामि। इति * रामम्॥३३५॥

अन्तरमासाद्याहं वैदेह्याश्वासनंकरोम्यधुना । इति * रामम् ॥३३६॥

अस्पष्टांगोऽत्रस्थोवाचंमृदुलामुदाहरिष्यामि । इति * रामम् ॥३३७॥

सीतासंस्कृतवाचं मां दृष्ट्वा कीशरूपमेतिभयम्। इति * रामम्॥३३८॥

❀ अथमांगृह्णीयुस्तेवेगादाप्लुत्यराक्षसाबलिनः ।
इतियद्दूतोऽमन्यततं चिन्तितसीतमाश्रये रामम् ॥ ॥३३९॥

मध्यकृतभाषणेद्राक्सीतात्यक्ष्यत्यसूनशोकवने।इति * रामम् ॥३४०॥

विकृतदूतेनविभोस्सर्वं कार्यंप्रणश्यतिह्यचिरात्। इति * रामम्॥३४१॥

जलनिधितरणप्रभृतिकर्मतत्सफलं मयाऽद्यकरणीयम् ।
❀ इतियद्दूतोऽमन्यततं चिन्तितसीतमाश्रये रामम् ॥ ॥३४२॥

इतिसञ्चिन्त्यस्वान्ते यद्दूतोरामभद्रगुणनिकरान् ।
तत्राऽऽरेभेवक्तुं चिन्तितसीतमाश्रये रामम् ॥ ॥३४३॥

रामोनामपृथुश्रीर्दशरथपुत्रेष्वयंवरोज्येष्ठः ।
इतियद्दूतोऽभाणीत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३४४॥
पितृवचनंपालयितुंवनमविशत्स्त्रीयुतोऽनुजेनसमम् । इति*रामम् ॥
अथदशवदनोऽश्रौषीज्जनशून्यंस्वंतदाजनस्थानम् ।इति*रामम् ।३४६॥
सहजामुखमथदृष्ट्वाक्रोधात्सीतांजहारदशवदनः। इति * रामम् ॥३४७॥
रामोऽथजटायुगिरास्त्रीवृत्तज्ञोजगामसुग्रीवम् । इति * रामम् ॥३४८॥
अथसुग्रीवप्रहिताःकपयःप्रागुर्विचेतुमवनिजनिम् ।इति *रामम् ॥३४९॥
संपातिगिराऽद्याहंसीतांद्रष्टुंसमागमंलङ्काम् । इति * रामम् ॥३५०॥
रामेणोक्तंलक्षणमस्यांपश्यामिसर्वमनवद्यम् । इति * रामम् ॥३५१॥
इत्थंयद्दूतोक्तिं श्रुत्वैक्षतशिंशुपागमथसीता ।
उन्नम्यमुखंभीरुस्तांचिन्तितसीतमाश्रये रामम् ॥ ॥३५२॥
द्राक्तिर्यगूर्ध्वमथसादृष्ट्वावृक्षेददर्शयद्दूतम् ।
कपिपतिमुख्यामात्यंतं चिन्तितसीतमाश्रये रामम् ॥ ॥३५३॥
अथयद्दूतंदृष्ट्वास्वप्नेऽश्लीलःकपिर्मयादृष्टः ।
इतिसीताभृशमरुदत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३५४॥
स्वप्नेनायंदृष्टोनिद्रामेनास्तिरामहीनायाः ।
इतियत्पत्न्यरुदत्सातं चिन्तितसीतमाश्रये रामम् ॥ ॥३५५॥
स्वप्नेयदिदृष्टोऽयंस्वस्त्यस्तुमदीयबन्धुनिवहेभ्यः ।
इत्यरुदद्यत्पत्नीतं चिन्तितसीतमाश्रये रामम् ॥ ॥३५६॥
रामंविचिन्तयन्तीसततंपश्यामितत्कथोक्तिकरम् ।इत्य* रामम् ॥३५७॥
सुव्यक्तंवचनमिदंवक्तानैवप्रदृश्यतेहिमया । इत्य * रामम् ॥३५८॥
इन्द्रायबृहस्पतयेविधयेप्यनलायवोनमोस्तुमम । इत्य * रामम् ॥३५९॥
कपिनोक्तंवचनमिदं सत्यंभूयान्ममास्तिथद्यायुः ।
इत्यमनुतयत्पत्नीतं चिन्तितसीतमाश्रये रामम् ॥ ॥३६०॥

अथयद्दूतोहनुमान्विटपादवतीर्य तां नमस्कृत्वा।
उपसृत्योचेवाचं तंचिन्तितसीतमाश्रये रामम् ॥ ॥३६१॥

सोञ्जलिम.धायशिरस्यूचेकात्वंवदेतियत्पत्नीम् ।
शाखामालिङ्गन्तीं तंचिन्तितसीतमाश्रये रामम् ॥ ॥३६२॥

तत्रनेत्राभ्यां बाष्पं स्रवति किमर्त्थंवदांबमेवचनम् ।
इतियद्दूतोऽवादीत्तंचिन्तितसीतमाश्रये रामम् ॥ ॥३६३॥
लक्षणतस्त्वंमहिषीभासिधरेशस्यभूपकन्यात्वम् । इति * रामम् ॥३६४॥
यदिरावणेनसीताऽनीतात्वंमेवदाशुसत्यवचः । इति * रामम् ॥३६५॥
इत्थंयद्दूतगिरंश्रुत्वासीतास्वभर्तृकुशलयुताम् ।
अवदत्तंप्रतिवचनंतंचिन्तितसीतमाश्रये रामम् ॥ ॥३६६॥

दुहिताजनकस्याहंसीतानाम्नाप्रियाऽस्मिरामस्य ।
इतिसोचेयद्दूतं तं चिन्तितसीतमाश्रये रामम्॥ ॥३६७॥

द्वादशवर्षाणिगृहेन्यवसंभर्त्रासुखानिभुञ्जाना । इति सोचे * रामम् ॥॥
अथराडभिषेचयितुंसोपाध्यायःप्रचक्रमेपुत्रम् । इति सोचे * रामम् ॥॥
कैकेयीनिर्बन्धाद्रामोराज्ञावनंप्रतिप्रहितः । इतिसोचे * रामम्॥३७०॥
पितृवाक्यंपालयितुं प्रययौभ्रात्रामयापिरघुनाथः।इति * रामम्॥३७१॥
मामहरद्दशवदनस्तस्करवृत्त्यापतिव्रतांदुष्टः । इति * रामम् ॥३७२॥
द्वौमासाववधिर्मेजीवितभरणेकृतोऽस्तिदुष्टेन । इति * रामम् ॥३७३॥
ततऊर्ध्वमहंप्राणान्कृपणांस्त्यक्ष्यामिभर्तृशोककृशा।इति*रामम्॥३७४॥
इति तस्याःश्रुत्वागां सान्त्वंवचनं प्रवक्तुमारेभे ।
यद्दूतोवैदेहींतंचिन्तितसीतमाश्रये रामम् ॥ ॥३७५॥

रामस्याहंदूतस्सन्देशात्त्वत्समीपमापमिति ।
यद्दूतस्तामभणत्तंचिन्तितसीतमाश्रये रामम् ॥ ॥३७६॥
योवेदब्रह्मास्त्रं वेदान्वेदप्रियस्सरामा इति । यद्दूतस्तामभण * रामम ॥

भर्तुस्तेऽवरजस्त्वामकरोदभिवादनंभृशंभक्त्या ।
इतियद्दूतोऽभाणीत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३७८॥

श्रुत्वाकुशलंदेवीसावरजस्यप्रियस्यसन्तुष्टा ।
गिरमूचेयद्दूतंतंचिन्तितसीतमाश्रये रामम् ॥ ॥३७९॥

कल्याणीगाथेयंजीवन्प्राणीसुखंसदैतीति ।
इतिसोचेयद्दूतं तं चिन्तितसीतमाश्रये रामम् ॥ ॥३८०॥

यद्दूतोयत्पत्नी चालापन्तौप्रचक्रतुस्तत्र ।
स्मितवदनावन्योन्यं तं चिन्तितसीतमाश्रये रामम् ॥ ॥३८१॥

आगच्छन्तंसविधं दृष्ट्वातंरावणोऽयमितिबुद्ध्या ।
यत्पत्न्यस्थादवनौतं चिन्तितसीतमाश्रये रामम् ॥ ॥३८२॥

यद्दूतोदुःखार्तांसीतान्दृष्ट्वाकृताञ्जलिर्धीमान् ।
पुरतोऽतिष्ठन्मौनीतं चिन्तितसीतमाश्रये रामम् ॥ ॥३८३॥

दृष्ट्वायत्पत्न्यथसापुरतःकृतवन्दनंहनूमन्तम् ।
वाचमवोचदनीचांतंचिन्तितसीतमाश्रये रामम् ॥ ॥३८४॥

मायावीदशवदनस्त्वंयदिमेशोककृन्नतेकुशलम् ।
इतितंयत्पत्न्यभणत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३८५॥

यदिराघवदूतस्त्वं कुशलंतेऽस्तुप्रवग्घिरामगुणान् ।
इतितंयत्पत्न्यभणत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३८६॥

स्वप्नेपिहिनापश्यं रामंस्वप्नोऽपिमत्सरीमेऽभूत् ।
इतितंयत्पत्न्यभणत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३८७॥

जाग्रदवस्थायां मेस्वप्नविकारौ कथं प्रजायेते ।
इतियत्पत्न्यचिचिन्तत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३८८॥

इतिमनसिविचिन्त्यधिया मत्वामायात्रिनन्दशास्यन्तम् ।
अभजन्मौनं यत्स्त्रीतं चिन्तितसीतमाश्रये रामम् ॥ ॥३८९॥

बुध्वासीताचिन्तितमथयद्दूतोबभाणतोषकरम् ।
प्रतिवचनंहनुमांस्तांतंचिन्तितसीतमाश्रये रामम् ॥ ॥३९०॥
युद्धेदशवदनगळच्छेत्ताऽद्यत्वामुवाचकुशलगिरम् ।
इतियद्दूतोऽवादीत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३९१॥
अभिवाद्यमहासत्वस्सौमित्रिस्त्वामुवाच कुशलगिरम् ।
इति यद्दूतोऽवादीत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३९२॥
कपिसङ्घानांराजासुग्रीवस्त्वामुवाचकुशलगिरम् ।
इतियद्दूतोऽवादीत्तं चिन्तितसीतमाश्रये रामम् ॥ ॥३९३॥
आख्यातंतेसर्वंमामभिभाषस्वरामदूतंत्वम्। इति यद्दूतो*रामम्॥३९४॥
दाशरथेर्दूतोऽहंसुग्रीवगिरासमुद्रमतरमिमम्।इतियद्दूतो*रामम्॥३९५॥
तवकुशलंप्रार्थयतांकपिवीराणांशुचंविनेष्यामि। इतियद्दूतो * रामम्॥
दिष्ट्याब्धेस्तरणमभूत्प्राप्स्यामियशश्चदर्शनेनतव।इति यद्दूतो*रामम्॥
विश्वासार्थंसीतेतवरामगुणानवोचमतिशुभदान्। इति यद्दूतो*रामम्॥
देवित्वद्भर्तात्वांद्राङ्नयितेतेविमुञ्चशोकंत्वम्। इति यद्दूतो * रामम् ॥
पश्यत्वमंगुळीयकमेतद्रामेणदत्तमवनिसुते । इति यद्दूतो * रामम् ॥
तवविश्वासार्थमिदंचानीतं रामनामालिखितवहम् ।
इतियद्दूतोऽवादीत्तंचिन्तितसीतमाश्रये रामम् ॥ ॥४०१॥
अथतत्प्रतिगृह्यद्राक्स्वकराभ्यांसाननन्दवैदेही ।
यद्दूतेनानीतं तंसीतावल्लभं भजे रामम् ॥ ॥४०२॥
भर्तारमिवप्राप्तं मेनेदृष्ट्वांगुळीयकंभर्तुः ।
यत्पत्नीजनकसुतातंसीतावल्लभं भजे रामम् ॥ ॥४०३॥
अथयद्दूतोक्त्यासा भर्तूरामस्यगुणगणं सर्वम् ।
ज्ञात्वाऽऽनन्दंप्रापत्तं सीतावल्लभंभजे रामम्॥ ॥४०४॥

सुग्रीवस्यचमैत्रीं संपातिकथां समुद्रतरणमपि ।
यद्दूतोक्त्याऽज्ञासीत्तंसीतावल्लभंभजे रामम् ॥ ॥४०५॥

द्रक्ष्यसिशीघ्रंरामं त्वद्ध्यानपरं सहानुजं सीते ।
इतियद्दूतोऽभाणीत् तं सीतावल्लभंभजे रामम् ॥ ॥४०६॥

रामोल्पंयदिसुप्तस्सीतेतिवदन्प्रबुध्यतेझटिति ।इतियद्दूतोऽभा *रामम्॥
रामस्तवलाभार्थंकृतसङ्कल्पोऽभजत्कपिंसुहृदम्।इतियद्दूतो * रामम् ॥

श्रुत्वायद्दूतोक्तिंसीताऽवोचत्तदागिरंसाध्वी ।
धर्मार्थाभ्यांग्रथितांतंसीतावल्लभं भजे रामम् ॥ ॥४०९॥

ऐश्वर्येव्यसनेवाकर्षतिनियतिर्बलात्पुमांसमपि ।
इतितंयत्पत्न्यूचेतंसीतावल्लभं भजे रामम् ॥ ॥४१०॥

विधिवशतस्सौमित्रिंरामंमांचप्रमोहितान्पश्य।इतितंयत्पत्न्यू*रामम् ॥
पारंशोकस्यकदाभर्ता मेसंगमिष्यतिब्रूहि। इतितंयत्पत्न्यूचे* रामम् ॥
द्वौमासाववधिर्मेवर्तेतेप्राणधारणेहनुमन्। इतितंयत्पत्न्यूचे * रामम् ॥

इत्थंतांजल्पन्तीं स्वबलंहनुमान्दिदर्शयिषुराराात् ।
यत्पत्नीमभणद्रांतंसीतावल्लभं भजे रामम् ॥ ॥४१४॥

अंबत्वामधुनैवप्रभुनिकटमहं नयामिपश्यबलम् ।
इतियत्स्त्रियमाहसगां तं सीतावल्लभं भजे रामम् ॥ ॥४१५॥

ममपृष्ठमुपारोहत्वामद्यवहन्प्रभुंसमीक्षेऽहम्। इतियत्स्त्रियमाह * रामम् ॥
प्रस्रवणस्थायत्वां रामायाहंददानिपरिशुद्धाम्।इतियत्स्त्रियमाह*रामम्॥
मामनुगन्तुमशक्ताःप्रभुसविधंयान्तमाशराहीमे।इतियत्स्त्रियमाह*रामम्॥

इत्थंतस्यगिरंसाश्रुत्वातोषाज्जगादयत्पत्नी ।
तंस्वल्पतनुंमत्वातंसीतावल्लभं भजे रामम् ॥ ॥४१९॥

अल्पशरीरस्त्वंमेभर्तुस्सविधंकथंविनेष्यासिमाम् ।
इतितंयत्पत्न्यवक्तंसीतावल्लभं भजे रामम् ॥ ॥४२०॥

श्रुत्वासीतावचनं यद्दूतः कायवृद्धिमतनोद्द्राक् ।
तस्याविशयानिवृत्त्यैतं सीतावल्लभं भजे रामम् ॥ ॥४२१॥

मन्दरमेरुसदृक्षं कृत्वादेहंवचोबभाणेदम् ।
यत्पत्नींतां हनुमांस्तं सीतावल्लभंभजे रामम् ॥ ॥४२२॥

अंबसनाथांलङ्कां भर्तृसमीपं तवाद्यनेष्यामि ।
इत्याहसयत्पत्नींतं सीतावल्लभंभजे रामम् ॥ ॥४२३॥

त्यजशोकंभजमोदंद्रक्ष्यसि रामंविदेहजेशीघ्रम्।इत्याहसयत्पत्नीं * रामम्

अथयत्पत्नीहनुमद्वीबलगतिसत्वदर्शनात्तुष्टा ।
वचनमिदंतंप्रोचेतं सीतावल्लभं भजे रामम् ॥ ॥४२५॥

अज्ञानात्कपिबुद्धिंत्वांमत्वाऽहंवचोऽवदंबहुधा ।
इतितंयत्पत्न्यूचेतं सीतावल्लभं भजे रामम् ॥ ॥४२६॥

कामंत्वंपर्याप्तोहन्तुं युद्धेनिशाचरान्सर्वान्।इतितंयत्पत्न्यूचेतं * रामम्॥

रामस्ययशोहीयेच्छस्तैःक्रूरैस्त्वयाऽद्यरक्षोभिः।इतितंयत्पत्न्यूचे*रामम्॥

रामादन्यस्याङ्गंनस्पृश्यंबुद्धिपूर्वकंहिमया।इतितंयत्पत्न्यूचेतं * रामम् ॥

अथवामांक्रव्यादागूढेदेशेप्रवेशयिष्यन्ति।इतितंयत्पत्न्यूचेतं * रामम् ॥

आरंभोऽथमदर्थोविफलत्वंयातिबुद्धिविहितोऽपि।इतियत्पत्न्यू * रामम्

रावणकृतसंस्पर्शेविवशाऽनीशाचकिंकरिष्यामि।इतितंयत्पत्न्यू *रामम्

इतिगिरमेतांश्रुत्वाप्रतिगिरमवदत्कुशाग्रधीरथताम् ।
यद्दूतःपवनसुतस्तंसीतावल्लभंभजे रामम् ॥ ॥४३३॥

सदृशंजनकसुतेतेसाध्व्यावचनंसुधीप्रपूज्यमिदम् ।
इतियद्दूतोऽभाणीत्तंसीतावल्लभंभजे रामम् ॥४३४॥

त्वदृतेकाह्यन्यास्त्रीब्रूयादेवंवचोऽतिगंभीरम् ।
इतियत्स्त्रियमाहकपिस्तंसीतावल्लभंभजे रामम् ॥ ॥४३५॥

स्नेहप्रस्कन्नधियावचनमिदन्तेमयाऽधुनाकथितम्।इतियत्स्त्रिय *रामम्॥

अद्यैवत्वांभर्त्रायोजयितुंवाचमित्थमवदमहम् इतियत्स्त्रियमाह *रामम्॥
ममपृष्ठगताऽऽयातुंयदिनोत्सहसेऽवदेह्यभिज्ञानम्।इतियत्स्त्रिय*रामम्॥
इतियद्दूतार्थनयावैदेह्यूचेपुरातनीं गाथाम् ।
नाथायनिवेदयितुंतं सीतावल्लभं भजे रामम् ॥ ॥४३९॥
अवसावचित्रकूटेमन्दाकिन्याह्वदूरतश्चावाम् ।
इतितंयत्स्याहकथांतंसीतावल्लभं भजेरामम्॥ ॥४४०॥
अथपर्यायेणाङ्केत्वंममसुचिरं तदाऽस्वपोनाथ।इतितंयत्स्त्र्य * रामम् ॥
अथमांसेच्छुःकाकोलोष्टेनानिवारितोऽप्यखादन्माम्। इतितं * रामम् ॥
उत्प्लुत्योत्प्लुत्यसमां विददारोरस्थलेपुनर्दुष्टः।इतितंयत्स्त्र्य * रामम्॥
उत्कर्षन्तींरशनांकाकनिरासार्थमैक्षथास्त्वंमाम्।इतितंयत्स्त्र्य * रामम्॥
अथबोधंप्राप्तस्त्वंमामद्राक्षीस्स्तनस्रवद्रक्तां । इतितंयत्स्त्र्य * रामम् ॥
अथरक्तनखेकाकेप्रायोक्षीस्त्वंरुषाविधात्रस्त्रम्।इतितंयत्स्त्र्य * रामम्॥
ब्रह्मास्त्रभूतदर्भत्रस्तःकाकोऽचरत्रिलोकींसः । इतितंयत्स्त्र्य * रामम् ॥
कमपिशरण्यमलब्ध्वात्वामेवापच्छरण्यमथकाकः ।
इतितं यत्स्याहकथांतं सीतावल्लभंभजे रामम् ॥ ॥४४८॥
अस्त्रममोघं कर्तुंदक्षिणनेत्रं तदीयमहरस्त्वम् ।
इतितंयत्स्याहकथां तं सीतावल्लभं भजेरामम् ॥ ॥४४९॥
शरणागतमपराधिनमपिरक्षित्वाकुलोनरक्षसिमाम् ।
इतियत्स्याहहनूमतितंसीतावल्लभं भजे रामम् ॥ ॥४५०॥
इत्थंमद्वचनंत्वंरामायकपेवदाश्वभिज्ञानम्।इतियत्स्याहहनूम* रामम्॥
इत्थंयत्पत्न्युक्तंवचनंश्रुत्वाजगादहनुमान्सः ।
तांप्रतिवचनंहृष्टस्तंसीतावल्लभंभजे रामम् ॥ ॥४५२॥
❀ दिष्ट्यादृष्टाभवतीत्यजशोकमिमंश्रयामिमातरहम् ।
इतियत्स्त्रियमाहकपिस्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४५३॥

इत्थंनिगदन्तंतंयद्दूतंसानिरीक्ष्यहनुमन्तम् ।
धृतिमन्तंगिरमूचेतंमत्कुलदैवमाश्रये रामम् ॥ ॥४५४॥
कौसल्यायाःपुत्रंपृच्छसुखंत्वंमदर्थमभिवन्द्य ।
इतियत्स्त्र्याहकापिंगांतंमत्कुलदैवमाश्रये रामम् ॥ ॥४५५॥
त्यक्तसुखंपृच्छसुखंसौमित्रिंत्वंमदर्थमनुयान्तम् ।इतियत्स्त्र्य* रामम्॥
मासादूर्ध्वंनाहंजीवेयमितिप्रियंवचोब्रूहि।इतियत्स्त्र्याहकापिंगां *रामम्
इत्युक्त्वावस्त्रगतंदिव्यंचूडामणिंकपयेददात् ।
यत्पत्नीभर्तृमुदेतंमत्कुलदैवमाश्रये रामम् ॥ ॥४५८॥
अथमणिरत्नंहनुमान्यत्स्त्रीदत्तंप्रगृह्यसन्तुष्टः ।
युयुजेस्वांगुलिमूलेतंमत्कुलदैवमाश्रये रामम् ॥ ॥४५९॥
अथयद्दूतंसीताजिगमिषुमभिनन्द्यवाचमूचेतम् ।
विश्वासाद्धनुमन्तंतंमत्कुलदैवमाश्रये रामम् ॥ ॥४६०॥
कुशलंहनुमन्ब्रूयारामंसुग्रीवलक्ष्मणादियुतम् ।
इतितंयत्स्त्र्याहवचस्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४६१॥
तववाचंरघुवीरश्श्रुत्वाकार्यंविधास्यतिक्षिप्रम् ।इतितंयत्स्त्र्या * रामम् ॥
यदिबुद्धिस्तवहनुमन्गूढदेशेवसत्वमेकाहम्।इतितंयत्स्त्र्याहवच*रामम्॥
दुष्पारंसरिदीशं दाशरथीतौकथंतरीतारौ ।
इतितमपृच्छद्यत्स्त्रीतंमत्कुलदैवमाश्रये रामम् ॥ ॥४६४॥
हर्यृक्षसैन्यतरणंकथमभविष्यद्वदाद्यसिन्धुपतौ।इतितमपृच्छद्य*रामम् ॥
कार्यविदांश्रेष्ठस्त्वंब्रूहिसमाधानमाशुहनुमन्मे। इतितमपृच्छद्य * रामम्
जित्वाजौदशकण्ठंयदिरामोमान्नयेत्तदाकुशलम् ।
इतितमवोचद्यत्स्त्रीतंमत्कुलदैवमाश्रये रामम् ॥ ॥४६७॥
इषुभिःपूर्णालंकायदितद्योग्यंभवेच्चरामस्य ।
इतितमवोचद्यत्स्त्रीतंमत्कुलदैवमाश्रये रामम् ॥ ॥४६८॥

जानक्युक्तिंश्रुत्वा विनयेनकृताञ्जलिश्चयद्दूतः ।
प्रतिवचनं तामूचेतंमत्कुलदैवमाश्रये रामम् ॥ ॥४६९॥

हर्यृक्षाणामधिपस्सुग्रीवोप्यागमिष्यतिह्यचिरात् ।
इतियत्त्विथमाहकपिस्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४७०॥

ममपृष्ठगतंसैन्यैर्द्रक्ष्यसिसीतेसहानुजं नाथम्।इतियत्त्विथमाह*रामम् ॥
एकोत्प्लवनेनक्षां:कपयेश्वैष्यन्तिसंघशस्सर्वे । इतियत्त्विथमाह*रामम् ॥
शोकस्यत्वंपारंयास्यसिशीघ्रंविदेहराजसुते।इतियत्त्विथमाह * रामम् ॥
अस्यांपुर्यांनचिरंवत्स्यसिसीतेशुचंत्यजाशुत्वम्।इतियत्त्विथ* रामम् ॥
किञ्चिच्छेषंकार्यंमत्वाऽथधियाऽगमत्कुबेरदिशम् ।
यद्दूतोहृष्टमनास्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४७५॥

सामोक्तिर्दानभिदेधनिषुचरक्षस्सुदर्पवत्सुवृथा ।
इतियद्दूतोऽमन्यततंमत्कुलदैवमाश्रये रामम् ॥ ॥४७६॥

तस्माद्रक्षस्सुमयादर्शयितव्यःपराक्रमोनुपमः। इतियद्दूतोऽमन्य*रामम्॥
हतवीरास्समितिमयामार्दवमीयुस्सुरारयोपीषत्। इतियद्दूतोऽम*रामम्॥
कार्यस्याप्यल्पस्यहिसाधनबाहुळ्यवान्समर्थस्स्यात्।इतियद्दूतो*रामम्॥
तस्माद्दशास्यंद्रष्टुंयास्यामितन्मतंज्ञात्वा।इतियद्दूतोऽमन्यततं*रामम्॥
तस्यवनंनेत्रमनःकान्तमिदंभग्नमद्यकरवाणि।इतियद्दूतोऽमन्य*रामम् ॥
अथयद्दूतोगत्वाऽशोकवनंशोकदात्रवनमकरोत् ।
जिज्ञासुर्दशवदनन्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४८२॥

भङ्क्त्वावृक्षांश्छित्वाशाखानिर्मन्थ्यदीर्घिकाव्यरुचत् ।
यद्दूतस्तोरणगस्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४८३॥

गतनिद्राराक्षस्योदद्दशुर्भग्नंवनंचयद्दूतम्।तोरणविहरणशीलंतंम*रामम्॥
कोयंकस्यकुतस्त्यः कृतसंवादस्त्वयेतियत्पत्नीम् ।
अप्राक्षूराक्षस्यस्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४८५॥

नाहंजानाम्येनंयूयं जानीतरक्षसां मायाः ।
इतियत्पत्न्यवदत्तास्तं मत्कुलदैवमाश्रये रामम् ॥ ॥४८६॥
अहमप्येनंदृष्ट्वाभीताऽदृष्टंकदापिराक्षस्यः। इतियत्पत्न्यवदत्तास्तं*रामम्
अथगत्वाराक्षस्योयद्विषमूचुर्वनस्यवैरूप्यम् ।
कपिनैकेनकृतंतत्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४८८॥
नाहंजानाम्येनं कपिमितिपृष्टाप्रवक्तिसीताऽपि ।
इतियद्विषमूचुस्तास्तंमत्कुलदैवमाश्रये रामम् ॥ ॥४८९॥
जानक्याश्रितवृक्षंमुक्त्वासर्वंविनाशितंकपिना।इतियद्विषमूचुस्त*रमम्॥
इत्थंराक्षस्युक्तंश्रुत्वावचनंदिदेशयद्द्वेषी ।
किङ्करनाम्नश्शूरांस्तं मत्कुलदैवमाश्रये रामम् ३ ॥४९१॥
यूयमशोकवनस्थंबध्वाऽऽनयतद्रुतंकपिंदुष्टम् ।
इतियद्विडवोचत्तांस्तंमत्कूलदैवमाश्रये रामम् ॥ ॥४९२॥
अथभवनात्स्वान्निरगाच्छूराणांद्रागशीतिसाहस्रम् ।
यद्दूतंप्रगृहीतुंतंरिपुभीमंभजाम्यहं रामम् ॥ ॥४९३॥
अथयद्दूतंपरितस्थित्वाजघ्नुर्निशाचराःक्रुद्धाः ।
प्रासैःपरिघैश्चास्त्रैस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥४९४॥
समहाकायोभूत्वालङ्कांशब्देनपूरयाञ्चक्रे ।
यद्दूतस्तान्दृष्ट्वातंरिपुभीमंभजाम्यहं रामम् ॥ ॥४९५॥
राघवपालितदेहस्सुग्रीवोजयतिचर्क्षकपिराजः ।
इतियद्दूतोऽगर्जत्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥४९६॥
रामोलक्ष्मणसहितोजयतितरामद्यसज्यचापकरः ।
इतियद्दूतोऽगर्जत्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥४९७॥
रामस्याहंदासोहनुमान्नामास्मिशत्रुकुलहन्ता।इतियद्दूतोऽगर्जत्तं*रामम्॥
रावणसहस्रमपिवायुद्धेमेसदृशदोर्बलं नस्युः।इतियद्दूतोऽगर्जत्तं*रामम्॥

लङ्कांविधवांकृत्वासीतामभिवाद्ययामिकृतकृत्यः। इतियद्दूतो*रामम् ॥
अथदृष्ट्वाकपिवीरंजग्नुश्शस्त्रैर्निशाचराःक्रुद्धाः।
यद्विड्जयमिच्छन्तस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५०१॥
अथतोरणगतपरिघं संगृह्यकरेजघानसर्वांस्तान्।
यद्दूतोव्योम्निचरस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५०२॥
अथकिङ्करनिधनन्तच्छ्रुत्वायाद्विट्प्रहस्तसुतमूचे।
त्वंद्रागानयकपिमितितंरिपुभीमंभजाम्यहं रामम् ॥ ॥५०३॥
अथयद्दूतश्चैत्यप्रासादं प्रेक्ष्यतंसमारुह्य।
गर्जितुमारभतोच्चैस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५०४॥
कपिराजोनरराजौविजयन्तेशत्रुमारणोद्युक्ताः।
इतियद्दूतोऽगर्जत्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५०५॥
कपिराजस्यामात्योभृत्योनृपतेर्द्दिराजसेहनुमान्।इतियद्दूतोऽ* रामम् ॥
रावणसहस्रमपिमेयुद्धेलक्ष्याःकदापिनभवेयुःइतियद्दूतोऽगर्ज*रामम् ॥
अथशूरांस्तत्रस्थानहनत्स्तंभेनतत्रलब्धेन।
यद्दूतोभीमवपुस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५०८॥
अथराक्षसराट्प्रहितं निरगात्सैन्यंचजंबुमाल्याद्यं।
यद्दूतंयुधिजेतुंतंरिपुभीमंभजाम्यहं रामम् ॥ ॥५०९॥
विव्याधजंबुमालीविशिखैर्निशितैर्मुखे शिरस्यथतम्।
यद्दूतंहनुमन्तंतंरिपुभीमंभजाम्यहं रामम् ॥ ॥५१०॥
तच्छरपूरितदेहो यद्दूतःपरिघमाशुसंगृह्य।
तदुरस्यपातयद्राक्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५११॥
तस्यशिरःप्रभृतिनखावध्यंगंपिष्टवद्बभूवतदा।
यद्दूतपरिघपतनात्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५१२॥

श्रुत्वाऽथजंबुमलिनमाजौनिहतंससैन्यमपियद्विट्प्राक् ।
मन्त्रिसुतान्समचोदयत्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५१३॥
क्षिप्रंतंकपिमाजौजित्वाबध्वापुरोममानयत ।
इतियद्विडवादीत्तांस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५१४॥
किङ्करनिधनं श्रुत्वामातृषुतेषांभृशं रुदन्तीषु ।
यद्दूतमवापुस्तेतंरिपुभीमं भजाम्यहं रामम् ॥ ॥५१५॥
बलवद्भिस्तैर्युयुधेवियतिचरन्पादघाततश्शत्रून् ।
निघ्नन्यद्दूतोद्राक्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५१६॥
भूमिचरस्तान्कांश्चिन्निघ्नन्कांश्चिद्व्यदारयन्नखरैः ।
यद्दूतस्तैर्युयुधेतंरिपुभीमंभजाम्यहं रामम् ॥ ॥५१७॥
अथमन्त्रिसुतान्सैन्यैस्साकंहत्वाक्षणेनयद्दूतः ।
तोरणसुस्थोऽगर्जत्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५१८॥
अथदशवदनश्श्रुत्वामन्त्रिसुतानांमृतिंतदाभाणीत् ।
यद्दूतग्रहणपटूंस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५१९॥
यूयंजीवग्राहंकपिमानयताशुदुष्टमिहबध्वा ।
इतियद्विट्तानवदत्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५२०॥
प्रघसोऽथविरूपाक्षोदुर्धरयूपाक्षभासकर्णाश्च ।
यद्दूतंजेतुमगुस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५२१॥
अथपञ्चसैन्यपालादृष्ट्वायद्दूतमात्तभीमतनुम् ।
ववृषुःस्वान्स्वान्विशिखांस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५२२॥
दुर्धरपातितबाणैर्विद्धश्शीर्षेतदानदन्व्योम्नि ।
उदपप्तद्यद्दूतस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५२३॥
सरथमवप्लुत्यतदायद्दूतोदुर्धरंव्यसुंचक्रे ।
पश्यत्सुप्रघसादिषुतंरिपुभीमंभजाम्यहं रामम् ॥ ॥५२४॥

अथमुद्गरपाताद्द्राग्वक्षसिकुपितोधरांगतोरीद्धौ ।
यद्दूतोपश्यद्द्राक्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५२५॥
सालेनागेनद्राक्सविरूपाक्षं जघानयूपाक्षम् ।
यद्दूतस्ताम्राक्षस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५२६॥
अथनिहतान्ज्ञात्वात्रीन्प्रघसःक्रुद्धस्सभासकर्णोद्राक् ।
यद्दूतमहन्युद्धेतंरिपुभीमंभजाम्यहं रामम् ॥ ॥५२७॥
शूलनिखातोरस्थलनिर्गळितासृक्प्रवाहरक्तांगः ।
यद्दूतोऽपूर्वोभात्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५२८॥
अथराक्षसवीरौ तौ सैन्यैस्साकंनिनायशमनगृहम् ।
यद्दूतःपवनसुतस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५२९॥
अथदशवदनश्श्रुत्वा शूरान्निहतान्यदीयदूतेन ।
अक्षंसुतमभणद्द्रांतंरिपुभीमंभजाम्यहं रामम् ॥ ॥५३०॥
वत्साक्षगच्छशीघ्रंदुष्टंबध्वाकपिंत्वमानयतम् ।
इतियद्विट्सुतमभणत्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५३१॥
माकुरुसाहसकृत्यंयुक्त्यावत्सत्वमानयाशुकपिम्।इतियद्विट्सु*रामम् ॥
अनुसृत्यराजधर्मं पुत्रंत्वांप्रेषयामियुद्धार्थम्। इतियद्विट्सुत *रामम्॥
इत्युक्तःपित्राऽक्षोरथमारुह्यप्रयाणमकरोद्द्राक् ।
यद्दूतमाजिहीर्षुस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५३४॥
आगादथसमरभुवंरथकुञ्जरवाजियोधसहितोऽक्षः ।
यद्दूतमाजिहीर्षुस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५३५॥
आगत्यायोधनभुवमक्षोनिशितैर्जघानमूर्ध्निशरैः ।
यद्दूतंधन्विवरस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५३६॥
अथशरताडितशीर्षस्तंदृष्ट्वाबालमाहवोद्रिक्तम् ।
यद्दूतोवव्रृधेद्राक्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५३७॥

अक्षमवैक्षतहनुमान्बहुमानदृशापराक्रमात्तुष्टः ।
यद्दूतोऽतिकृपालुस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५३८॥
अथतच्छरभिन्नाङ्गो यद्दूतोमनसितद्बलंस्मृत्वा ।
कर्तुंतद्वधमैच्छत्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५३९॥
अथतद्रथयुगबध्दानष्टहयान्नष्टजीवना नकरोत् ।
यद्दूतोरथसहितांस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५४०॥
अथखड्गकरंचाक्षं वियतिचरन्तं तदाऽगृहीत्पदयोः ।
यद्दूतस्तंहन्तुं तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५४१॥
अथभूमितलेऽमुञ्चद्दशमुखपुत्रं तदासमाविध्य ।
विगतासुंयद्दूतस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५४२॥
अथनिहतंसुतमक्षंज्ञात्वेन्द्रजितं सरोषमवदद्राम् ।
यद्विड्दुःखाक्रान्तस्तंरिपुभीमंभजाम्यहं रामम् ॥ ॥५४३॥
अस्त्रविदांश्रेष्ठंतंयुद्धार्थं ब्रह्मणोगृहीतास्त्रम् ।
याहीत्यभणद्यद्विट्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५४४॥
बहवोनिहताश्शूरास्तेऽवरजोऽक्षोऽपिसंहृतः कपिना ।
इतिसुतमूचेयद्विट्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५४५॥
स्वीयबलंशत्रुबलं सम्यग्ज्ञात्वाकुरुत्वमपियुद्धम्।इतिसुतमूचे*रामम् ॥
युद्धंराज्ञांसहजं ज्ञात्वात्वांप्रेषयामिनिष्करुणः। इतिसुतमूचे * रामम् ॥
इत्थंपित्राऽऽज्ञप्तोयद्दूतंजेतुमाहवेनिरगात् ।
इन्द्राजिदथसैन्यैस्स्वैस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५४८॥
ज्यातलघोषंकुर्वन्यद्दूतग्रहणयुक्तिमातन्वन् ।
रणभुवमिन्द्राजिदापत्तं रिपुभीमं भजाम्यहं रामम् ॥ ॥५४९॥
अथयद्दूतेन्द्राजितोर्युद्धं समभूदभूतपूर्वं तत् ।
अन्योन्यंसमबलयोस्तंरिपुभीमं भजाम्यहं रामम् ॥ ॥५५०॥

❁यद्दूतेऽवध्यत्वं ज्ञात्वाशक्रारिरस्त्रबन्धस्य ।
वशमनयत्पवनसुतंतं राममहं भजामि मोक्षाय ॥ ॥५५१॥

अथयद्दूतस्स्मृत्वा धातृगिरंमनसिबन्धनंप्रापत् ।
आश्रितबन्धध्वंसापितंराममहं भजामि मोक्षाय ॥ ॥५५२॥

निश्चेष्टोभुव्यपतद्यद्दूतोमारुतोद्भवोऽपितदा ।
ब्रह्मास्त्रेणसुबद्धस्तं राममहं भजामि मोक्षाय ॥ ॥५५३॥

ममरक्षोभिर्ग्रहणं जनयतिसंवादमाशुदशवदने ।
इतियद्दूतोऽमन्यततंराममहं भजामि मोक्षाय ॥ ॥५५४॥

अथविध्यस्त्रनिबद्धंयद्दूतं तेनिशाचरामूढाः ।
शणवल्कैश्चबबन्धुस्तं राममहं भजामि मोक्षाय ॥ ॥५५५॥

मुक्तोप्यस्त्रेणतदायद्दूतोनाबबुध्यतात्मानम् ।
राक्षसताडितदेहस्तंराममहं भजामि मोक्षाय ॥ ॥५५६॥

अथशक्रद्वेषीतंनीत्वाराज्ञेव्यदर्शयत्तुष्टः ।
यद्दूतंपवनसुतंतं राममहं भजामि मोक्षाय ॥ ॥५५७॥

दशवदनं श्रितपीठंविंशतिभुजमात्ममन्त्रिमध्यगतम् ।
यद्दूतोऽपश्यद्रक्ताक्षं राममहं भजामि मोक्षाय ॥ ॥५५८॥

रूपमहोधैर्यमहोसत्वमहोरक्षसांपतित्वमहो ।
इतियद्दूतोऽतुष्यत्तं राममहं भजामि मोक्षाय ॥ ॥५५९॥

नाधर्मोयद्यस्मिन्लोकत्रयरक्षभवेदयंबलवान् ।
इतियद्दूतोऽतुष्यत्तं राममहं भजामि मोक्षाय ॥ ॥५६०॥

अथदशकण्ठःक्रुद्धोदध्यौकैलासवासिनंदीशम् ।
यद्दूतंकृतशापंतं राममहं भजामि मोक्षाय ॥ ॥५६१॥

अथदशकण्ठःप्रोचेवाचंसचिवं प्रहस्तमतिशस्तम् ।
यद्दूतमतंज्ञातुंतं राममहं भजामि मोक्षाय ॥ ॥५६२॥

एषदुरात्माकोवा किंकारणमस्यपृच्छवनभंगे ।
इतितंयद्विडवादीत्तं राममहं भजामि मोक्षाय ॥ ॥५६३॥
अथपृष्टोऽमात्येन प्रोचेदशवदनमेव निर्भीकः ।
प्रतिवचनंयद्दूतस्तं राममहं भजामि मोक्षाय ॥ ॥५६४॥
जात्यैववानरोऽहं कृतवनभंगोऽस्मिदर्शनात्थंते ।
इत्यभणद्यद्दूतस्तं राममहं भजामि मोक्षाय ॥ ॥५६५॥
त्वद्दर्शनकामोऽहंबद्धोऽस्त्वेवचास्मिदशवदन। इत्यभणद्यद्दूत*मोक्षाय॥
संप्राप्तोऽस्मितवान्तिकमद्याहंराजकार्यभूत्यर्थम्।इत्यभणद्यदूत*मोक्षाय
दूतोहंदाशरथेवक्तुवाक्यंहितंतवागच्छम् ।
इत्यभणद्यद्दूतस्तं राममहं भजामि मोक्षार्थी ॥ ॥५६८॥
शृणुममवचनंपथ्यंवालयनुजनककीर्तितंभ्रात्रा । इत्यभण*मोक्षार्थी ॥
साकेतभूपतनयोरामोनामाऽस्तिलोकविख्यातः। इत्यभण*मोक्षार्थी ॥
मैथिल्यासरमण्यासावरजोऽगाद्वनंपितुर्वचनात् ।इत्यभण *मोक्षार्थी॥
सविनष्टांपत्नींतांसावरजोऽन्वेष्टुमद्यगिरिमागात्। इत्यभण*मोक्षार्थी॥
सुग्रीवेणैतस्यामार्गणमंगीकृतंस्वराज्यात्थेन्।इत्यभणद्यद्दूतस्तं*मोक्षार्थी
युधिवालिनमथहत्वारामस्सुग्रीवमेनपतिमकरोत्।इत्यभणद्य*मोक्षार्थी॥
तत्प्रहिताःकपयस्तेप्राच्यादिषुदिक्षुतांचमृगयन्ते । इत्यभणद्य*मोक्षा॥
केचिद्दक्षिणककुभंप्राप्तास्तेमार्गितुंविदेहसुताम्।इत्यभणद्यद्दूत* मोक्षा॥
हनुमान्नामाहमिमंजलधिंतीर्त्वापुरीमिमांप्रापम्।इत्यभणद्यद्दूत*मोक्षा॥
भ्रमताऽत्रमयादृष्टानिलयेतेराक्षसेशसासीता।इत्यभणद्यद्दूत*मोक्षार्थी॥
परदारेष्वाशातेमास्तुब्रह्मान्वयेप्रजातस्य । इत्यभणद्यद्दूतस्तं*मोक्षार्थी ॥
दाशरथेरुत्पातंमाभूस्त्वंराक्षसेशशृणुममगाम्।इत्यभणद्यद्दूत*मोक्षार्थी
तांपश्चात्स्यामुरगीमिवपश्यत्वंननाशयस्वजनिम्।इत्यभणद्यद्दूत*मोक्षा॥
देवासुरवध्यत्वंममनास्तीतित्यजाभिमानंत्वम्।इत्यभणद्यद्दूत*मोक्षार्थी

रामोनहिदेवोऽयंनहियक्षःकिन्नरोरगादिर्नो ।
इत्यभणद्यद्दूतस्तं राममहं भजामि मोक्षार्थी ॥ ॥५८३॥
प्राणपरित्राणंत्वंकथमद्यकरिष्यसेवदाशुचमे।इत्यभणद्यद्दूतस्तं *मोक्षा॥
नाधर्मश्नोधर्मोभवतिचतत्फलंपृथग्भवति।इत्यभणद्यद्दूतस्तं * मोक्षार्थी॥
रामयशोवृध्यत्र्थंलङ्कामेकोननाशयाम्यधुना।इत्यभणद्यद्दूत*मोक्षार्थी॥
रामश्शक्तोलोकान्स्रष्टुंपातुंनिहन्तुमप्येकः।इत्यभणद्यद्दूतस्तं*मोक्षार्थी॥
इत्थंयद्दूतगिरंश्रुत्वारक्षःपतिश्चसंक्रुद्धः ।
आज्ञापयदस्यवधंतं राममहं भजामि मोक्षार्थी ॥ ॥५८८॥
इत्थंक्रुद्धंज्येष्ठं ज्ञात्वा वाचं विभीषणोऽवादीत् ।
यद्दूतवधमनिच्छंस्तं राममहं भजामि मोक्षार्थी ॥ ॥५८९॥
दूतेबहवोदण्डाविहिताश्शास्त्रे वधाद्दतेराजन् ।
इतियद्विषमाहसगांतं राममहं भजामि मोक्षार्थी ॥ ॥५९०॥
तस्माद्दूतवधेत्वंपरिहरयत्नंजुगुप्सितेभ्रातः । इतियद्विषमाह*मोक्षार्थी॥
इत्थंविभीषणोक्तिंश्रुत्वाऽवादीत्सकिङ्करान्यद्विट् ।
हनुमत्पुच्छंदग्धुंतं राममहं भजामि मोक्षार्थी॥ ॥५९२॥
अथहनुमल्लांगूलंचीर्णैर्वस्त्रैस्तदाचसमयाक्षुः ।
यद्विड्दुनाःक्रुरास्तं राममहं भजामि मोक्षार्थी ॥ ॥५९३॥
तैलेनासिच्याग्निंसम्यगयोक्षुस्तदाभटाःक्रुद्धाः ।
यद्दूतदीर्घवालंतं राममहं भजामि मोक्षार्थी ॥ ॥५९४॥
अथयद्दूतंवीध्यांद्रष्टुंसर्वेनिशाचराःप्रापुः ।
सस्त्रीबालास्तुष्टास्तं राममहं भजामि मोक्षार्थी॥ ॥५९५॥
परिगृह्यययुश्शूरा भेरीपटहादिवाद्यघोषयुताः ।
यद्दूतंपुरवीध्यांतमहं सीतापतिंभजे रामम् ॥ ॥५९६॥

अथराक्षस्योत्रभणुर्दीपितलाङ्गूलमनिलपुत्रंतम् ।
यत्पत्न्यैसन्तुष्टास्तमहंसीतापतिंभजे रामम् ॥ ॥५९७॥
सातच्छ्रुत्वावचनं यत्पत्नीशोकसागेरमग्ना ।
उपतस्थेहव्यभुभंतमहं सीतापतिंभजे रामम् ॥ ॥५९८॥
पतिशुश्रूषासत्यायदिभवशीतोहनूमतःपुच्छे ।
इतियत्स्त्र्यात्र्थे यताग्निं तमहं सीतापतिंभजे रामम् ॥ ॥५९९॥
यदिभाग्यशेषभागहमद्यभवत्वंकपेशिशवोस्यद्राक् ।इतियत्स्त्रया*रामम्॥
सीतापातिव्रत्याद्रामकटाक्षान्नमेग्नितापोऽभूत् ।
इत्यमनुतयद्दूतस्तमहं सीतापतिंभजे रामम् ॥ ॥६०१॥
अथपरिघंपरिगृह्यत्वरयाऽभ्यभिनत्सकिङ्करान्क्रुद्धः ।
यद्दूतोऽनुव्रजतस्तमहंसीतापतिंभजे रामम् ॥ ॥६०२॥
प्रमथितमशोकविपिनं निहताश्शूरामयाऽत्रकिं शिष्टम् ।
इतियद्दूतोऽस्मार्षीत्तमहं सीतापतिं भजे रामम् ॥ ॥६०३॥
अल्पप्रयाससाध्योदुर्गविनाशोमयाऽद्यकर्तव्यः । इतियद्दूतो*रामम् ॥
लाङ्गूलाग्नेस्तृप्तिर्भूयाद्दग्धैगृहोत्तमैरेभिः । इतियद्दूतोऽस्मार्षी * रामम् ॥
एवंविचिन्त्यहनुमान्गेहाद्गेहंवनाद्वनं गत्वा ।
यद्रिपुणगरेऽव्यचरत्तमहंसीतापतिंभजे रामम् ॥ ॥६०६॥
उत्प्लुत्योत्प्लुत्याग्निं प्रासादेषुव्यनिक्षिपत्तुष्टः ।
यद्दूतोलंकायांतमहं सीतापतिंभजे रामम् ॥ ॥६०७॥
एवंसर्वाणिगृहाण्यदहत्त्यक्त्वाविभीषणस्यगृहम् । यद्दूतोलंका*रामम् ॥
हानाथपुत्रपौत्रत्राहीनामिति मुहुर्वचस्त्रीणाम् ।
यद्दूतोप्यश्रौषीत्तमहं सीतापतिंभजे रामम् ॥ ॥६०९॥
काश्चित्पेतुर्नार्योहर्म्येभ्योंकप्रसुप्तशिशुसहिताः ।
याद्विट्पुरवासिन्यस्तमहं सीतापतिंभजे रामम् ॥ ॥६१०॥

दग्ध्वासर्वांलंकांलाङ्गूलाग्निंशमंनिनायाब्धौ ।
दूतोयस्यसहर्षं तमहंसातापतिंभजे रामम् ॥ ॥६११॥
लङ्कांदग्धांदृष्ट्वायद्दूतस्तांविचिन्त्यवैदेहीम् ।
स्वस्यानिन्दत्प्रज्ञांतमहंसीतापतिंभजे रामम् ॥ ॥६१२॥
वाच्यमवाच्यंक्रुद्धःकार्यमकार्यंश्चमन्यते नाल्पः ।
इतियद्दूतोऽमन्यततमहं सीतापतिंभजे रामम् ॥ ॥६१३॥
सीतास्थितिमिहदृष्ट्वालंकांदहतामयाकृतोऽनर्थः।इतियद्दूतो * रामम् ॥
तस्मात्प्राणत्यागोममयोग्योभवतिनीचधिषणस्य । इतियद्दूतो*रामम् ॥
वैदेहीनचदग्धाजीवत्यार्येति सिद्धदेवगिरम् ।
अश्रौषीद्यद्दूतस्तमहं सीतापतिंभजे रामम् ॥ ॥६१६॥
अथतांद्रष्टुंपुनरप्यविशत्तोपाद्वनं ससीतंद्राक् ।
यद्दूतोऽदग्धतनुस्तमहं सीतापतिंभजे रामम् ॥ ॥६१७॥
सीतामक्षतदेहांदृष्ट्वानत्वापुनःपुनस्तुष्टः ।
यद्दूतोऽथप्रययौतमहं सीतापतिंभजे रामम् ॥ ॥६१८॥
प्रस्थितमथदृष्ट्वातंयद्दूतंजानकीवचोऽभाणीत् ।
तोषकरंशेषविधौतमहंसीतापतिंभजे रामम् ॥ ॥६१९॥
कामंत्वमलंपुनरेकः कार्यस्यसाधनेऽस्याऽत्र ।
इतितंयत्स्त्र्यवदत्तमहं सीतापतिंभजे रामम् ॥ ॥६२०॥
स्वयमागत्यनयेन्मांयदितत्तस्याग्र्यकीर्तिकारिभवेत्। इतितंयत्स्त्र्य*रामम्
अथयत्पत्नींहनुमान्नत्वाऽऽश्वास्यप्रयाणमतिमान्द्राक् ।
आरुक्षदरिष्टगिरिंतमहंसीतापतिंभजे रामम् ॥ ॥६२२॥
दशयोजनविस्तारस्त्रिंशद्योजनसमुन्नतोभूत्वा ।
यद्दूतोऽब्धिमतारीत्तमहं सीतापतिंभजे रामम् ॥ ॥६२३॥
संमान्यसुनाभाद्रिं विश्राव्यस्वीयनामयद्दूतः ।
आगमहेन्द्राद्रिमथोतमहंसीतापतिंभजे रामम् ॥ ॥६२४॥

कृतकृत्यंदृष्ट्वातंपरिवार्यचवानरामुदायुक्ताः ।
आश्लिष्यन्यद्दूतं तमहंसीतापतिंभजे रामम् ॥ ॥६२५॥
अथजांबवदादींस्तान्वृद्धान्युवराजमंगदंनत्वा ।
यद्दूतस्तुष्टोऽभूत्तमहंसीतापतिंभजे रामम् ॥ ॥६२६॥
अब्धेस्तरणारंभंमैनाकोक्तिंचनागमातृजयम् ।
आहतदायद्दूतस्तमहंसीतापतिंभजे रामम् ॥ ॥६२७॥
छायाग्राहिण्याद्रागुदरंभित्वाविनिर्गमंस्वस्य।आहतदायद्दूतस्त*रामम् ॥
सायंपरतीरगतिंरात्रौलङ्काप्रवेशमपिगूढम्। आहतदायद्दूतस्त*रामम् ॥
लङ्काधिदेवतान्तांजित्वारात्रौगृहाद्गृहप्राप्तिम्।आहतदायद्दूत*रामम्॥
अथरावणदारास्ताद्दृष्टाबह्वयोमयानरामसती ।
इत्यभणद्यद्दूतस्तमहं सीतापतिंभजे रामम् ॥ ॥६३१॥
अथमध्येऽशोकवनंशोकाक्रान्तामपश्यमहमार्याम्। इत्यभण* रामम् ॥
तांशिंशुपागमूलेऽपश्यंदयितांरघूत्तमस्याहम् । इत्यभणद्य * रामम् ॥
निशिरावणदुर्वचनंसीताप्रत्युक्तिमप्यथोश्रृणवम्। इत्यभणद्य * रामम्॥
अथपत्नीप्रार्थनयागृहमगमत्स्वंसरावणोधूर्तः । इत्यभणद्य दूत*रामम्॥
तृप्त्यर्थंराज्ञोहंभवतामपिकार्यमेतदकरवम् । इत्यभणद्य * रामम् ॥
प्राणत्यागोद्युक्तांतांपरिसान्त्व्याहमापमलमाशु । इत्यभण * रामम् ॥
मत्प्रोक्तरामलक्ष्मण लक्षणवचसांऽगुलीयलाभाच्च ।
मामाहगिरं यत्स्त्री तमहं सीतापतिंभजे रामम् ॥ ॥६३८॥
नरवानरयोस्सङ्गः कथमासीदित्यपृच्छदथसामाम् ।
इतियद्दूतोभाणीत्तमहं सीतापतिंभजे रामम् ॥ ॥६३९॥
अथमद्वचनात्तुष्टामयिविश्वासाददादभिज्ञानम् । इतियद्दूतो*रामम् ॥
त्यक्त्वाऽथमहेन्द्राद्रिंकपयस्सुग्रीवमधुवनं प्रापुः ।
यद्दूतेनसमंद्राक्तमहं सीतापतिंभजे रामम् ॥ ॥६४१॥

अथयुवराजस्याज्ञां प्रतिगृह्यपपुर्मधूनिकपिवीराः ।
यत्स्त्रीदर्शनतुष्टास्तमहंसीतापतिंभजे रामम् ॥ ॥६४२॥

अथमधुतृप्ताःकपयोगायन्तिहसन्तिसंप्रणृत्यन्ति।यत्स्त्रीदर्श * रामम् ॥

दधिमुखमथवनपालंप्रहरन्तस्तेपपुर्मधूनितदा। यत्स्त्रीदर्शन * रामम् ॥

पीत्वामधूनिकपयःकलहंचक्रुस्तदावनेऽन्योन्यम्।यत्स्त्रीदर्शन*रामम् ॥

अथदधिमुखमुख्यास्तेकपयोगत्वावचोऽब्रुवन्वेगात् ।
यत्पुरतस्सुग्रीवंतमहं सीतापतिंभजे रामम् ॥ ॥६४६॥

अङ्गदहनुमत्प्रमुखैर्मधुवनमद्यप्रणाशितंसमभूत् ।
इतियत्सुहृदमवोचंस्तमहंसीतापतिंभजे रामम् ॥ ॥६४७॥

सन्ताड्यास्मान्वृक्षैःपश्यतनोदेवमार्गमित्यूचुः।इतियत्सुहृदम*रामम् ॥

श्रुत्वादधिमुखवाचं प्रीतोऽस्म्यधुनात्वदुक्तवचनेन ।
इतितंयत्सुहृदवदत्तमहंसीतापतिंभजे रामम् ॥ ॥६४९॥

शीघ्रंत्वंगत्वातान्प्रेषयमत्सविधमद्यकृतकृत्यान्।इतितंयत्सुहृद*रामम्॥

अथदधिवदनोगत्वायत्सुहृदुक्तंवचोऽङ्गदप्रमुखान् ।
अवदत्कपि वीरान्द्राक्तमहंसीतापतिंभजे रामम् ॥ ॥६५१॥

अथलक्ष्मणसंपृष्टोदधिमुखवचनार्थमर्थवित्प्रोक्त्वा ।
यत्सुहृदासीत्तुष्टस्तमहं सीतापतिंभजे रामम् ॥ ॥६५२॥

अथयुवराजोऽवादीद्यदूताद्यान्कपींस्तदातृप्तान् ।
गच्छामोनगरीमिति तमहंसीतापतिंभजे रामम् ॥ ॥६५३॥

अवतेरुर्यस्याग्रेसुहृदासहितस्य वायुपुत्राद्याः ।
सीतादर्शनहृष्टास्तमहं सीतापतिंभजे रामम् ॥ ॥६५४॥

प्रस्रवणस्थंकपयोदृष्टा सीताहनूमतेत्युक्त्वा ।
नेमुर्भित्रयुतं यंतमहंसीतापतिंभजे रामम् ॥ ॥६५५॥

श्रुत्वाऽथगिरंतेषां क्वास्तेसीताकथञ्चतत्रास्ते ।
इतिकीशान्याऽपृच्छत्तमहं सीतापतिंभजे रामम् ॥ ॥६५६॥

अथयद्दूतंकपयस्तोषात्समचोदयन्नृपांशुद्राक् ।
सीतावृत्तंवक्तुं तमहं सीतापतिंभजे रामम् ॥ ॥६५७॥

अथयद्दूतोमनसाध्यात्वासीतांप्रणम्यतां ककुभम् ।
अयततवृत्तंवक्तुन्तमहं सीतापतिंभजे रामम् ॥ ॥६५८॥

दृष्टालङ्कोपवनेराक्षसयोषिद्भिरर्दितासीता ।
इतिहनुमानवदद्यं तमहंसीतापतिंभजे रामम् ॥ ॥६५९॥

भवतोगुणवर्णनतोमुद्रादानाच्चभाषिताऽथमया । इतिहनुमा * रामम् ॥

दृष्टासीताचमयाशिष्टादुष्टाभिरात्तबहुकष्टा । इतिहनुमानवदद्यं * रामम् ॥

दत्तमभिज्ञानमिदंवायसवृत्तञ्चकीर्तितंहितया । इतिहनुमानव * रामम् ॥

मासादूर्ध्वंनाहंजीवेयमितिप्रभावदेत्यूचे । इतिहनुमानवदद्यं * रामम् ॥

इतिसीतोक्तिंज्ञात्वादूतमुखाद्यस्तदामणिंहृदये ।
कृत्वाऽरोदीदुच्चैस्तमहंसीतापतिंभजे रामम् ॥ ॥६६४॥

ॐ नयमामपितंदेशं सौमित्रेतां विनानजीवेयम् ।
अहमितियोऽवादीद्वां तमहं मनसा भजे गुरुं रामम् ॥ ॥६६५॥

अथतस्यागिरं श्रुत्वाऽऽनत्वोचेवाचमाशुयद्दूतः ।
रामंलक्ष्मणसहितं तमहं मनसाभजे गुरुं रामम् ॥ ॥६६६॥

गमनेकुतयत्नमांवाचं प्रोचेविदेहजाऽश्रुमुखी ।
इतियद्दूतोऽवादीत्तमहं मनसा भजेगुरुं रामम् ॥ ॥६६७॥

हनुमन्दाशरथीतौकपिनायकमप्यनामयं ब्रूयाः ।
इतियत्स्त्रीगिरमभणत्तमहंमनसा भजे गुरुं रामम् ॥ ॥६६८॥

यदिभर्ताऽयोध्यांमांशत्रुंजित्वानयेत्तदेव वरम् । इतियत्स्त्रीगिर * रामम् ॥

इत्थंसीतोक्तिमहं श्रुत्वाऽवोचं वचस्सुतोषकरम् ।
इतियं दूतोभाणीत्तमहंमनसाभजे गुरुं रामम् ॥ ॥६७०॥

कपिनाथस्सुग्रीवोद्राक्त्वां नेतुं यतिष्यतेऽयोध्याम् ।
इत्यभणंमितियमूचेतमहं मनसा भजेगुरुं रामम् ॥ ॥६७१॥

अचिरात्कपिमुख्यानां श्रोष्यसिशब्दंविनर्दतांसीते।इत्यभण * रामम् ॥

अभिषिक्तमयोध्यायां द्रक्ष्यसिभर्तारमाशुवैदेहि।इत्यभणमिति * रामम् ॥

इतिमद्वचनंश्रुत्वा शिष्टातुष्टाबभूवपत्नीते ।
इत्यभणद्यंहनुमान्तमहंमनसा गुरुंभजे रामम् ॥ ॥६७४॥

अथतांप्रणम्यतुष्टांतीर्त्वाजलधिंसमीपमापन्ते।इत्यभणद्यंहनुमा * रामम् ॥

श्रीरामचन्द्रायपरब्रह्मणे नमः ॥

स्मरतां द्राक्पापहरं भजतां संसारभीतितापहरम् ।
भजतोममतोषकरं कफरोगहरंप्रणौमि रामवरम् ॥

अन्यानास्तिगतिर्मेत्वदृतेभक्तार्तिभञ्जनादधुना ।
तस्मात्पालयमांत्वं सीताजाने निरस्य कफमूर्च्छे ॥

व्याधिंसोढुमशक्तं करुणादृष्ट्याकृपानिधेद्राङ्माम् ।
नीरुजमद्यकुरुत्वं वैदेहीनाथभक्तभक्तन्ते ॥

श्रीरामायपरमगुरवेनमः ॥

यद्दूतोहनुमानब्धिं तितीर्षुर्भीमविक्रमः ।
आरुरोहमहेन्द्राद्रिंभूयात्तस्मै सुमङ्गळम् ॥

यस्यदूतोतरत्सिन्धुंमत्वागोष्पदवत्सुधीः ।
तस्मैविदेहजाभर्त्रे रामायास्तु सुमङ्गळम् ॥

लङ्काधिदेवतांजित्वा रावणान्तःपुरेऽचरत् ।
तद्दारगोष्ठ्यां यद्दूतस्तस्मै रामायमङ्गळम् ॥

प्रविश्याशोकवनिकां यत्पत्न्यै हनुमानदात् ।
रामनामाङ्कितांमुद्रांतस्मै रामायमङ्गळम् ॥

आश्वास्यसीतां यद्दूतो ज्ञातकाककथस्तया ।
दत्तचूडामणिश्चाभूत्तस्मै रामायमङ्गळम् ॥

भङ्क्त्वाऽशोकवनसर्वं दग्ध्वालंकांनिशाचरान् ।
हत्वाऽमोदतयद्दूतस्तस्मै रामायमङ्गळम् ॥

दृष्ट्वासीतामथोक्त्वाच यद्दूतोरक्षसेहितम् ।
तीर्त्वाब्धिमगमत्पारं तस्मै रामायमङ्गळम् ॥

गत्वामधुवनं पीत्वा यथेच्छं मधुवानरैः ।
यद्दूतःप्रापसन्तोषं तस्मै रामायमङ्गळम् ॥

अथसुग्रीवसन्देशाद्दधिवक्त्रोदितात्तदा ।
यद्दूतोनिरगात्कीशैस्तस्मै रामायमङ्गळम् ॥

यस्सीतावसतिंदूतवाक्याद्ज्ञात्वामुदंदधे ।
तस्मैसलक्ष्मणायास्तुमङ्गळं क्षेमदंनृणाम् ॥

रामानन्दसरस्वत्युक्ताभक्तिप्रदासदापठताम् ।
सुन्दरकाण्डोक्तकथासहिता रामस्तुतिस्त्वियंजीयात् ॥

कथानुपूर्वीसहित सुन्दरकाण्डस्समाप्तः ॥

हरिः ओम् ॥

शुभमस्तु ॥

---



॥ श्रीः ॥

॥ ओन्नमःपरमात्मने ॥

श्रीवाल्मीकिरामायणकथानुपूर्वीसहितः

# युद्धकांडकथास्तुत्याख्यो ग्रंथः ॥



श्रीभृङ्गगिरिमठस्थव्याख्यान सिंहासनाधीश्वराणां श्रीसच्चिदानन्द-
शिवाभिनव नृसिंहभारतीस्वामिनां तच्छिष्य, श्रीचन्द्रशेखर
भारतीस्वामिनांच पदसरसिज चञ्चरीकायमाणस्वांतेन तत्कृपा
वीक्षणकण समासादित सरस्वतीप्रसाद विशदमतिना

## श्रीरामानन्दसरस्वत्याख्ययतिना

विरचितः

श्रीलैप्पुळ्ळैयार्पुत्तूर्ग्रामस्थ रामकृष्णशास्त्रि प्रेषितेन, कोटिमङ्गळ
ग्राम महाजन प्रेषितेन, तद्ग्राम पश्चिमभागस्थ कोदण्ड रामः
स्वामिसन्निधिस्थ, मेलहलं कण्णामकाग्रहारस्थ महाजन
प्रेषितेनच द्रव्येण,

कुम्भघोणस्थ श्री जनार्दनाख्य मुद्रणालये मुद्राप्य, श्रीविद्यामुद्रालयेच

प्रजोत्पत्तिसंवत्सर माघमास शुक्लद्वितीयायाम् ॥

प्रकाशितो विजयतेतमाम् ॥



एतस्यमूल्यम् ] [ ०—८—०



॥ श्रीः ॥

ओं श्रीगणेशाय नमः ।

श्रीशारदांबिकायै नमः ।

श्रीगुरुभ्यो नमः ।

# युद्धक ण्डकथास्तुतिर्लिख्यते ॥

प्रदक्षिणीकृत्यगिरीशमेव यः फलंप्रपेदे शिखिवाहदुर्लभम् ।
तमादरान्नौमि हिमाद्रिजासुतं विदेहजाभर्तृकथाप्रपूर्तये ॥
देवि त्वां भुवनेश्वरीं हृदि सदा सञ्चिन्तयाम्यन्वहं
त्रैलोक्येपिच ते यतस्सुविदितं भक्तार्तिसंछेदनम् ।
मुक्त्वा त्वामपि तादृशीं भगवतीं किन्वाश्रयेन्मेमन ।
स्तस्मान्मामव वाणि पद्मजनुषः कान्ते नताभीष्टदे ॥
यो रामभक्तस्सहि देवरूपस्सेव्यो जनानां भवतीतिवार्ताम् ।
श्रुत्वाऽहमद्यप्रभृतिस्वजन्मापायाय रामं शरणं गतोऽस्मि ॥
रत्नगर्भगणेशानं शारदां चन्द्रशेखरम् ।
नत्वा रामस्तुतिं कुर्वेमद्व्याधिविनिवृत्तये ॥
नौमि श्रीसच्चिदानन्दशिवाभिनवपूर्वकान् ।
नृसिंह्मभारतीसंज्ञान् सच्छिष्यसहितानहम् ॥
युद्धकाण्डकथास्तोत्रं लिखितुं ग्रन्थरूपतः ।
रामभक्तैस्सदावन्द्यं हनूमन्तमुपास्महे ॥
अयञ्चपट्टाभिषेकालंकृतो युद्धकांडः ।

श्रीरामचन्द्राय नमः ।

॥ अथ कथास्तुतिप्रारंभः ॥

श्रुत्वाहनुमद्वचनं यस्तंप्रत्युत्तरंतदाऽभाणीत् । कृतकार्यं पवनसुतं तमहं सीताधवं भजेरामम् ॥१॥ दुष्करमपि कार्यंयो भर्त्राऽऽज्ञप्तः करोतिसश्लाघ्यः । इतियोदूतमभाणीत्तमहंसीताधवंभजे रामम् ॥२॥ भर्त्रोक्तंसाधयितुं शक्तियुतं तं तु मध्यमंप्राहुः । इतियोदूत * रामम्॥ ॥ ३ ॥ भर्तुः कार्यं स्वधिया कर्तुमयोग्यं तमाहुरधमं ज्ञाः । इतियोदूतम * रामम् ॥४॥ अद्यरघुवंशवृद्धिः सीतासन्दर्शनेनविहिताऽभूत्। इतियोदूत * रामम् ॥ ५ ॥ अद्यपरिष्वंगमिमं मद्दत्तंत्वं गृहाणपवनजने । इति तं योऽस्वजत मुदातमहं सीताधवं भजे रामम् ॥ ६ ॥ हरयोजलधिमपारं हनुमन्कथमद्यसन्तारिष्यन्ति । इति तं यस्समपृच्छत्तमहं सीताधवंभजे रामम् ॥ ७ ॥ अथकपिपतिरूचेगां प्राकृतवत्त्वं किमर्थमनुवदसि । इति यं चञ्चलधिषणं तमहंसीता * रामम् ॥८॥ त्यजबुद्धिमिमां कृपणामुत्साहवतोहिकार्यसिद्धिस्स्यात्। इतियं कपिपतिरभणत्तमहं सीता * रामम् ॥९॥ कपयस्सर्वे शूरास्तीर्त्वाऽब्धिंरावणं विजेतुमलम् । इतियंकपिपतिरभणत्तमहं सीता * रामम् ॥ १० ॥ अब्धौसेतुमबध्वा लङ्काशक्यानमर्दितुं शूरैः । इतियंकपिपति*रामम्॥ ॥ ११ ॥ सेतुर्यदिबद्धोऽब्धौ कपयो लङ्कां क्रुधाप्रधक्ष्यन्ति । इति यं कपि * रामम् ॥ १२ ॥ श्रुत्वासुग्रीवगिरं बलवन्तमुवाचगां हनूमन्तम् । तं सांजलिबन्धं यस्तमहं * रामम् ॥ १३ ॥ लङ्कापुरदुर्गाण्यपि बलपरिमाणंचगुप्तिकर्मचमे । ब्रूहीत्यूचेतं यस्तमहं सी * रामम् ॥१४॥ अथहनुमान्लङ्काया विस्तारं गुप्तिकर्म दुर्गाणि । यस्मिंश्शृण्वत्यभणत्तमहं*रामम्॥१५॥ शैलाग्रेभातिपुरी रचितासाविश्वकर्मणामनसा। इति दूतोयमभाणीत्तमहं सीताधवं भजेरामम् ॥१६॥ द्वारेद्वारेनियुतं विहितं प्रयुतश्चरक्षसांगुप्त्यै । इति दूतोयम*रामम् ॥१७॥ उत्तरभाग-

द्वारे बलिनो रथिनो वसन्त्यसंख्याताः । इति दूतोयमभाणीत्तमहं सीतधवं भजे रामम् ॥१८॥ भग्नाःपरिघाश्चमया दग्धालंकानिषूदितं सैन्यम् । इति हनुमान्यमभाणीत्तमहंसीताधवं भजे रामम् ॥ १९ ॥ बलवान्रावणपुत्रो निहतोऽक्षोनाम सचिवसैन्ययुतः । इति हनुमान्यमभाणीत्तमहंसी * रामम् ॥ २० ॥ श्रुत्वेत्थं दूतगिरं सुग्रीवं प्रेक्ष्य वक्तुमारेभे । वचनं यश्शास्त्रज्ञस्तमहं सीता * रामम् ॥२१॥ अद्य मुहूर्तोविजयश्शत्रुं जेतुंप्रयत्यतां जयदः । इति सुहृदंयोऽभाणीत्तमहं सीताधवं भजे रामम् ॥ २२ ॥ उत्तरफल्गुन्यद्यश्वोहस्तर्क्षंनयोग्यमभिगन्तुम् । इतिसुहृदंयोऽभाणी * रामम् ॥ २३ ॥ धन्यानि निमित्तान्यपि जायन्ते मे जयप्रदानि सखे । इति सुहृदंयोऽभाणीत्त*रामम् ॥ २४ ॥ नीलःप्रयातुसैन्यैरग्रेमार्गप्रदर्शकोबलवान् । इति सुहृदं योऽभाणीत्तमहं * रामम् ॥ २५ ॥ गजगवयगवाक्षास्ते यांत्वग्रे मार्गशोधकास्सैन्यैः । इति सुहृदंयोऽभाणीत्तमहं * रामम् ॥ २६ ॥ अधिरुह्याहं मारुतिमङ्गदमनुजोप्युभौसमेष्यावः । इति सुहृदंयोऽभाणीत्तमहं * रामम् ॥ २७ ॥ अथयस्यागिरं श्रुत्वा वानरराजस्समादिदेश तदा । कपिसैन्यं सन्तुष्टस्तमहं * रामम् ॥ २८ ॥ अथ कपिवीरास्सह्यं गिरिवरमापुर्नगैर्वृतं सफलैः । यत्सुहृदाज्ञातुष्टास्तमहंसी * रामम् ॥ २९ ॥ कपिवीरावधिरूढौ दाशरथी तौ धनुर्धरौ बलिनौ । यस्यसुहृत्समपश्यत्तमहं सीताधवं भजे रामम् ॥३०॥ अथशुभशकुनं दृष्ट्वा सौमित्रिर्यं वचोऽब्रवीत्तुष्टः । पश्यनिमित्तं शुभमिति तमहं * रामम् ॥ ३१ ॥ सीतां मुमोक्षयिषवस्सर्वेयुद्धाभिकांक्षिणः कपयः । प्रययुर्यन्मित्रहितास्तमहं सी * रामम् ॥ ३२ ॥ स्नात्वा नद्यां सलिलं पीत्वाभुक्त्वाफलानिरसवन्ति । यत्सुहृदंतेऽनुययुस्तमहं * रामम् ॥ ॥३३॥ पर्वतकान्तारनदी स्तीर्त्वा कपयोमहेन्द्रमाजग्मुः।जयकांक्षायत्सुहृदस्तमहं सी * रामम् ॥ ३४ ॥ अथतिमिनक्रझषाकुलमब्धि-

ददृशुर्भयप्रदंकपयः । जयकांक्षा यत्सुहृदस्तमहंसीताधवं भजेरामम्।
॥ ३५ ॥ अधिरुह्यमहेन्द्रंयोदृष्ट्वाजलधिं त्वपारमवरुह्य । अवदद्गि-
रमथसुहृदंतमहं सीता * रामम् ॥ ३६ ॥ सुग्रीवप्राप्नावयमब्धेस्तीरं
प्लवङ्गसैन्ययुताः। इति गिरमभणत्तं यस्तमहं*रामम् ॥३७॥ प्राप्तोऽद्य-
मन्त्रसमयस्सा गरतरणेमहान्धियासाध्यः । इतिगिरमभणत्तं यस्तमहं
सीता* रामम्॥३८॥ अद्यास्यां वेलायामब्धेस्सर्वं निवेश्यतां सैन्यम् ।
इति गिरमभणत्तं यस्तमहं * रामम् ॥३९॥ सेनापालास्स्वांस्वां सेनां
परिपालयन्तुबद्धधियः । इति गिरमभणत्तं यस्तमहं * रामम् ॥४०॥
इति यद्वचनं श्रुत्वा नीलस्सेनापतिस्तदासर्वम् । सैन्यमरक्षत्स्वधिया
तमहं सीता * रामम् ॥ ४१ ॥ अथपार्श्वस्थं भ्रातरमूचेयोवाचमश्रु-
पूर्णाक्षः । सुमबाणाहतकायस्तमहं सीता * रामम् ॥ ४२ ॥ जित्वा
रावणमाजौ द्रक्ष्यामिकदा विदेहजां युवतीम् । इत्यनुजंयोवाऽदीत्त-
महं सीता * रामम् ॥ ४३ ॥ बिंबोष्ठं तद्वदनं पास्यामिकदाऽहमीष-
दुन्नम्य । इत्यनुजं योऽवादीत्तमहं सीता * रामम् ॥४४ ॥ सीता
वियोगजातं दुःखं त्यक्त्वासुखंकदैष्यामि । इत्यनुजंयोऽवादीत्तमहं *
रामम् ॥ ४५ ॥ एवं विलपन्नुच्चैरनुजेनाऽऽश्वासितश्चयो युक्त्या ।
सन्ध्यां समुपास्ततदातमहं सीता * रामम् ॥ ४६ ॥ लङ्कांदृष्ट्वादग्धां
निहतान्रक्षोगणांश्चसुतमक्षम् । यद्विड्व्यसनं प्रापत्तमहंसी * रामम्॥
॥ ४७ ॥ कपिनै केनै वेदं सर्वं कृतामित्युपात्तबहुचिन्तः । यद्विड्
व्यसनं प्रापत्तमहंसीता * रामम् ॥ ४८ ॥ मन्त्रंजयस्यमूलं प्राहुः
प्राज्ञामनस्विनोपीति । यद्विड्व्यसनं प्रापत्तं सीता * रामम् ॥४९॥
संमन्त्र्यकार्यकारीसचिवैःप्रोक्तस्सपूरुषश्श्लाघ्यः। इतियद्वेष्याचिचिन्त-
त्तंसीताजानिमाश्रये रामम् ॥ ५० ॥ स्वयमेवकार्यकारीहठबुद्धिर्यस्स
मध्यमःप्रोक्तः । इतियद्वेष्यचिचिन्तत्तं सीताजानिमाश्रये रामम् ॥
॥ ५१ ॥ गुणदोषधर्मचिन्ता त्यागीकार्ये नरोऽधमो ज्ञेयः । इति

यद्द्वेष्यचिचिन्तत्तं सीता * रामम् ।।५२।। प्राप्यधिषणैकमत्यं सचिव कृतंमन्त्रमुत्तमं प्राहुः । इति यद्द्वेष्यचिचिन्तत्तं सीताजानि माश्रये रामम् ।।५३।। विविधमतयोपिसन्विवा यत्रसमानास्समध्यमो मन्त्रः । इति यद्द्वेष्यचिचिन्तत्तं सीता * रामम् ।। ५४ ।। यत्र श्रेयो नभवति सचिवैक्येप्यधम एवमन्त्रस्सः । इतियद्द्वेष्यचिचिन्तत्तं सीता ।।५५।। हेसचिवाः किं कार्यं रामोऽभ्येत्यद्यवानरैस्सहसा । इत्यूचेयद्विट्तां स्तं सीता * रामम् ।। ५६ ।। इत्थं यद्विड्वचनं श्रुत्वा प्रोचुर्वचः कृताञ्जलयः । सचिवा दशवदनंद्राक्तंसीता * रामम् ।। ५७ ।। अज्ञात्वास्वपरबलं राजानं भीषयन्तिबलहीनाः । इतियद्विषमूचुस्ते तं सीताजानिमाश्रये रामम् ।। ५८ ।। विजितादेवास्सर्वे जित्वाज्येष्ठं विमानमानीतम् । इति यद्विषमूचुस्तेतंसीता * रामम् ।। ५९ ।। दत्तामयेन दुहिता भार्यार्थेतेमधुश्च विजितोऽभूत् । इति यद्विषमूचुस्ते तं सीता * रामम् ।। ६० ।। वासुकितक्षक शङ्खप्रमुखा नागाजिताश्च युधिभवता । इतियद्विषमूचुस्ते तंसीता * रामम् ।। ६१ ।। भवताऽभ्यस्तामायास्सर्वान्जित्वाऽथदानवान्समरे। इति यद्विषमूचुस्तेतंसी * रामम् ।।६२।। ब्रह्मनियोगाद्भवतामुक्तःकारागृहात् त्रिलोकेशः । इति यद्विषमूचुस्तेतं * रामम् ।। ६३ ।। इन्द्रजिदेकस्समरे वानरसेनां हनिष्यति स्वबलात् । इतियद्विषमूचुस्तेतं * रामम् ।।६४।। अथसेनापति रूचे यद्विड्पुरतःकृताञ्जलिर्वचनम्। शूरःप्रहस्तनामातं सीता*रामम्।। ।। ६५ ।। बलिनोवयं प्रमत्ताः कपिनादुष्टेन वञ्चिता रात्रौ । इति यद्विषमाहसगांतंसीता * रामम् ।। ६६ ।। भवदाज्ञां प्राप्याहं सर्वां पृथिवीमवानरां करवै । इतियद्विषमाहसगांतंसीता * रामम् ।। ।। ६७ ।। अथदुर्मुखनामैकः क्रुद्धःप्रोवाच वाचममरारिः । यद्विषमुद्वीक्ष्यतदा तंसीता * रामम् ।। ६८ ।। अद्यैकोहं सागरतीरं प्राप्तान्कपीन्हनिष्यामि । इति यद्विषमाहसगांतंसीता * रामम् ।। ६९ ।।

अथवज्रदंष्ट्रनामा परिघं हस्तेवहन्गिरं प्रोचे । यद्वेषिणमति विनयात्तं सीताजानिमाश्रये रामम् ॥७०॥ रामंसुग्रीवयुतं सानुजकपिसङ्घमद्य-हन्म्येकः। इति यद्विषमाहसगांतंसीता*रामम् ॥७१॥ केचिन्मानुषवेषा गत्वारामं ब्रुवन्तुवचनमिदम् । इति यद्विषमाहसगांतंसीताजानि-माश्रये रामम् ॥ ७२ ॥ वयमद्यतवभ्रात्रा भरतेन प्रेषिता इति ब्रुव-ताम् । इति यद्विषमाहसगां तं * रामम् ॥७३ ॥ सेनासहितोभरत-स्त्वामुपयास्यत्यसाविितिब्रुवाताम् । इति यद्विषमाहसगांतं * रामम्॥ ॥ ७४ ॥ वयमथ चापगदासिप्रमुखैश्शस्त्रैर्हनाम शत्रुगणम् । इति यद्विषमाहसगांतंसीता * रामम् ॥ ७५ ॥ अथ कुंभकर्णपुत्रस्स्वबल-मवादीद्रघूत्तमंजेतुम् । यद्विट्पुरतोधीरस्तंसीता * रामम् ॥ ७६ ॥ इत्थं यद्विट्पुरतस्सचिवान्वदतस्समीक्ष्य सन्तप्तः । अवदद्विभीषणो गांतंसीता * रामम् ॥ ७७ ॥ नावज्ञाकर्तव्या शत्रुबलं किञ्चिदप्य-विज्ञाय । इति यद्विषमाहसगांतंसीता * रामम् ॥ ७८ ॥ दुर्वृत्ताः खरमुख्या रामेणहतास्स्वदेहरक्षायै । इति यद्विषमाहसगां * रामम्॥ ॥ ७९ ॥ कलहोमाभूद्भ्रातस्सीताभर्त्रातवाद्यशृणुममगाम् । इतियद्वि-षमाहसगांतंसीता * रामम् ॥ ८० ॥ यावल्लंकानहतातावत्त्वं राघ-वायदेहि सतीम् । इति यद्विषमाह * रामम् ॥ ८१ ॥ अनुजस्यापि वचोममपथ्यं शृणुराक्षसेन्द्रहेभ्रातः । इतियद्विषमाह * रामम् ॥८२॥ कोपं त्यजभजधर्मं जीवेमवयं सुखं सदारसुताः । इति यद्विषमाह * रामम् ॥ ८३ ॥ भ्रातः प्रसीदवचनं शृणुमेऽद्यत्वं प्रदेहितां तस्मै । इति यद्विषमाहसगां * रामम् ॥ ८४ ॥ इत्थं स्वानुजवचनं श्रुत्वा यद्विड्विसृज्यतान्सभ्यान् । स्वगृहं सायमविक्षत्तंसीता * रामम् ॥ ॥ ८५ ॥ धर्मार्थविदथकल्ये यद्विड्भ्राताप्रविश्यराजगृहम् । ज्येष्ठं नत्वाऽहगिरं तंसीता * रामम् ॥ ८६ ॥ पुर्यां सीताऽऽहरणप्रभृति शिवाः कूजितानि तन्वन्ति । इति यद्विषमाहसगां * रामम् ॥८७॥

गृध्राःपरिलीयन्ते पुर्यां सर्वत्र संघशः पश्य । इति यद्विषमाहसगांतं सीताजानिमाश्रये रामम् ॥ ८८ ॥ साध्वीवैदेहीसा रामायाद्यप्रदीय तां भवता । इति यद्विष * रामम् ॥ ८९ ॥ न्याय्यं सन्धार्यभवान् बुद्धौ कुरुताद्यशस्यमायुष्यम् । इतियद्विष * रामम् ॥९०॥ हितमथ-मृदुहेतुयुतं कालत्रययोग्यमुक्तमपिवचनम्। यद्विट्च्छ्रुत्वाऽहगिरंतंसी* रामम् ॥ ९१ ॥ नभयंपश्याम्यधुना जात्वपिसीतामहं नमुञ्चामि । इतियद्विट्प्राहगिरंतंसीता * रामम् ॥ ९२ ॥ अथ सहजमाप्तवादि-नमत्यजदुग्रोविभीषणं यद्विट् । वैदेहीकामार्तस्तंसीता * रामम् ॥ ॥ ९३ ॥ प्राप्यसभां सोप्यवदद्यद्विड्दूतान्कृतान्तदूतसमान् । आन यतराक्षसानितितंसीता * रामम् ॥ ९४ ॥ यद्विट्सचिवैस्साकंपौरा-स्सर्वेप्रविश्यराजसभाम् । स्वोचितपीठमवापुस्तं सीता * रामम् ॥ ॥९५॥ अथरथमास्थायशुभं यद्विट्सहजोप्यवाप्यराजसभाम् । अवि-शत्पीठं विनतस्तंसीता * रामम् ॥ ९६ ॥ परिषदमवलोक्य तदा प्रोचेवाचं प्रहस्तमथयद्विट् । गुप्त्यर्थं लङ्कायास्तंसीता * रामम् ॥ ॥ ९७ ॥ अनुजोऽपि कुंभकर्णष्षण्मासांत्स्वपिति निद्रयाव्याप्तः । इतियद्विडुवाचतदातंसीता * रामम् ॥९८ ॥ जनकसुता मम शय्यां नेच्छत्यारोढुमद्यशशिवदना । इति यद्विडुवाचतदातंसीता * रामम्॥ ॥ ९९ ॥ पञ्चशरोप्यमितशरं मामप्यद्यप्रबाधते धीरः । इति यद्विडु वाचागिरंतंसीता * रामम् ॥१००॥ ❀ संवत्सरकालंमांसाऽयाचत भर्तुराप्तिकामनया। इतियद्विडुवाचागिरं तं जितरक्षः पतिं भजे रामम् ॥ ॥ १०१ ॥ कार्यगतिर्दुर्ज्ञेयाब्रूतयथाबुद्धि सम्यगालोच्य । इति यद्वि-डुवाच * रामम् ॥१०२॥ भीतिर्ममनास्तिनरात्कर्तव्यं ब्रूतयूयमेको-क्त्या । इति यद्विडुवाचागिरं तंजितरक्षःपतिं भजे रामम् ॥ १०३ ॥ राघवविजयस्सीतासंगोप्युभयं कथंभवेद्ब्रूत । इतियद्विडुवाच* रामम्॥ ॥ १०४ ॥ इतियद्विट्परिदेवितमथघटकर्णो निशम्यगिरमूचे । क्रोध-

प्रस्फुरितोष्ठस्तंजितरक्षः पतिंभजे रामम् ॥१०५॥ न्यायेनराज्यभरणं कुर्वन्राजानखिद्यते पश्चात् । इति यद्विषमाहसगांतं * रामम् ॥१०६॥ आनीतां रामसतीं श्रुत्वाऽनर्थो विनिश्चितोऽस्तिमया । इतियद्विषमाह सगांतंजितरक्षः * रामम् ॥ १०७ ॥ दृष्टस्तदायदिस्यारामेणत्वंगता सुरेवभवेः । इति यद्विषमाह सगांतं जित * रामम् ॥ १०८ ॥ तव शत्रून्हत्वाहंत्वदभिप्राय समीकरिष्यामि। इतियद्विषमाहसगां*रामम्॥ ॥ १०९ ॥ अथयद्वेषिणमूचे समहापार्श्वोवचस्तदनुकूलम् । शृणुराज न्ममगिरमितितंजित * रामम् ॥११०॥ कुक्कुटवृत्तेन बलात्सीतामा-क्रम्यभुङ्क्ष्वनाथत्त्वम् । इति यद्रिपुमाहसगां * रामम् ॥१११॥ संप्राप्तं मधुहस्तं सम्यगपीत्वात्यजेत्कण्डहधीमान् । इतियद्रिपुमाहसगां* रामम् ॥११२॥ प्राप्तांच्छत्रूनथतेबलिनो वयमेत्यसंहरिष्यामः । इति यद्रिपुमाहसगांतं * रामम् ॥११३॥ इत्थं सचिवस्योक्तिं श्रुत्वावाचं जगादयद्वेषी । समहापार्श्वंदीनस्तंजित * रामम् ॥११४॥ पूर्वंपरमेष्ठि-गृहं गच्छन्तीं पुञ्जिकस्थलामभजम् । इतितमवादीद्यद्विट्तं जित * रामम् ॥ ११५ ॥ अथतद्ज्ञात्वाब्रह्मा शापं प्रादाद्बलात्कृतौस्त्रीणां। इति तमवादीद्यद्विट्तं जित * रामम् ॥११६॥ स्वबलात्त्वमन्यवनितां भोक्ष्यसिचेत्ते शिरःपतेच्छतधा। इति शापमाहयद्विट्तंजित * रामम्॥ ॥११७॥ शापाद्भीतोऽहन्तां शयनंनाऽऽरोपयेबलादधुना । इति सचिवमाह यद्विट्तं * रामम् ॥११८॥ इति तद्गिरमथयद्विट्सहजश्श्रुत्वा जगाद हितवचनम् । ज्येष्ठं कामशरार्तं तं जितरक्षःपतिंभजे * रामम् ॥ ११९ ॥ मास्तुबलवद्विरोधस्त्यजसीताशां रमस्वकान्ताभिः। इति यद्विषमाहसगांतंजित * रामम् ॥ १२० ॥ राघवमुक्तान्बाणान्माऽद्राक्षीस्त्वंदिशाद्यतां भर्त्रे । इति यद्विष * रामम् ॥ १२१ ॥ घट कर्णेन्द्रजिदाद्यास्समरे रामं निरीक्षितुं नालम् । इति यद्विषमाह * रामम् ॥ १२२ ॥ इत्थं विभीषणोक्तिं श्रुत्वाऽवादीद्गिरंप्रहस्तोऽपि ।

यद्विद्सहजेऽशृण्वतितंजितरक्षःपतिं भजे रामम् ॥ १२३ ॥ रामाद्भ
विताभीति स्समरेऽस्माकं कथन्नुनृपपुत्रात् । इतियद्विडनुजमूचेतंजित
रक्षःपतिं भजे रामम् ॥ १२४ ॥ श्रुत्वाप्रहस्तवचनं यद्विद्सहजो-
जगादपुनरपिगाम् । दशवदनस्यपुरस्तात्तंजित * रामम् ॥ १२५ ॥
शत्रून्भवतस्सचिवान्ज्ञात्वा सुहृदश्चकाम्यसौरमते । इत्याह यद्विडनु-
जस्तं * रामम् ॥ १२६ ॥ शौचंसत्यञ्चदया युष्मासु कदाऽपिनेत्यहं
जाने । इत्याहयद्विडनुजस्तंजित * रामम् ॥ १२७ ॥ राजारक्ष्यस्स-
चिवैरितिशास्त्रं नोभवत्सुगणनीयम् । इत्याह यद्विडनुजस्तं*रामम् ॥
॥ १२८ ॥ इतियद्विद्सहजोक्तिं श्रुत्वाप्रोचे तदेन्द्रजिद्वचनम् । नि-
र्मर्यादःकोपात्तंजित * रामम् ॥ १२९ ॥ अस्मिन्वंशे कश्चन धर्मिष्ठ-
स्त्वत्समःपुरानाभूत् । इति यद्विड्जःप्रोचेतंजित * रामम् ॥ १३०॥
शौर्ये धैर्येसत्ये त्वत्सदृशोनास्तिमत्पितृभ्रातः । इति यद्विड्जःप्रोचेतं*
रामम् ॥ १३१ ॥ भीषयसित्वं कस्मादस्मान्देवासुरादिजयतृप्तान् ।
इति यद्विड्जःप्रोचेतं * रामम् ॥ १३२ ॥ अथगिरमिन्द्रजिदुक्तां
श्रुत्वाऽवादीन्महार्थमपिवचनम् । यद्विद्सहजोधीरस्तंजित * रामम् ॥
॥ १३३ ॥ मन्त्रेनास्तिमतिस्ते बालिशबुद्धेस्तथाऽपि बहुवदसि ।
इत्याहयद्विडनुजस्तं जितरक्षःपतिं भजे रामम् ॥ १३४ ॥ आत्म
विनाशायत्वं हीनं वचनं पितृव्यमालपसि । इत्याहयद्विडनुजस्तं *
रामम् ॥ १३५ ॥ मद्भ्रातुस्त्वं शत्रुःपुत्रमिषान्मूलहानि कृद्भवासि ।
इत्याह यद्विडनुज * रामम् ॥ १३६ ॥ यमदण्डसमान्बाणान्रामप्र-
हितान्सहेतयुधिकोवा । इत्याहयद्वि * रामम् ॥ १३७ ॥ सर्वस्वं
सीतामपि रामाय निवेदयाशुहेभ्रातः । इत्याहयद्वि * रामम् ॥१३८॥
इत्यनुजेब्रुवतिवचः कोपाद्यद्विड्जगादपरुषगिरम् । कालवशोऽवरजं
तं तंजितरक्षः * रामम् ॥ १३९ ॥ कुलपांसनमद्यत्वां भ्रातृधियाऽहं
नहन्मि पापिष्ठम् । इति तं यद्विडवादीत्तं * रामम् ॥ १४० ॥ ज्ञाति

लोकेऽग्निसमस्स्वाश्रयनाशंकरोतिकिलसमये। इतितंयद्विडवादीत्तंजि-
तरक्षः पतिं भजेरामम् ॥१४१॥ श्रुत्वायद्वेषिगिरं सचिवैश्चतुरैश्चतुर्भि
रथगगने। स्थित्वाऽहवचो रुष्टस्तंजितरक्षःपतिं*रामम्॥१४२॥ ज्येष्ठः
पितृसदृशोमे परुषंवचनं त्वयोक्तमश्रौषम्। इतियद्विषमाहसगांतंजित*
रामम् ॥१४३॥ लोकेपुरुषास्सुलभास्सततं प्रियवादलब्धपाण्डित्याः।
इति यद्विषमाहसगांतं * रामम् ॥ १४४॥ अप्रियपथ्योक्तीनां वक्ता
श्रोताचदुर्लभे भवतः । इतियद्विषमाह * रामम् ॥ १४५ ॥ नत्वा-
मिछामिहतंद्रष्टुं समरेरघूत्तमस्यशरैः । इति यद्विषमाहसगांतं * रामम्॥
॥ १४६ ॥ रक्षपुरीश्चात्मानं स्वस्त्यस्तुमयाविनासुखीभूयाः । इति
यद्विषमाहसगांतं * रामम् ॥ १४७ ॥ हत्युक्त्वासमहात्मायंदाश-
रथिंसमाजगामतदा । स्वशरण्यंमन्वानस्तं* रामम् ॥१४८ ॥ गगन
स्थं सन्ददृशुर्यस्मिन्भक्त्यासभागतं सचिवैः । कपयो विभीषणंद्राक्तं
जित *रामम् ॥१४९ ॥ अथसर्वायुधसहितान्दृष्ट्वा कपयोनिशाचरान्
गगने । यन्मितं समवोचंस्तं जितरक्षःपतिं * रामम् ॥ १५० ॥ एते
निहन्तुमस्मानायान्त्यधुना निशाचरागगने । इति यन्मित्रं प्रोचुस्तं*
रामम् ॥ १५१ ॥ करधृत गिरितरुदृष्टदो यन्मित्राज्ञां प्रतीक्षतोयो
द्रुम् । खस्थोऽपश्यत्सहरींस्तंजित * रामम् ॥ १५२ ॥ स्ववधार्थं
राजाज्ञा मिच्छत्स्वेतेषु रावणावरजः । यद्भक्तःप्राहहरींस्तंजित*रामम्
॥ १५३ ॥ दशवदनस्याहमपि भ्रातानाम्नाविभीषणोऽस्मीति ।
यद्भक्तःप्राहकपींस्तं भक्तेष्टप्रदंभजे रामम् ॥१५४॥ हत्वासामिति
जटायुषमाहरदवनीसुतां ममज्येष्ठः । इति यद्भक्तोऽभाषततंभक्ते *
रामम् ॥ १५५ ॥ रुद्धाऽऽस्तेऽशोकवने रक्षस्त्रीभिस्सुरक्षितासीता ।
इति यद्भक्तोऽभाषततंभक्ते * रामम् ॥ १५६ ॥ रामायार्पयसीतां
मास्तुविरोधस्तवेत्यवोचमहम् । इति यद्भक्तोऽभाषततंभक्ते* रामम्॥
॥ १५७ ॥ अथमद्वचनं श्रुत्वा परुषां गिरमाहसोपिदशवदनः। इति

यद्भक्तोऽभाषततंभक्तेष्टप्रदं भजेरामम् ॥ १५८ ॥ दारान्पुत्रान्बन्धून्हित्वारामं शरण्यमहमगमम् । इति यद्भक्तोऽभाषततंभक्तेष्टप्रदं भजे रामम् ॥ १५९ ॥ लोकशरण्यायास्मैक्षिप्रं यूयं निवेदयतमांद्राक् । इति यद्भक्तो * रामम् ॥ १६० ॥ सुग्रीवोवचनमिदं श्रुत्वा वाचं जगादसंरब्धः । यंसानुजमथसुहृदंतंभक्तेष्टप्रदं भजे रामम् ॥ १६१॥ तवशत्रोरनुजोयं त्वांशरणं प्राप्तुमस्ति विष्णुपदे । इतियं सुहृद्भणद्रां तंभक्ते * रामम् ॥ १६२ ॥ मन्त्रव्यूहनयादिषु युक्तोभावितुं त्वमर्हसिप्राज्ञः । इतियंसुहृद * रामम् ॥ १६३॥ शत्रुप्रणिहितमेनं ज्ञात्वा दण्डोविधीयतां भवता । इतियंसुहृद्भण * रामम् ॥ १६४ ॥ इति मित्रगिरंश्रुत्वाहनुमत्प्रमुखानुदैक्षताशुदृशा। ज्ञातुंयस्तदभिमतंतंभक्ते * रामम् ॥ १६५ ॥ शत्रोःसंप्राप्तमिमं सम्यग्ज्ञात्वाऽथसङ्ग्रहःकार्यः । इत्यंगदोयमभणत्तं भक्तेष्टप्रदं भजे रामम् ॥ १६६॥ चारेणेंगितमस्य ज्ञात्वासम्यक्चसङ्ग्रहः कार्यः । इति शरभोयमवादीत्तं भक्तेष्ट प्रदंभजे रामम् ॥ १६७ ॥ प्राप्तोऽकालेदेशेशंक्यस्तस्मादयं न इत्यूचे । ऋक्षाणामाधिपोयं तं भक्तेष्ट * रामम् ॥ १६८॥ संपृच्छ्यशनैर्वचनाद्ज्ञात्वेंगितमस्यसङ्ग्रहः क्रियताम् । इति मैन्दोयमवादीत्तंभ * रामम् ॥ ॥ १६९ ॥ अथहनुमांश्रुत्वैतद्वचनंसर्वं विरुद्धमन्योन्यम् । कर्तव्यं यमभाणीत्तंभ * रामम् ॥ १७० ॥ ब्रुवतोस्यनास्तिवदनेदुर्लक्षणतादुरात्मताहृदये । इति हनुमान्यमवोचत्तंभक्ते * रामम् ॥ १७१ ॥ स्वज्येष्ठेदौरात्म्यं त्वयिविक्रममप्युदीक्ष्यभजतित्वाम् । इति हनुमान्य* रामम् ॥ १७२ ॥ राज्यंप्रार्थयमानस्त्वामगमत्सोपि राज्यदंसुहृदे । इति हनुमान्य * रामम् ॥ १७३ ॥ इत्थंहनुमद्वचनंश्रुत्वायःप्रत्यभाषताशुकपीन् । स्वमनस्थमभिप्रायं तंभक्तेष्ट * रामम् ॥ १७४ ॥ अस्तिविवक्षाकाचिन्मित्रेषु भवत्सुराक्षसंप्रतिमे । इत्याहकपीन्द्रंयस्तंभक्तेष्ट * रामम् ॥ १७५ ॥ मित्रत्वेनप्राप्तं राक्षसमेनं कथंत्यजेय-

महम् । इत्याहकपीन्द्रंयस्तं भक्तेष्ट * रामम् ॥ १७६॥ सुग्रीवस्त्वथ-वचनं श्रुत्वायत्प्रोक्तमाशुधर्मज्ञः । विहितांजलिरवदद्गांतंभक्तेष्टप्रदं भजे रामम् ॥ १७७ ॥ साधुर्वाऽसाधुर्वा शरणागतरक्षकस्यतवरक्ष्यः। इतियंसुहृद्भणद्गां तं भक्ते * रामम् ॥ १७८ ॥ वक्तव्यं सूक्ष्मतमं श्रुणुकपिनाथत्वमद्यवचनंमे । इति सुहृदमाहयोगां तंभक्ते * रामम्॥ ॥ १७९ ॥ नाहं तत्कुलजातो राज्यार्थीमामगादसौ शरणम् । इति सुहृदं योऽभाणीत्तंभक्ते * रामम् ॥ १८० ॥ ग्राह्यो विभीषणोयं शत्रोरनुजोऽपि शरणमापन्नः। इति सुहृदंयोऽभाणीत्तं भक्ते * रामम्॥ ॥१८१॥ अभयं ददामिसकृदप्यागतशरणार्थि सर्वलोकेभ्यः। इति सुहृदंयो * रामम् ॥ १८२ ॥ शरणं रामेति वदन्त्यजतुभयं कालमृ-त्युतोऽपिजनः । इति सुहृदं * रामम् ॥ १८३॥ श्रुत्वाऽथोयस्यगिरं ममचाप्यात्मैनमद्यवेत्यमलम् । इति कपिपतिराहागिरं तं भक्तेष्टप्रदं भजे रामम् ॥ १८४ ॥ तस्माद्विभीषणोयं मैत्रीमस्माभिरद्यचाऽऽप्नोतु। इति कपिपतिराहागिरन्तं* रामम् ॥१८५॥ अभयेदत्तेप्रभुणायेन चतु-र्भिर्विभीषणोमात्यैः । गगनाद्भूमिंप्रापत्तंसक्ते * रामम् ॥ १८६ ॥ शरणान्वेष्यथपदयोर्भक्त्याथस्यप्रणम्यागिरमूचे । बह्वर्थांधर्मयुतां तं भक्ते * रामम् ॥ १८७ ॥ अनुजोभवतश्शत्रोस्सर्वशरण्यं भवन्तमह-मागाम् । इति यमभाणीत्सगिरं तं भक्ते * रामम् ॥ १८८ ॥ अस हिष्णुस्त्वपमानं तेनकृतं भवन्तमहमापम् । इतियमभाणीत्सगिरंतं * रामम् ॥ १८९ ॥ इतिवादिनमथतंयोऽपृच्छद्रक्षो बलाबलं सर्वम् । आर्तपरित्राणेच्छुस्तं * रामम् ॥ १९० ॥ पूर्वं तपसातुष्टो ब्रह्माप्रादा-दवध्यतां तस्मै । इति भक्तोयमवादीत्तं भक्ते * रामम् ॥ १९१ ॥ त्यक्त्वामनुष्यगणनां सर्वेभ्योऽसाववध्यतां प्रापत् । इति भक्तो यम-वादीत्तं * रामम् ॥ १९२ ॥ इतिरावणबलमुक्त्वा सैन्येशबलंविव-क्षुरारेभे । यत्पुरतो भक्ताग्र्यस्तं भक्ते * रामम् ॥ १९३ ॥ युधि

धिक्कृतशत्रुबलः कैलासेविजितमाणि भद्रस्सः । इत्याहसयत्पुरतस्तं भक्तेष्टप्रदंभजे रामम् ॥ १९४ ॥ बलवान्प्रहस्तनामारावणतोषप्रद-स्सदातुष्टः । इत्याहसयत्पुरतस्तम्भक्त * रामम् ॥ १९५ ॥ दशवद नावरजोमेज्येष्ठोऽस्तिचकुंभकर्ण इतिनाम्ना । इत्याह स यत्पुरतस्तंभ* रामम् ॥ १९६ ॥ युधिदिक्पतिजेतासौ धातुर्वरदाद्गृहीतबहुनिद्रः। इत्याहसवाचं यंतंभक्त * रामम् ॥ १९७ ॥ त्वद्रिपुपुत्रः कश्चि-न्नाम्नाकृत्येनचेन्द्राजिच्चेति । इत्याहसवाचं यं तंस्वीकृतभक्तमाश्रये रामम् ॥ १९८॥ अग्निसन्तर्प्य समित्यन्तार्धिमवाप्यहन्त्यरीन्सोऽपि। इत्याहसवाचं यंतं*रामम् ॥१९९॥ सेनापतयो बहवस्सन्तिमहापार्श्व मुख्यमांसाशाः । इत्याहस * रामम् ॥ २०० ॥ इत्थं विभीषणोक्तां वाचं श्रुत्वापुनर्जगादगिरम् । विनतंभक्तं प्रतियस्तं स्वीकृतभक्त-माश्रये रामम् ॥ २०१ ॥ हन्यां विंशतिहस्तं शस्तं युधिसप्रहस्तमेक-स्तम् । इतियस्तं गिरमभणत्तंस्वीकृत * रामम् ॥ २०२ ॥ दत्वातुभ्यं लङ्कां राजानं त्वामहं करिष्यामि । इतियस्तं गिर* रामम् ॥२०३॥ प्रविशेद्वापाताळं विधिलोकंवानिहन्मितं शत्रुम् । इतियस्तं गिर * रामम् ॥२०४॥ नाहमहत्वायुधितं यास्यामिपुरीं शपामि सहजैस्वैः। इतियस्तं गिर * रामम् ॥२०५॥ श्रुत्वाऽथगिरं सुहृदो यस्यविनीतः प्रणम्यधर्मात्मा । वक्तुमुपचक्रमेगांतं स्वीकृतभक्त *रामम् ॥ २०६ ॥ राक्षसवधविषयेहं भवतस्साह्यं यथोचितं कुर्वे । इतियममाणीद्भक्तस्तं स्वीकृत भक्तमाश्रये रामम् ॥ २०७ ॥ लङ्काप्रधर्षणेहं मतिसाहाय्यं करोमि रघुवीर । इति यमभा * रामम् ॥ २०८ ॥ इत्थं निगदन्तं यस्तोषादालिङ्ग्यतं ततोऽवरजम् । अभणच्छ्रितकल्पद्रुस्तंश्रित-रक्षोनुजं भजे रामम् ॥ २०९ ॥ अभिषिञ्चाद्यविभीषणमनुजैनं राक्ष-साधिपत्येत्वम् । इतियोऽनुजमभणद्गान्तं श्रित * रामम् ॥२१०॥ अथसौमित्रिस्तुष्टो वानरमध्येऽभ्यषिञ्चदेनंद्राक् । यस्याज्ञां शिरसिवहं

स्तंश्रितरक्षोनुजं भजे रामम् ॥ २११ ॥ अथसुग्रीवो हनुमान्यद्भक्तं वाचमूचतुश्चतदा । अंबुधिसन्तरणात्थं तंश्रितरक्षोनुजं भजे रामम् ॥ ॥२१२॥ अब्धेस्तरणोपायं वदतु भवानित्यपृच्छतांतौद्वौ । यद्भक्तं धीमन्तं तंश्रितरक्षो * रामम् ॥ २१३ ॥ इतिताभ्यामथपृष्टो यद्भक्तो वाचमाह सन्तुष्टः । अब्धेस्तरणार्थंद्राक्तंश्रित * रामम् ॥२१४॥ उदधिंराजाऽस्माकं रामश्शरणं व्रजत्विदानींद्राक् । इतियद्भक्तोभाणीत्तं श्रित * रामम् ॥ २१५ ॥ इत्थं विभीषणोक्तिं श्रुत्वोचेद्राक्सलक्ष्मणं रामम् । यन्मित्रं सुग्रीवस्तं श्रित * रामम् ॥ २१६ ॥ अथ कपिपतिं सौमित्र्योर्वाचादर्भास्तृते तटेजलधेः । यस्संविवेशनियमात्तंश्रि* रामम् ॥ २१७ ॥ अथयन्मितध्वजिनीं दृष्ट्वालङ्कां प्रविश्यशार्दूलः । लङ्केशंप्राहगिरंतंश्रित * रामम् ॥ २१८ ॥ वानरपतिनागुप्तौ दशरथपुत्रौ समागतौभातः । इतियद्द्विषमाहचरस्तं श्रित * रामम् ॥ ॥२१९ ॥ सान्त्वं वा भेदोवा शीतायादानमेव वा क्रियताम् । इति यद्द्विषमाहचरस्तं श्रितरक्षोनुजं भजेरामम् ॥२२०॥ अथशार्दूलस्यगिरं श्रुत्वाऽवादीच्छुकंचरं वचनम् । यद्द्वेषीदुष्टमतिस्तं* रामम् ॥ २२१ ॥ सुग्रीवं ब्रूहित्वं मद्वचसाशीघ्रमेत्यानिर्भीकः । इति तंयद्द्वेष्यवदत्तं श्रित * रामम् ॥ २२२ ॥ इति सन्दिष्टश्चारो गत्वाऽवादीन्नभस्थितो वाचम् । राज्ञोक्तां यत्सुहृदेतं श्रितरक्षो * रामम् ॥ २२३ ॥ राजकुले जातस्त्वं भ्रातृसमोमे हरीशयाहिपुरम् । इति यत्सुहृदश्रणोद्गान्तम् श्रितरक्षो रामम् ॥ २२४ ॥ किन्तवलाभो भ्रातर्मास्तु विरोधोमया घ्रशृणुवचनम् । इति यत्सुहृदशृणो * रामम् ॥ २२५ ॥ गच्छत्वं किष्किन्धां हरिभिस्साकंस्थिरोस्तुनौस्नेहः । इतियत्सुहृदशृणो*रामम्॥ ॥ २२६ ॥ अथतंकपयस्तूर्णं चाप्लुत्यनभोनिपात्यभुविजघ्नुः। यद्विद् प्राहितं चारन्तं श्रित * रामम् ॥ २२७ ॥ अथसोऽकूजच्चारःकपयोमांघ्नन्ति रामपश्यत्वम् । इतियद्वेषिप्राहितस्तं श्रित* रामम् ॥२२८॥

शुकपरिदेवितमथयश्श्रुत्वाऽवादीत्कपींश्वधर्मज्ञः । चारवधपरिजिहीर्षुस्तं श्रितरक्षोनुजंभजे रामम् ॥ २२९ ॥ शास्त्रीयोदूतवधश्चारवधोवाभवेन्नशूराणाम् । इतियोऽमोचयदथतंतंश्रित * रामम् ॥ २३० ॥ अथभूत्वागगनस्थो यद्वेष्युक्तं वचोनिखिलमुक्त्वा । प्रतिगिरमयाचतशुकस्तं श्रित *रामम् ॥ २३१॥ अथयत्सुहृदाहशुकं ममभित्रं त्वं नजातुरामद्विट् । इतिवदतंदशगळमितितं श्रित * रामम् ॥ २३२॥ त्वां सुतबन्धुसमेतं रामाराति निहन्मियन्मित्रम् । इतिवदतमितितमूचेतं श्रितरक्षो * रामम् ॥ २३३ ॥ शीघ्रंगत्वालङ्कां वद दशवदने मदुक्तवचनंत्वम् । इति तं यत्सुहृदवदत्तंश्रित * रामम् ॥ २३४ ॥ नायंदूतोराजंश्चारकोमे विभातिगणितबलः । इतियत्सुहृदश्शृणोदूगां तं श्रित * रामम् ॥ २३५ ॥ अंगदगादितां वाचं श्रुत्वा कपयश्शुकं तदाजगृहुः । पश्यति यत्सुहृदिद्राक्त श्रित * रामम् ॥ २३६ ॥ अथसोऽक्रन्दद्रामप्राणान्मेरक्षभिद्यतेऽक्षियुगम् । इति शुकगिरमश्शृणोद्यस्तं श्रित * रामम् ॥ २३७ ॥ जह्यां चेत्प्राणानहमशुभं सर्वं मदीयमुपभुङ्क्ष्व । इति यमवादीत्सशुकस्तं श्रित * रामम् ॥ २३८ ॥ श्रुत्वातत्परिदेवनमथदूतं योऽयमोचयद्धननात् । नामश्रुति तुष्टोद्राक्तं श्रितरक्षो * रामम् ॥ २३९ ॥ अद्याब्धेस्तरणंवा मरणं वामेस्तुदर्भशयितस्य । इतियोव्रतनिष्ठोभूत्तं श्रित * रामम् ॥ २४० ॥ दक्षिणमुपधायभुजं विधिवत्प्रयतोऽशयिष्टयोऽब्धितटे । तिस्रोरात्रीर्नियमात्तं श्रित * रामम् ॥ २४१॥ अब्धेरप्रत्यक्षाद्व्रतनिष्ठो पिकुधासमीपस्थम् । अनुजंगिरमवदद्यस्तं श्रितरक्षो * रामम् ॥ २४२ ॥ क्षमयायुक्तमशक्तंमांमनुतेऽयं विलोकयाऽद्यत्वम् । इत्यनुजं योऽभाणीत्तं श्रित * रामम् ॥ २४३ ॥ आनयचापं बाणानेनं जलधिं विशोषयिष्यामि । इत्यनुजं योऽभाणीत्तं * रामम् ॥ २४४॥ पद्भ्यां यान्तुप्लवगाजलधिं पश्याद्यनिर्जलंकरवै । इत्यनुजंयोऽभाणीत्तं श्रित * रामम् ॥२४५॥

अथयःकरधृतचापोविशिखांस्तीक्ष्णान्युयोज कोदण्डे । दानवपन्नगभयदांस्तं श्रितरक्षोनुजं भजे रामम् ॥ २४६ ।' अथसौमित्रिर्मा मे त्युक्त्वा वाचंधनुश्चयेन धृतम् । आलम्बतहस्ताभ्यान्तं श्रितरक्षो * रामम् ॥ २४७ ॥ अद्यमम कार्मुकस्थो विशिखस्त्वामद्यशोषणं कुरुते। इत्यभणद्योजलधिं तं श्रित * रामम् ॥ २४८ ॥ ममपौरुषमब्धेत्वं ब्राह्मेणास्त्रेणपश्यसन्तुष्टः । इत्यवदद्यो * रामम् ॥२४९॥ संयोजित विध्यस्त्रे चापेक्रुद्धेन येनजगदखिलम् । भीतंबभ्राम तदातांश्रित * रामम् ॥ २५० ॥ पश्चाच्चक्रामाब्धिर्वेलांत्यक्त्वा यदीयशरतप्तः । रूपं सदिदर्शयिषुस्तंश्रित * रामम् ॥ २५१ ॥ प्राञ्जलिरुदधिर्वाक्यं भीतोऽवादीद्यमीशसमशौर्यम् । शरपाणिमथोदृष्ट्वा तंश्रित * रामम् ॥ ॥२५२॥ सृष्टोभवतैवाहं पूर्वं जाड्याश्रयोभवेति सयमूचे। शरपाणिमथोदृष्ट्वातंश्रित*रामम्॥२५३॥ जलसन्तरणोपायंहर्यक्षाणांवदामिवाचाऽहम् । इतिजलधिर्यमवोचत्तंश्रि*रामम्॥२५४॥पितृदत्तवराद्यनळस्सेतुं बध्नातुवृक्षदृषदाद्यैः । इति जलधिर्यमवोचत्तं * रामम् ॥ २५५ ॥ ❀ उक्त्वैवं जलधिरगादन्तर्धिमथोवितीर्य यस्मैद्राक् । शरलक्ष्यंमरुभूमिं तं जलधेर्भीतिदं भजेरामम् ॥ २५६ ॥ अथकपयस्सालादीन्वृक्षांश्शैलान्बलात्समाहार्षुः । यत्सुहृदाज्ञावशगास्तं जलधे * रामम् ॥ ॥ २५७ ॥ सूत्राण्यन्येजगृहुर्दण्डान्केचिद्वलीमुखाजगृहुः । यत्सुहृदाज्ञावशगास्तंजलधे * रामम् ॥ २५८ ॥ विहितानियोजनानि प्रथमे नाह्नाचतुर्दशांबुनिधौ । यस्मिन्पश्यति सेतुं तं जलधे * रामम् ॥ ॥ २५९ ॥ अथयोजनानि विंशतिरपरेणाह्नाकृतानि कपिवीरैः । यस्मिन्पश्यतिसेतुं तंजलधे * रामम् ॥ २६० ॥ अन्येनचैकविंशति रह्नाविहितानियो जनानितदा । यस्मिन्पश्यति सेतुं तंजल*रामम् ॥ ॥ २६१ ॥ द्वाविंशतिश्चतुर्थे विहितानिच योजनानितैरह्नि । यस्मिम् पश्यतिसेतुं तंजल*रामम् ॥२६२॥ दिवसेपञ्चम आसन्योजनसंख्या

स्तदा त्रयोविंशत् । यस्मिन्पश्यति सेतुं तंजलधेर्भीतिदंभजे रामम् ॥
॥ २६३॥ इत्थं बबन्धसेतुं जलधौधीमान्नळश्चकपिसाह्यात् । यस्मिन्
पश्यति तोषात्तं * रामम् ॥ २६४ ॥ दशयोजनमायामैर्दैर्घ्येशतयो
जनं नळस्सेतुम् । यत्तृप्त्यैसोऽभान्सीत्तं जलधेर्भीति * रामम् ॥
॥ २६५ ॥ ददृशुस्सर्वे देवा भवबन्धहरं नळेनकृतबन्धम् । यस्या
ज्ञावशगेनच तं जल * रामम् ॥ २६६ ॥ तत्रगदापाणिद्राग्भक्तस्स-
चिवैश्चतुर्भिरनुयुक्तः । यंप्रणिपत्यासेवत तं जलधेर्भीतिदं भजेरामम्॥
॥ २६७ ॥ सुग्रीवस्त्वथवाचंप्रोचे मोचाफलादि सद्दशरसाम् । यस्य
समीपेविनतस्तं * रामम् ॥ २६८ ॥ आरोह हनूमन्तं त्वं सौमित्रि-
स्तथांगदंरुह्यात् । इति यंसुहृदभणद्गां तंजल * रामम् ॥२६९॥ अद्ययु
वां कपिवीरौ खपदव्यातारयिष्यतस्सुखिनौ । इति यं सुहृदभणद्गां
तंजल*रामम् ॥२७०॥ उक्त्वेत्थं येनसमंसावरजेन प्रयाणमकरोद्राक्।
कपिराजस्सैन्ययुतस्तं जल * रामम् ॥२७१॥ उडुपेनाब्धौ केचिन्मा-
र्गमलब्ध्वा विहायसाकेचित् । यत्पुरतोब्धिं तेरुस्तंजल * रामम् ॥
॥ २७२ ॥ तत्कर्मवीक्ष्यदेवैः किन्नरसिद्धादिभिस्तदामुदिताः । यम-
पूपुजन्तमुनयस्तं जल * रामम् ॥ २७३ ॥ शत्रुन्जयभोराघव पालय
सर्वां स सागरामुर्वीम् । इति सर्वे यमशंसंस्तंजल * रामम् ॥२७४॥
अथसुग्रीव विभीषण सहितो लङ्कांप्रतिप्रतस्थेयः । दुष्टवध विहित-
धिषणस्तं * रामम् ॥ २७५ ॥ अथयोदृष्ट्वालङ्कां सीतांमनसा विचि
न्त्य विरहार्तः । अनुजमभाषतवचनं तंजलधे * रामम् ॥ २७६ ॥
परितस्थानेस्थाने सैन्यंकपयोविशन्तुयुधिनिपुणाः । इत्यवदद्योऽवरज-
न्तं* रामम् ॥ २७७ ॥ लङ्कां मिमर्दयिषवो गिरिशृङ्गादीन्प्रगृह्यचा-
सेदुः । यस्मिन्पश्यतिकपयस्तं जलधे * रामम् ॥ २७८ ॥ यस्याज्ञा-
प्रविमुक्तस्तोषाद्राजानमेत्य गिरमूचे । शृणुदशवदनेति शुकस्तंजलधे*
रामम् ॥ २७९ ॥ अब्धेरुत्तरतीरं गत्वाऽऽयोचंकपीश्वरंतवगाम् । इति

यद्विषमाहशुकस्तं जलधेर्भीतिदंभजे रामम् ॥२८०॥ श्रुत्वा तवगिर मवदत्सोहं भ्रातानतेसिशत्रुरिति । इतियद्विषमाहशुकस्तं * रामम् ॥ ॥ २८१ ॥ कपयोऽशक्यावक्तुं प्रतिवचनं वानलभ्यते तेषाम् । इति यद्विषमाहशुकस्तं * रामम् ॥ २८२ ॥ आशुप्रयच्छसीतांयुद्धं वास्मै प्रदीयतां भवता । इति यद्विषमाहशुकस्तं जल *रामम् ॥ २८३ ॥ इत्युक्तोयद्वेषी नाहं सीतां कदापिमुञ्चामि । इतिशुकमवदद्वचनं तं जल * रामम् ॥२८४॥ वीर्यं ममसमितिनरः पश्यतुरामोमदीयशर-कृत्तः । इतियद्विड्रामवदत्तंजल * रामम् ॥ २८५ ॥ अथयद्विड्गिर-मवदत्साचिवौशुकसारणौ तदावीक्ष्य । रिपुसैन्यपरीक्षायै तं जलधे * रामम् ॥ २८६ ॥ गत्वाऽद्राक्तत्रयुवामापततं वीक्ष्यशत्रुसैन्यबलम् । इतितौ यद्विडवादीत्तंजलधे * रामम् ॥ २८७ ॥ आयातं झडिति युवां दशरथसुतयोर्बलं परीक्ष्यधिया। इतितौ यद्विडवादीत्तं*रामम्॥ ॥ २८८ ॥ इत्यादिष्टौतौद्राग्वधरिरूपधरौप्रविश्यचैक्षेताम् । यं सानुज सैन्ययुतं तंजल * रामम् ॥ २८९ ॥ अथभक्तो यमवादीत्प्रच्छन्नौ तौ विभीषणोन्वीक्ष्य । क्रव्यादावेताविवितं जलधे * रामम् ॥२९०॥ अथदीनौतौदृष्ट्वा विगताशौ जीविते तदाऽभाणीत् । भयदोयःपापानां तंजल * रामम् ॥ २९१ ॥ प्रहसन्गिरमूचेयः कार्यं राज्ञोयथोक्तमभ वद्वा । इतितौ द्वेषिप्रहितौ तं जल * रामम् ॥ २९२ ॥ वधमर्हथो नदूतौ सम्यग्दृष्ट्वाबलंचमांच युवाम् । गच्छतमितियोऽभाणीत्तं जल* रामम् ॥ २९३ ॥ लङ्कांप्रविश्यनगरीं वक्तव्योमद्गिरासदशवदनः । इति यस्तौगिरमूचे तं जल * रामम् ॥२९४॥ श्वस्त्वं लङ्कान्द्रक्ष्यासि विंशत्यादृष्टिभिश्चविध्वस्ताम् । इति वक्तुमाहतौ यस्तंजल * रामम्॥ ॥२९५॥ प्रतिनन्द्यैतौतं द्राक्प्रतिगम्यपुरीं वचस्तदाऽब्रूताम् । येनो-क्तमिदं राज्ञे तं जल * रामम् ॥ २९६ ॥ तत्रसहजगिराज्ञात्वा येनो न्मुक्तौ समागतावावाम् । इतिगिरमब्रूतान्तौ तं जल*रामम् ॥२९७॥

तरतस्तस्यबलस्योत्तीर्णस्यान्तो न विद्यते ज्ञातुम् । इति यद्विषमब्रूताम्
तं जलधेर्मीतिदं भजे रामम् ॥२९८॥ वैरुध्येनालन्ते रामायाद्यप्रदी-
य तां सीता । इति यच्छत्रुमवक्तां तं जलधे * रामम् ॥ २९९ ॥
श्रुत्वा तद्वचनमथोसारणमूचेगिरश्चयद्वेषी । नाहमदां सीतामितितं
जल * रामम् ॥ ३०० ॥ इत्युक्त्वातं यद्विट्प्रासादं सोऽधिरुह्यकपि
सैन्यम् । लङ्कामभितोऽपश्यत्तं जल * रामम् ॥ ३०१ ॥ तदपारम-
संख्येयं वानरसैन्यं विलोक्य यद्वेषी । सारणमित्थमपृच्छत्त महं
मुक्त्यै सदाभजे रामम् ॥ ३०२ ॥ आचक्ष्वसारणत्वं सेनामध्ये
प्रधानकपिवीरान् । इति तं यद्विडपृच्छत्तमहं मुक्त्यैसदाभजेरामम् ॥
॥ ३०३ ॥ श्रुत्वायद्वेषिगिरं वाचं प्रोचेऽथसारणोभूपम् । निर्दिश्य
चकपि सैन्यं तमहं मुक्त्यै * रामम् ॥ ३०४ ॥ संख्यातुमशक्यास्ते
बहूळत्वाद्वच्मिकिञ्चिदवमृश्य । इत्याह स यद्वध्यं तमहंमु * रामम् ॥
॥ ३०५ ॥ घोषेणयोद्यमहतागर्जन्लँकामुपैतिनीलस्सः । इत्याहसयद्व
ध्यं तमहं * रामम् ॥ ३०६ ॥ वालिसुतोंगदनामात्वां युद्धार्त्थं स
माह्वयतिधैर्यात् । इत्याहसयद्वध्यं * रामम् ॥ ३०७ ॥ अब्धौसेतुर्ब-
द्धो येनसधीरो नळोऽद्यपश्यतिनौ । इत्याहसयद्वध्यं तमहं मुक्त्यै स-
दाभजे रामम् ॥ ३०८ ॥ प्रत्येकंकपयोऽमीलंकां सर्वां विनाशयितु-
मीशाः । इत्याहसयद्वध्यं * रामम् ॥ ३०९ ॥ इत्थं सारणवचनं
शृण्वन्तं यद्विषं समालोक्य । शुकनामागिरमवदत्तं * रामम् ॥
॥ ३१० ॥ मैन्दाद्विविदौकपिपति सचिवौ लङ्कां विमर्दितुं शक्तौ ।
इत्याहसयद्वध्यं तमहं * रामम् ॥ ३११ ॥ यद्भार्येयंसीता तं पश्य-
त्वंगृहीतकोदण्डम् । इत्याहसयद्वध्यं * रामम् ॥ ३१२ ॥ यत्स
विधेधृतचापस्तिष्ठति वीरस्सलक्ष्मणोबलवान् । इत्याहस * रामम् ॥
॥ ३१३ ॥ तत्सव्यपार्श्ववर्ती तवसहजोऽयं कृताभिषेकोभूत् । इत्या
हसयद्वध्यं * रामम् ॥ ३१४॥ भूत्वाऽयं तद्वशगस्सर्वानसान्निहन्तुम-

मिलषति । इत्याहसयद्र्ध्यं तमहं मुक्त्यैसदाभजे रामम् ॥ ३१५ ॥ पश्यकपि सङ्घमध्ये काञ्चनमालागळश्च सुग्रीवम् । इत्याह*रामम् ॥ ॥ ३१६ ॥ एषकपीशोयोद्धुं राक्षसराजत्वयाभिलषतीश । इत्याह * रामम् ॥ ३१७ ॥ विजयेयत्नः कार्योभवताभूपाशुरामलक्ष्मणयोः । इत्याह * रामम् ॥ ३१८॥ श्रुत्वातयोश्चवचनं यद्विट्सहजं चसानुजं रामम् । कपिवीराम्श्चापश्यत्तमहं * रामम् ॥ ३१९॥ इत्थं श्रुतवैरिबलोजातक्रोधस्तदाचयद्वेषी । निर्भत्स्यावादीत्तौ तमहं * रामम् ॥ ॥ ३२० ॥ गच्छतमस्मादेशात्ज्ञात्वोपकृतिं युवांनहन्म्यधुना । इति यद्विट्तावबदत्तमहं * रामम् ॥ ३२१ ॥ प्रतिनन्द्यतयोर्गतयोरवदद्वा चंमहोदरं यद्विट् । आनयचारान्द्रागितितमहं * रामम् ॥ ३२२ ॥ आहूताश्चारास्ते यद्विट्प्रहिताः प्रदाक्षिणं कृत्वा । प्रच्छन्नास्ते प्रययुस्तमहं * रामम् ॥३२३॥ ददृशूरामं सानुजमथ सुग्रीवं विभीषणञ्च कपीन् । यद्विट्प्रहिताश्चारास्तमहं मुक्त्यै सदाभजेरामम् ॥ ३२४ ॥ अथशार्दूलेनयुतां श्चारान्यद्भक्तवाक्यतोऽगृह्णन्। कपयःपरितास्स्थित्वा तमहं * रामम् ॥ ३२५ ॥ अथकपिपीडितकायाश्चारायेन प्रमोचिता लङ्काम् । प्राप्योचुर्दशवदनं तमहं * रामम् ॥ ३२६ ॥ राजन्नक्षोभ्यवलैः कपिभिर्गुप्तोविभाति रघुवीरः । इति यद्विषमूचुस्ते तमहं * रामम् ॥ ३२७ ॥ श्रुत्वाचारगिरं तां जातोद्वेगो बभाणशार्दूलम् । शुष्कमुखं यद्वेषी तमहं * रामम् ॥ ३२८ ॥ शत्रोर्वशगमहंत्वां मन्ये शुष्कोष्ठमद्यशार्दूल । इति तं यद्विडपृच्छत्तमहं * रामम् ॥ ३२९ ॥ इति पृष्टश्शार्दूलो यद्विषमूचे गिरंतदाभीतः । वानरविहितां हिंसां तमहं * रामम् ॥ ३३० ॥ भाषितुमपितेकपयो नोशक्यास्तत्रकीदृशः प्रश्नः । इत्याहसयच्छत्रुं तमहं * रामम् ॥ ३३१ ॥ करजानुमुष्टिदन्ताघातैस्सन्ताडितोऽस्मिकापिभिस्तैः। इति यद्विषमाहसगांतं*रामम्॥ ॥ ३३२ ॥ अथनीतोऽहंकपिभीराधवसविधंचरक्त दिग्धाङ्गः । इति

यद्विषमाहसगांतमहं मुक्त्यै सदाभजे रामम्॥३३३॥ मामथविसर्जयि
त्वा लङ्काद्वारं समाश्रितस्सोऽद्य। इति यद्विषमाहसगांतमहं मुक्त्यैसदा
भजे रामम् ॥३३४॥ गरुडव्यूहोतिष्ठन्नाभः कपिभिर्वृतस्समेतिपुरीम्।
इति यद्विष*रामम् ॥ ३३५ ॥ सीतांवादेह्यस्मै युद्धं वादीयतां प्रभोह्य
धुना । इति यद्विष * रामम् ॥ ३३६ ॥इत्थं शार्दूलगिरं श्रुत्वाप्रति
वाक्यमाहयद्वेषी । नाहंदास्यतामिति तमहंमु * रामम् ॥ ३३७ ॥
अथचाराणां वचसा ज्ञात्वा रामं सुवेलमधिरूढम् । यद्विट्सचिवान
वदत्तमहं * रामम् ॥ ३३८ ॥ प्राप्तोहिमन्त्रकालस्सम्यग्ब्रूताद्यानिश्चयं
कृत्वा । इतियद्विट्तानवदत्तमहं * रामम् ॥ ३३९ ॥ अथमन्त्रिभि
रुक्तमसौ कार्यं कर्तुं समाह्वयद्यद्विट् । विद्युज्जिह्वं तद्ज्ञंतमहं मुक्त्यै-
सदा भजे रामम् ॥ ३४० ॥ अथतेनसमंयद्विट्तदशोकवनं तदामुदा
ऽविक्षत् । वैदेहीदुःखकरस्तमहं * रामम् ॥३४१ ॥ उपसृत्यततस्सी
तां वाचं प्रोचेतदाऽतिनीचस्सः । यद्वेषीदुःखकरस्तमहं * रामम् ॥
॥ ३४२ ॥ खरहन्तातवभर्तानिहतस्सुप्तो निशिप्रहस्तेन । इतियद्विट्
तामवदत्तमहं * रामम् ॥ ३४३ ॥ निगृहीतोमदवरजस्तदवरजोद्रा-
क्पलायितः कपिभिः । इति यद्विट्ताम* रामम् ॥३४४ ॥ भग्नग्रीवो
जातस्सुग्रीवो जांबवान्मृतिंभेजे । इति यद्विट्ताम* रामम् ॥३४५॥
मैन्दद्विविदाद्यास्ते कपयः प्रापुःपरेतराड्गृहम् । इतियद्विट्ताम*रामम्॥
॥ ३४६ ॥ छिन्नहनुर्हनुमान्युधि संयामिनीदर्शनार्थमेवागात् । इति
यद्विट्ताम * रामम् ॥ ३४७ ॥ पति तांगदोऽथभूम्यां पतितोऽभूदं
गदोऽपि वालिसुतः । इति यद्विट्ता * रामम् ॥ ३४८ ॥ क्षतजार्द्रं
रामशिरोऽप्याहृतमद्याऽस्तिपश्य नयनाभ्याम्। इतियद्विट्ताम*रामम्॥
॥३४९॥ विद्युज्जिह्वोऽपितदाधनुषासाकं शिरोनिनायद्राक् । यद्विट्स
विधं मायीतमहं सीतास्मृतं भजेरामम् ॥ ३५० ॥ सीतेनै
राश्यं भजरामे वशगाभवत्वमद्यमम । इति यद्विट्तामवदत्तमहं

सीतास्मृतं भजेरामम् ॥ ३५१ ॥ अथयत्पत्नी दृष्ट्वा धुनुषासाकं शिरश्चमणिभूषाम् । सारोदीत्तत्काले तमहं सीतास्मृतं भजेरामम् ॥ ॥ ३५२ ॥ कैकेयि सकामाभवराज्ये ससुता वसत्वमद्यमुदा । इत्यरुदद्यत्पत्नी तमहं * रामम् ॥ ३५३ ॥ नार्याः प्रथमं भर्तुर्मरणं दूष्यं वदान्तिशास्त्रज्ञाः । इत्यरु दद्यत्पत्नी तमहं * रामम् ॥ ३५४ ॥ दुःखानलदग्ध्यां मां स्थानाभावाद्यमः किमत्याक्षीत् । इत्यरुदद्यत्पत्नी तमहं * रामम् ॥ ३५५ ॥ यैरादिष्टंपूर्णं तवचायुस्तेऽभवन्नसत्य गिरः । इत्यरुदद्यत्पत्नी तमहं * रामम् ॥ ३५६ ॥ उपशेषेशोच्यां मां परिहृत्यालिङ्ग्य भूमिमद्यकुतः । इत्यरुदद्यत्पत्नीतमहं * रामम् ॥ ॥ ३५७ ॥ गन्धैर्माल्यैः श्रमया पूजितमे तद्धनुर्न भात्यवनौ । इत्यरुदद्यत्पत्नी तमहं * रामम् ॥ ३५८ ॥ साकं सर्वैः पितृभिर्वस्तुंत्वंमां विहायनाकमगाः । इत्यरुदद्यत्पत्नी तमहं * रामम् ॥ ३५९ ॥ कृत्वाग्निष्टोमादी न्विधिनाद्यत्वं नसंस्कृतोऽस्यार्य । इत्यरुदद्यत्पत्नी तमहं * रामम् ॥ ३६० ॥ कौसल्यातवनिधनं श्रुत्वासद्यः प्रपत्स्यते मरणम् । इत्यरुदद्यत्पत्नी तमहं * रामम् ॥ ३६१ ॥ इति तस्यांक्रोशन्त्यां सचिवाह्वानं जगादकश्चित्तम् । यद्वेषिणमेकान्ते तमहं*रामम्॥ ॥ ३६२ ॥ त्यक्त्वाऽथाशोकवनं यद्विङ्गत्वा सभास्थितान्सचिवान् । ऊचेस्वकृत्यमाखिलं तमहं * रामम् ॥ ३६३ ॥ दशवदनोनिर्याते त्वं तर्धिमगुश्शिरोधनुर्मणयः । यत्पत्न्यां क्रोशन्त्यां तमहं * रामम् ॥ ॥ ३६४ ॥ यद्वेष्याज्ञां श्रुत्वा सेनापतयस्तदा सभामापुः । युद्धार्थं सन्नद्धास्तमहं * रामम् ॥ ३६५ ॥ मोहं प्राप्तां यत्स्त्रियमवदत्सरमागिरं सखीप्रीत्या । सर्वं मायिकमिदामिति * रामम् ॥३६६॥ लीना सर्वमशृणवं यद्वेष्युक्तं वचोहमयिसीते । इति सीतां सरमोचे तमहं * रामम् ॥ ३६७ ॥ दृष्टस्सावरजस्तेनाथोऽद्यमयासुरक्षितःकपिभिः । इति यत्स्त्रियमूचे सा तमहं * रामम् ॥ ३६८ ॥ शोकस्सर्वोप्यिगतः

कल्याणं त्वामुपस्थितंभद्रे । इति यत्त्रियमूचेसातमहं सीतास्मृतंभजे रामम् ॥३६९॥ त्वन्नाथागमनमिह श्रुत्वारक्षःपतिस्सभीरास्ते । इति यत्त्रियमूचे * रामम् ॥ ३७० ॥ सर्वैस्सचिवैर्मन्त्वं कुरुतेरक्षःपतिस्स भीरहसि । इति यत्त्रियमूचे*रामम् ॥३७१ ॥ निर्जित्य त्रिदशारीन् भर्ता त्वां प्राप्स्यातित्यजाशुशुचम् । इतियत्त्रियमूचेसातमहं*रामम्॥ ॥ ३७२ ॥ अथसरमाराजसभां गत्वाथैत्यावदद्गिरं विनता । यत्त्रि यमाश्वासयितुं तमहंसीतास्मृतं भजे रामम् ॥ ३७३ ॥ सीतेंश्रृणुवृत्त मिदं तत्रत्यंते वदाम्यहं स्नेहात् । इतियत्त्रियमवदत्सातमहं*रामम् ॥ ॥ ३७४ ॥ वृद्धसचिवेन मूर्खो मात्राचैव प्रबोधितोप्यासीत् । इति यत्त्रि * रामम् ॥ ३७५ ॥ सत्कृत्यनरेन्द्रायच सीतांदेहीति तद्वचोऽ त्याक्षीत् । इति यत्त्रि * रामम् ॥ ३७६ ॥ हनुमत्कृतपुरदाहःपुत्र वधोप्यस्यदुःखदौनास्ताम् । इति यत्त्रि * रामम् ॥ ३७७ ॥ मोक्तुं त्वांनोत्सह ते युद्धेप्राणात्ययं विनासीते । इति यत्त्रियमूचे*रामम् ॥ ॥३७८॥ संख्येहत्वाशत्रून्प्रतिनेष्यत्यद्य राघवोद्यत्वाम् । इतियत्त्रिय-मूचेसा * रामम् ॥ ३७९ ॥ श्रुत्वाथवानराणां घोषं यद्विड्बलं बभूव तदा ॥ अतिभीतभ्रष्टौ जस्तमहं सीता * रामम् ॥ ३८० ॥ अथराम शङ्खघोषं रणभेरीमिश्रितं तदाश्रुत्वा । सचिवानैक्षत यद्विट्तमहंसी * रामम् ॥ ३८१॥ अथमाल्यवानवोचन्मातुः पैतामहोपि सद्वचनम् । यद्विषमुद्वीक्ष्यतदातमहं * रामम् ॥ ३८२ ॥ विद्यासुविनीतोराट्छा-स्त्यैश्वर्यैरिपून्वशीकुरुते । इति यद्विषमाहसगां तमहं*रामम्॥३८३॥ अवमन्येतनशत्रुं बलवान्कुर्वीत विग्रहंतेन । इति यद्विषमाहसगां * रामम् ॥ ३८४ ॥ व्रतिभिःकृतमुग्रतपोदुष्टान्रक्षोगणान्भृशं दहति । इति यद्विषमाहसगान्तमहं * रामम् ॥ ३८५ ॥ महदग्निहोत्रजातो धूमस्तेजांसिरक्षसांग्रसति । इति यद्विषमाहसगां तमहं * रामम् ॥ ॥ ३८६ ॥ सुररक्षादिभ्यस्ते नास्तिभयन्ते विधेर्वरान्महितात् । इति

यद्विषमाहसगान्तमहं सीतास्मृतं भजे रामम् ॥३८७॥ दाशरथिर्नो यक्षो देवोवाकिन्तुमानुषस्सबलः। इति यद्विषमाहस*रामम्॥३८८॥ सुग्रीवाद्याजात्याकपयोप्यरयोभवन्तिरामवशाः। इति यद्विष*रामम्॥ ॥ ३८९ ॥ घोरोत्पाता विविधा राक्षसनाशं ब्रुवन्तिपश्यत्वम्। इति यद्विष * रामम् ॥ ३९० ॥ नहि मानुषमात्रोसौ रक्षोमृत्युर्भवेदयं विष्णुः। इति यद्विष * रामम् ॥ ३९१॥ इति तस्यागिरं श्रुत्वाकुपि तस्सगिरंबभाण यद्वेषी। मातुःपैतामहमपि तमहं * रामम् ॥३९२॥ आनीयवनात्सीतां भीतस्तस्मात्कथंनुदास्यामि। इति तं यद्विडवादी-त्तमहं * रामम् ॥ ३९३ ॥ उदधौचसेतुबन्धे विहितेतव विस्मयः कथं जातः। इति तं यद्विडवादीत्तमहं * रामम् ॥ ३९४ ॥ श्रुत्वा यद्विड्वचनंलज्जाविष्टोजयाशिषं प्रोक्त्वा। प्रापद्वृद्धस्स्वगृहं*रामम्॥ ॥ ३९५ ॥ अथलङ्कायां यद्विड्गुप्त्यर्थंव्यादिदेशपूर्वस्याम्। बलिनं दिशिप्रहस्तं तमहंसी * रामम् ॥ ३९६ ॥ यद्विडथदक्षिणस्यां दिशि-गुप्त्यर्थंमहोदरं प्रोचे। समहापार्श्वं बलिनं तमहं * रामम्॥३९७॥ पश्चिमादिशिरक्षार्थंव्यादिशादिन्द्रारिमौरसं पुत्रम्। यद्विण्मायेशंद्राक्तमहं *रामम् ॥ ३९८ ॥ अहमुत्तरादिग्द्वारे सायुधपाणिर्भवामिरक्षार्थम्। इति यद्विड्गिरमवदत्तमहं*रामम् ॥३९९॥ कृत्वाविधिमित्थंद्राक् कृत कृत्यं कालचोदितोमत्वा। अविशत्स्वगृहं यद्विट्तमहं * रामम् ॥ ॥ ४०० ॥ अथनरवानरराजौ हनुमत्प्रभृतीन्कपींश्चसंप्रेक्ष्य। यद्भक्तो गिरमणत्तमहं सीता*रामम् ॥४०१॥ लङ्कावृत्तं निखिलं मत्सचिवो-क्तं शृणोतु सपदिभवान्। इति यमभाणीद्भक्तस्तं कृतयुद्धस्पृह भजे रामम् ॥ ४०२ ॥ अथसचिवाःप्रोचुस्ते पृच्छन्तं यं प्रणम्यसा-ञ्जलयः। लङ्कावृत्तं निखिलं तं कृतयुद्धस्पृहं भजे रामम् ॥ ४०३ ॥ द्वारेषुपश्चिमादिषु पुत्राद्यानाहरावणोगुप्त्यै। इतिबभणुर्यं सचिवास्तं-कृत * रामम् ॥ ४०४ ॥ कौबेर्यांदिशिगुप्त्यै गच्छाम्यहमित्युदीर-

यच्छत्रुः । इति बभणुर्यंसचिवास्तंकृतयुद्धस्पृहंभञ्जे रामम् ॥ ४०५ ॥
अथभक्तामात्योक्तां वाचं श्रुत्वातदावचःप्रोचे । भक्तंतंयस्स्वधिया
तं कृतयुद्धस्पृहंभञ्जे रामम् ॥ ४०६ ॥ पूर्वद्वारेनीलः प्रतियोद्धास्याद्बलैः
प्रहस्तस्य । इति भक्तंयोऽभाणीत्तं कृत * रामम् ॥ ४०७ ॥ वालि
सुतःप्रतियोद्धादाक्षिणतस्स्यान्महोदराद्यस्य । इति भक्तंयोऽभाणीत्तं*
रामम् ॥ ४०८ ॥ हनुमान्प्रतियोद्धास्यादिन्द्रजितस्तस्यपाश्चिमद्वारे ।
इति भक्तंयो * रामम् ॥ ४०९ ॥ कौबेरककुब्द्वारंसावरजोहं द्रुतंप्रवे-
क्ष्यामि । इति भक्तंयो*रामम् ॥ ४१० ॥ त्वं भवमध्यमगुल्मे कपि-
रूपा एव सन्तुकपयोमी । इति भक्तंयोभाणीत्तं * रामम् ॥ ४११ ॥
त्वंसचिवाश्चत्वारस्सावरजोहञ्च सप्तनररूपाः। स्यामेत्यूचेतं यस्तंकृत *
रामम् ॥ ४१२ ॥ इति संज्ञां कृत्वायस्सपदिसुवेलाधिरोहणोद्युक्तः ।
अवदत्कीशपलाशौतं * रामम् ॥ ४१३ ॥ अत्रनिशांवत्स्यामो लङ्कां
कल्येवयञ्च पश्यामः । इतितौ गिरमवदद्यस्तं कृत * रामम् ॥ ४१४ ॥
❀ एकोदशवदनोयं पापंकृत्वाकुलञ्चनाशयति । इतितौगिरमवदद्यस्तं
कृतयुद्धस्पृहं * रामम् ॥ ४१५ ॥ आरुह्याथसुवेलं शिखरेयद्वेषि
पालितांलंकाम् । ददृशुर्दीप्तांकपयस्तं कृत * रामम् ॥ ४१६ ॥ हर्म्ये
प्रकारयुतां यद्विट्परिपालितां पुरींदृष्ट्वा । कपयोऽकुर्वत शब्दांस्तंकृत *
रामम् ॥ ४१७ ॥ केचिल्लँकाञ्जग्मुर्यत्सुहृदाज्ञावशंवदाःकपयः । नादैः
प्रकंपयन्तस्तंकृत * रामम् ॥ ४१८ ॥ गत्वाऽथसुवेलाग्रेयोजनयुग्मं
सुहृत्समेतोयः । तत्रमुहूर्तमतिष्ठत्तं कृत * रामम् ॥ ४१९ ॥ लङ्का
गोपुरशिखरे तिष्ठन्तंरत्ननिर्मितेपीठे । यद्विषमैक्षतकपिराट्तं कृत*
रामम् ॥ ४२० ॥ यत्सुहृदुप्लुत्यतदा गोपुरशृङ्गंसमास्थितश्शत्रुम् ।
निर्भीकोगिरमवदत्तंकृत * रामम् ॥ ४२१ ॥ रामस्यसखादासोऽस्म्य
हमद्यत्वां नजातुमुञ्चामि । इतियत्सुहृदवदत्तं * रामम् ॥ ४२२ ॥
इत्युक्त्वायन्मित्रं तच्छीर्षस्थं विचित्रमणि मकुटम् । भूम्यामपातय-

द्राक्तंकृतयुद्धस्पृहं भजे रामम् ॥ ४२३ ॥ सुग्रीवाद्यैवत्वं हीनग्रीवोभविष्यसीत्युक्त्वा । यद्वेष्याक्षिपदथतं तंकृत * रामम् ॥ ४२४ ॥ अथयन्मित्रं शत्रुः कन्दुकवत्तं समाक्षिपद्भूमौ । आकृष्यस्वभुजाभ्यां तंकृत * रामम् ॥ ४२५ ॥ यन्मित्रराक्षसेन्द्रौबलिनौयुद्धं प्रचक्रतुश्शूरौ । उत्क्षिप्याक्षिप्यामिथस्तंकृत * रामम् ॥ ४२६ ॥ मायाविनमथ दृष्ट्वा सुग्रीवस्तं तदोत्थितोनभसि । आगाद्यस्यसमीपं तंकृत*रामम्॥ ॥ ४२७ ॥ दृष्ट्वावानरराजंसङ्ग्रामोद्भूतचिह्नसहितङ्गाम् । योगिरमालिंग्यो चेतंकृत * रामम् ॥ ४२८ ॥ साहसमिदमद्यकृतंनोयुक्तं ते सखे कपीशस्य । इतितं गिरमवदद्यस्तंकृत * रामम् ॥ ४२९ ॥ तवदर्शनमद्यनचेद्वैदेह्यावाऽनुजेन किंकार्यम् । इतितं गिरमवदद्यस्तं कृतमुद्व*रामम् ॥४३० ॥ दृष्ट्वातवशत्रुमहं सोढुंशक्तः कथंभविष्यामि। इतियंसुहृदभणद्रांतं * रामम् ॥ ४३१ ॥ अथताद्गिरमभिनन्द्यप्रोचे वाचं तदाऽनुजंयोद्राक्। व्यूह्यबलंतिष्ठेतिचतंकृत * रामम् ॥ ४३२ ॥ घोराणिनिमित्तान्यपि सन्दृश्यन्तेबहूनिपश्यत्वम् । इतियोलक्ष्मणमवदत्तंकृत*रामम् ॥ ४३३ ॥ लङ्कामभियामवयं हरिभिश्शूरैस्सहांज सेत्युक्त्वा । प्रययौयःकालज्ञस्तंकृत * रामम् ॥ ४३४॥ प्रस्थितमथयं दृष्ट्वाजांबवदाद्यास्तदान्वयुश्चर्क्षाः । शत्रुजयोद्युक्ताद्राक्तंकृत * रामम् ॥ ॥ ४३५ ॥ अङ्गदहनुमत्प्रमुख्याः कपयस्सर्वेसमन्वयूरामम् । यत्सुहृदासाकंद्राक्तंकृत * रामम् ॥४३६॥ अथधन्व्यनुजयुतोयो लङ्काद्वारं रुरोधधनदादिशि । दशवदनं प्रतियोद्धुं तंकृत * रामम् ॥ ४३७ ॥ पूर्वद्वारंनीलोदक्षिणादिग्द्वारमंगदोप्यरुधत् । यद्विट्सचिवैर्योद्धुं तंकृत* रामम् ॥ ४३८ ॥ पश्चिमदिशिहनुमानपिशक्रारिंजेतुमाहवेसज्जः । अभवद्यस्यागिराद्राक्तंकृत * रामम् ॥ ४३९ ॥ प्रघसप्रमाथिमुख्यैः कपिभिर्युक्तःकपीश्वरोप्यास्थात् । यद्वचसागुल्मार्धेतंकृत * रामम् ॥ ॥ ४४० ॥ षट्त्रिंशत्कोटिमिताःकपयोऽवात्सुः कपीश्वरं परितः ।

यद्वचसागुल्मार्थेतंकृतयुद्धस्पृहं भजेरामम् ॥ ४४१ ॥ द्वारेद्वारेकोटिं कपिवीराणां न्यवेशयत्क्रमशः । यद्वचनात्सौमित्रिस्तंकृतयुद्धस्पृहंभजे रामम् ॥ ४४२ ॥ कपिराक्षसराजाद्यैर्मन्त्रिप्रवरैस्तदातुसंमन्त्र्य । वालिसुतं यःप्रोचेतं कृत * रामम् ॥ ४४३ ॥ अङ्गदनिर्भिकस्त्वंगत्वा लङ्कांवदाऽऽशुदशकण्ठम् । मद्गिरमितियोऽवादीत्तंकृत * रामम् ॥ ॥ ४४४ ॥ पापिन्धातृवरात्तो दर्पोऽद्यगतस्तवेति वदशत्रुम् । इति तंगिरमवदद्यस्तं कृत * रामम् ॥ ४४५ ॥ येनबलेनचसीतामहरस्त्वं तत्प्रदर्शयेतिवद । इतितं गिरमवदद्यस्तंकृत * रामम् ॥ ४४६ ॥ सीतामादायत्वं शरणंरामं भजेतिवदशत्रुम् । इतितं गिर * रामम् ॥ ॥ ४४७ ॥ नोचेल्लोकमराक्षसमद्यकरोमीतिमद्गिरंब्रूतात् । इति तं गिर * रामम् ॥ ४४८ ॥ धर्मात्मात्वदवरजो रक्षोराज्यंभरिष्यतीति वद । इति तं गिर * रामम् ॥ ४४९ ॥ मद्विशिखैःपापीत्वं निहतः पूतोभविष्यसीतिवद । इति तं गिरभणद्यस्तं वालिजदूतमाश्रये रामम् ॥ ४५० ॥ कुरुसन्दृष्टां लङ्कांप्राणास्तेमद्वशास्त्विवतिब्रूतात् । इतिदूतमभाणीद्यस्तं * रामम् ॥ ४५१॥ इत्युक्तोवालिसुतःखपदव्याऽगाद्दशास्यानिलयं द्राक् । वक्तुंयस्यागिरन्तां तं वालि * रामम् ॥ ॥ ४५२ ॥ सचिवैस्सहतिष्टन्तं दशकण्टं वीक्ष्यसोंगदःप्राचे । येनोक्तं वचनं द्राक्तंवालिज * रामम् ॥४५३॥ अङ्गदवचनादज्ञात्वायेनोक्तां रावणो गिरंक्रुद्धः । सचिवानवदद्द्राचंतं वालि * *रामम् ॥४५४॥ दुर्बुद्धिर्दूतोयं पुरतोमेहन्यतां च युष्माभिः । इति यद्विडवादीत्तांस्तं * रामम् ॥ ४५५ ॥ अथजगृहुश्चत्वारो राक्षसवीरास्तदांगदंक्रूराः । यद्विट्पुरतोवेगात्तंवालिज * रामम् ॥ ४५६॥ यद्दूतस्तान्कक्षेसंगृह्याकाशमाशुचोत्प्लुत्य । द्राक्सोपातयदवनौतं वालिज * रामम् ॥४५७॥ अथ यद्दूतःपद्भ्यां सौधंभङ्क्त्वास्वनामविश्राव्य । कीशां स्तुष्टांश्चक्रे तं वालिज * रामम् ॥४५८॥ यद्विट्सौधं ध्वस्तंदृष्ट्वा ज्ञात्वाऽऽत्मनो

विनाशंद्राक् । निश्वासंबहुकरोत्तं वालिजदूत माश्रये रामम् ॥४५९॥ अथयोरिपुवधकांक्षीयुद्धायैवाभ्यवर्ततद्वारे। श्रितजनरोगार्तिहरन्तंवालि जदूतमाश्रये रामम् ॥ ४६० ॥ राक्षसवचनाद्ज्ञात्वा रुद्धांनगरीं क्रुधाचयद्वेषी । आरुक्षत्प्राकारं तं वालिज * रामम् ॥ ४६१ ॥ सम वाप्यचिरं चिन्तां यद्वेष्यथधीरतां समालम्ब्य । राममपश्यन्नेतैस्तं * रामम् ॥ ४६२ ॥ द्वारेषु चतुर्ष्वपितत्सैन्यं सैत्याधिपेनसाह्यार्थम् । यस्यागिरासमातिष्ठत्तं वालिज * रामम् ॥ ४६३ ॥ अथकोपपरीतात्मा यद्वेष्याज्ञापयत्तदातेषाम् । सैन्यानां निर्याणं तं वालि * रामम् ॥ ॥ ४६४ ॥ अथानिर्गम्यगृहात्स्वात्प्रापुर्यद्विट्कृताज्ञयाऽसृक्पाः। कपि वीरैस्सहयोद्धुंतं वालि * रामम् ॥४६५॥ कपिवीरान्जघ्नुस्तेतानपिजघ्नु र्दुमायुधाः कपयः। यस्मिन्युद्धोद्युक्तेतं वालि*रामम् ॥४६६॥ अथतूमुलं युद्धमभूत्कपिराक्षससैन्ययोस्तदाभीमम् । यद्याद्विड्विजयेच्छोस्तं*रामम्॥ ॥ ४६७ ॥ शक्रजिताविद्धो यद्भृत्य्युवराट्स सारथिं साश्वम्। तस्य रथं युध्यवधीत्तं वालि * रामम् ॥ ४६८ ॥ अथजम्बुमालिविद्ध- श्शक्त्याहृदये तदाचयद्दूतः । हनुमानवधीद्युधितंतं वालि * रामम् ॥ ॥४६९॥अथयन्मित्रं कपिराट्प्रघसंयुद्धेजघानवृक्षेण । भक्ताधिव्याधि हरं तं वालि * रामम् ॥ ४७० ॥ सुप्तघ्नयज्ञकेतु प्रभृतीन्विशिखैर्निशा चरानवधीत् । यस्तच्छरकृत्ततनुस्तंवालि * रामम् ॥ ४७१ ॥ अथ तैःकपिभिश्शूरैं राक्षसवीरास्तदाहतायुद्धे । यस्मिन्पश्यतिपुरतस्तं वा* रामम् ॥ ४७२ ॥ अथरात्रावपियुद्धंकपिराक्षससेन्ययोस्तदासमभूत् । यस्मिन्पश्यतिपुरतस्तं वालि * रामम् ॥ ४७३॥ तस्मिंस्तमसिसुगाढे नखरैर्दशनैर्निजघ्नुरथशत्रून् । यस्मिन्पश्यति कपयस्तं वालि*रामम्॥ ॥ ४७४॥दृश्यादृश्यांच्छत्रूनवधीद्विशिखैर्हयान्ध्वजांश्चरथान् । यस्सा- वरजोनिशियुधितं वालिज * रामम् ॥ ४७५ ॥ हतहरिरक्षःकायै- रभितोव्याप्तांददर्शरणभूमिम्। यस्सावरजोनिशियुधितंवालि * रामम्॥

॥ ४७६ ॥ यमशत्रुमहापार्श्वप्रमृतींश्चतूनताडयद्गिशिखैः । मर्मसुयस्सं क्रुद्धस्तं वालिजदूतमाश्रये रामम् ॥ ४७७ ॥ गोलाङ्गूलाःकपयो राक्षसबृन्दानभक्षयंत युधि । यत्पुरतोभीमबलास्तं वालि * रामम् ॥ ॥ ४७८ ॥ यद्दूतोवालिसुतो दृष्ट्वायुधिरावणिंरथारूढम् । अवधीत्त-द्रथवाहांस्तंवालि * रामम् ॥ ४७९ ॥ हतसारथिवाहो[illegible]न्द्र-जिद्रथं त्यक्त्वा । अन्तरधीयतमायीतं वालि * रामम् ॥ ४८० ॥ अथयःकपिवीरान्गिरमवदद्युयं कपीश्वरंश्रयत । अयमात्ताब्जजवर इतितंवालिज * रामम्. ॥ ४८१ ॥ अथशक्रारिरदृश्यो निशितान्बा-णान्मुमोचनागमयान् । यं सानुजमपिबद्धुं तं वालि * रामम् ॥४८२॥ नागास्त्रेणबबन्धभ्रातासहितं यमिन्द्रजिन्मायी । संवृतगात्रोमेघैस्तं वालि * रामम् ॥ ४८३ ॥ अथ यस्याज्ञावशगानीलांगदशरभजां बवन्मुख्याः । प्रययुस्तंमृगयन्तस्तं वालिजदूत * रामम् ॥ ४८४ ॥ अथवेगवतां वेगं तेषामिषुभिर्न्यवार यन्मार्गे । यद्वेषिसुतः पापीतं वालिज * रामम् ॥ ४८५ ॥ अथ शरभूतैस्सर्पैर्विद्धाद्देहादसुस्रवद्रुधि रम् । यस्याऽनुजसहितस्यचतं वालि * रामम् ॥ ४८६॥ इन्द्रोवाप्य न्योवाकिंकुर्यान्मां मदीयविशिखान्वा । इति यद्विड्जो गर्जत्तंवालि * रामम् ॥ ४८७ ॥ अथनागास्त्रेणतदाबद्धोयस्सानुजोगिरं वक्तुम् । नशशाकाविभिन्नांगस्तं वालि * रामम् ॥ ४८८ ॥ निपपातानुज सहितोयोभूम्यां रक्तरूषितावयवः । शरवेष्टित सर्वाङ्गस्तं वालिज * रामम् ॥ ४८९ ॥ शिश्येऽथवीरशयने विज्यं चापं करेसमादाय । योऽनुजसहितो भूमौ तं वालि * रामम् ॥ ४९० ॥ प्रथमंभुविपतितं यं दृष्ट्वाऽवरजोभवन्निराशोऽसौ । कपयोपि तथाऽभूवंस्तं वालि * रामम् ॥ ४९१ ॥ अस्माकंमूलहरो नत्थौ निहतोमयेति यद्विड्जः । राक्षससङ्घानवदत्तं वालि * रामम् ॥ ४९२ ॥ अथनीलमैन्दहनुम-ज्जांबवदाद्यांस्तदाऽभिनद्गिशिखैः । यद्विट्सुतोऽदृश्यस्तं वालि*रामम्

॥४९३॥ निष्पन्दं दृष्ट्वायंनिहतं मत्वासहानुजं रिपवः । यद्विट्पुत्रंतु
तुषुस्तं वालि * रामम् ॥ ४९४ ॥ अथ यद्विट्पुत्रोद्रागविशल्लङ्कां
प्रहर्षयन्जनकम् । राक्षससंघैस्साहितस्तं वालिज * रामम् ॥ ४९५ ॥
सुग्रीवंबाष्पमुखंदृष्ट्वा नेत्रे जलेनसंसिक्त्वा । यद्भक्तो गिरमभणत्तंवालि*
रामम् ॥ ४९६ ॥त्यक्त्वावैक्लब्यं त्वं सैन्यैस्सहितं विचिन्तयाद्येति ।
यद्भक्तो गिरमभणत्तं वालि * रामम् ॥ ४९७ ॥ संज्ञागमपर्यन्तं
रक्ष्यो रामोभवद्भिरत्रेति । यद्भक्तोगिर * रामम् ॥ ४९८ ॥ लक्ष्मी
र्भात्यस्यमुखे तस्माच्छोकंत्यजत्वमद्येति । यद्भक्तो गिर * रामम् ॥
॥ ४९९ ॥ घटकर्णंमत्वामाङ्गावत्सैन्यं भवांश्चपालयतु । इतियद्भ-
क्तोऽभाणीत्तं वालि * रामम् ॥ ५०० ॥ अथयद्विट्पुत्रोक्तंश्रुत्वा
रामस्यसानुजस्यवधम् । परिरेभेशक्रजितं तं वालिज * रामम् ॥५०१॥
अथयद्विड्दाशरथेरुत्थितमाशुज्वरं परित्यज्य । मेनेस्वंजितशत्रुंतंवा *
रामम् ॥ ५०२ ॥ अथ बिभ्युःकपिसंघास्तृणचलनेपि प्रमादसृकपा-
णाम् । यद्विट्सुतजयसमयेतं वालिज * रामम् ॥५०३॥ अथयद्विड्
दशवदनस्त्रिजटाप्रभृतीरुवाच वचनमिदम् । सीतारक्षणकुशलास्तंवा*
रामम् ॥ ५०४॥ क्षिप्रं यूयंसीतां पुष्पकमारोप्य दर्शयध्वन्तौ । इति
यद्विडवादीत्तास्तं वालिज * रामम् ॥ ५०५ ॥ पश्चात्विन्द्रारिहतौ
दशरथपुत्रौविदेह जायुधितौ । इति यद्विडवादीत्तास्तं वालि*रामम्॥
॥ ५०६ ॥ नान्यामेगतिरितिसामत्वा मां प्राप्स्यति स्वयंकुशला ।
इति तायद्विडवादीत्तं * रामम् ॥५०७॥ अथ राक्षस्यःपुष्पकमारोप्यै
तांविहायसाशीघ्रम् । यत्पत्नींचानैषुस्तं हृत्कमलेसराम्यहं*रामम्॥
॥५०८॥ सादृष्ट्वाशरतल्पेयंभर्तारं सहानुजं शयितम् । विललाप-
सुदुःखार्तातं हृत्कमले * रामम् ॥ ५०९ ॥ लाक्षणिकानांगीरपि
सत्पुत्रिण्यविधवेतिमिथ्याऽभूत् । इति यत्पत्न्यरुदत्सातं हृ* रामम्॥
॥ ५१० ॥ येमां दीक्षितपत्नीमवदंस्तेऽद्यानृतोक्तयोऽभूवन् । इति

यत्पत्न्यरुदत्सा तं हृत्कमले स्मराम्यहं रामम् ॥ ५११ ॥ अभिषेको भर्त्रासहयैरुक्तस्तेऽनृतोक्तयोऽभूवन् । इति यत्पत्न्यरुदत्सा* रामम्॥ ॥ ५१२ ॥ तीर्त्वाऽपारं सागरमार्यसुतौतौ च गोष्पदे निहतौ । इति यत्पत्न्यरुदत्सा * रामम् ॥५१३॥ तस्याग्नेयं वारुणमस्त्रं वायव्य-मद्यकुत्रगतं । इति यत्पत्न्यरुदत्सा * रामम् ॥ ५१४ ॥ नाहंशो-चामि तथादशरथपुत्रौ यथाममश्वश्रूम् । इति यत्पत्न्यरुदत्सा*रामम् ॥ ५१५ ॥ नात्मानं जननीं वा शोचामितथा यथामम श्वश्रूम् । इति यत्पत्न्यरुदत्सा *रामम् ॥ ५१६ ॥ इति परिदेवयमानां त्रिजटा वाचं जगाद यत्पत्नीम् । जीवतितवभर्तेतिचतंहृत्कमले * रामम्॥ ॥ ५१७ ॥ शृणु मम वचनं सीते न मृतावेतौ विभाति मुखशोभा । इति सोचेयत्पत्नीं तं हृत्कमले * रामम् ॥ ५१८ ॥ रक्षत्येतौ सेना विस्रब्धा त्वं भवाद्य मद्वचनात् । इति सोचे यत्पत्नीं तं हृत्कमले * रामम् ॥ ५१९॥ गतसत्वानां नृणां भवति मुखे वै कृतं महद्बहुशः। इति सोचे यत्पत्नीं तं हृत्कमले * रामम् ॥५२०॥ यद्येतौ गतसत्वौ पुष्पकमेतन्न धारयेद्धित्वाम् । इति सोचे यत्पत्नीं तं हृत्कमले*रामम् ॥ ५२१ ॥ श्रुत्वा गिरममृतमयीं तुष्टाऽस्त्वेवं त्विति ब्रुवाणागाम् । यत्पत्नीवनमविशत्तं हृत्कमले * रामम् ॥ ५२२ ॥ अथ नागपाशबद्धोऽप्युन्मील्य दृशौतदाऽनुजं प्रेक्ष्य । बहुकुक्षदृग्यस्तं हृत्कमलेस्मरा* रामम् ॥ ५२३ ॥ सीतासदृशी स्त्रीमेलभ्याभ्राता न लक्ष्मणेन समः। इति दीनोऽक्रुक्षद्यस्तं हृत्कमले * रामम् ॥ ५२४ ॥ त्यक्ष्यामि शरीरमहं सौमित्रिमृतौ न मेऽस्ति जीवाशा । इति दीनोऽक्रुक्षद्यस्तं हृत्कमले * रामम् ॥ ५२५ ॥ मां वनमनुयातोऽयं तेनसहाऽहं यम क्षयं यामि । इतिदीनोऽक्रुक्षद्यस्तं हृत्कमले* रामम् ॥ ५२६॥ नकृतो विभीषणोऽयं राजा मिथ्याऽभिभाषणो हंस्याम् । इति दीनोऽक्रुक्षद्य-स्तं * रामम् ॥५२७ ॥अद्यसखेतरसागरमङ्गदहनुमत्पुरस्सरस्सबलः।

इति दीनोऽक्षुक्षयस्तं हृत्कमले स्मराम्यहं रामम् ॥ ५२८ ॥ यूयं मदनुज्ञाता गच्छतकपयो यथेच्छमद्यगृहम् । इतियोगामवदत्तान तं हृत्कमले स्मराम्यहं रामम् ॥ ५२९ ॥ श्रुत्वा ते यस्य गिरं कपयः परिदेवनं तदाचक्रुः । बाष्पैः परिपूर्णाक्षास्तं * रामम् ॥ ५३० ॥ आयान्तं यद्भक्तं दृष्ट्वाकपयो गदाधरं शत्रुम् । मत्वा दुद्रुवुरथते तं हृत्कमले * रामम् ॥ ५३१ ॥ शरतल्प शयानौ तौ शूरौद्रष्टुं विभीषणोऽथागात् । यद्भक्तो युद्धभुवं तं हृत्कमले* रामम् ॥५३२॥ सुग्रीवे यं सेनाव्यधिताऽऽस्ते किं निमित्तमिहवदमे । इति यद्भक्तोऽपृच्छत्तं हृत्कमले* रामम् ॥ ५३३ ॥ अथवालिसुतोवादीद्यद्भक्तंपश्यसानुजं रामम् । इन्द्रजिदस्त्रैर्हतमितितं हृत्कमले * रामम् ॥ ५३४ ॥ इत्थं गदगदितगिरं श्रुत्वाव्यधितोऽश्रुपूर्णनयनोयम् । यद्भक्तोपश्यद्द्राक्तं हृत्कमले * रामम् ॥ ५३५ ॥ अथयत्सुहृदाप्रोक्तो दिग्भ्यःसेनाःपुपोषधावन्तीः । ऋक्षपतिस्सौम्यगिरातं हृत्कमले * रामम् ॥ ५३६ ॥ अथशरभिन्नंगात्रं दशरथसुतयोःप्रगाढमालिङ्ग्य । यद्भक्तोऽरुदटुच्चैस्तं हृत्कमले * रामम् ॥ ५३७॥ जीवन्नद्यविपन्नो नाथाहंनष्टराज्य चिन्तोऽस्मि । इति यद्भक्तोऽरोदीत्तं हृत्कमले * रामम् ॥ ५३८ ॥ इतिबहुविलपन्तंतं यत्सुहृदूचेवचस्तदाऽऽलिङ्ग्य । प्राप्स्यति राज्यं त्वामितितं हृत्कमले * रामम् ॥ ५३९ ॥ त्यक्त्वामोहमिमौद्वौ दशवदनन्द्राद्यनिष्यतस्सबलम् । इतितं यत्सुहृदभणत्तं हृत्कमले * रामम्॥ ॥ ५४० ॥ संगृह्येमौगच्छत्वं किष्किन्धां सुषेणकपिसैन्यैः । इति तं यत्सुहृदभणत्तं हृत्कमले * रामम् ॥ ५४१ ॥ हत्वादशवदनमहं सगणंसीतां समानयामिद्राक् । इति तं यत्सुहृदभणत्तं हृत्कमले* रामम् ॥ ५४२ ॥ यत्सुहृदोक्तंवचनं श्रुत्वातच्छ्वशुर आहगिरमेताम् । ओषध्याहरणेच्छुस्तंहृत्कमले * रामम् ॥ ५४३ ॥ आज्ञापयहनुमन्तं ह्यौषध्यर्थंपयोंबुधिंगन्तुम् । इत्याहसयत्सुहृदंतं हृत्कमले * रामम् ॥

तस्मिंत्समयेगरुडश्शरबद्धं यंसहानुजंप्रेक्ष्य । हस्ताभ्यां मुखममृश्चत्तं हृत्कमले स्मरम्यहं रामम् ॥ ५४५॥ तत्संस्पृष्टारु रुहुस्सावरजस्यत्र णास्तदायस्य । शक्रजिदिषुसंजातास्तं हृत्कमले * रामम् ॥ ५४६ ॥ वद्कस्त्वमितिसपृष्टो गरुडोऽवादीद्वचस्तदानींयम् । प्राणसमस्सुहृद-हमितितं हृत्कमले * रामम् ॥ ५४७ ॥ कद्रूप्रभवास्सर्पाश्चासन्माया-विदश्शरास्तस्य । इतियंगरुडोऽवादीत्तं हृत्कमले * रामम् ॥५४८॥ देवासुरगन्धर्वाश्शक्तानभवन्त्यमून्विमोक्षयितुम् । इतियं गरुडोऽवा* रामम् ॥ ५४९ ॥ वृत्तान्तमिमं श्रुत्वात्वरयाऽद्याऽहं समागतोऽस्म्य-धुना । इति यं गरुडोऽवादीत्तं हृत्कमले ॥ ५५० ॥ भवतांबलमृजु-भावस्त्वे तेषां कूटयोधिनांमाया । इतियंगरुडोऽवादीत्तं योगिस्वा न्तवासमहमीडे ॥ ५५१ ॥ इत्युक्त्वाऽलिङ्ग्यततोगच्छामिसखेत्वयाऽ भ्यनुज्ञातः । इतिसयमुक्त्वाप्रययौ तंयोगिस्वान्तवासमहमीडे ॥ ॥ ५५२ ॥ कुतुकन्नचकार्यन्ते सखितांप्रति राघवाऽद्यवेत्स्यसिच । इतिसयमुक्त्वाप्रययौ तं योगि * मीडे ॥ ५५३ ॥ हत्वादशवदनं त्वं सीतासहितःप्रयास्यसिस्वपुरीम् । इति सयमुक्त्वाप्रययौतंयोगि* मीडे ॥ ५५४ ॥ अथयं विरुजं सानुजमुद्वीक्ष्यतदावनौकसोभेरीः । जघ्नुर्दध्मुश्शंखं तं योगि * मीडे ॥ ५५५ ॥ लङ्काद्वाराणि ययुः कपयो यन्मित्र पालितास्सहसा । योद्धुंराक्षससंधैस्तं योगि * मीडे ॥ ॥ ५५६ ॥ वानरकृतसिंहरवांश्छ्रुत्वायाद्विट्प्रशंकितस्वान्तः । अवद-द्राक्षसवीरांस्तं योगि * मीडे ॥५५७॥ वानरतोषेहेतुं द्रष्टुंयांतत्व-रान्विताब्रूत । इतितानवदद्यद्विट्तंवैदेहीप्रियं भजे रामम् ॥ ५५८ ॥ अथतेद्रष्टुंगत्यप्रोचुर्वाचंतदैवयस्यरिपुम् । तौद्वौदृढगात्रावितितं वैदे ही*रामम् ॥५५९॥ श्रुत्वेत्थं यद्द्वेषी धूम्राक्षं राक्षसंचसेनान्यम् । आज्ञा पयदथयोद्धुं तंवै *रामम् ॥ ५६०॥ अविगणयन्नपशकुनं यद्विट्प्राहि-तस्सपश्चिमद्वार्थम् । हनुमन्तमताडयदथतं * रामम् ॥५६१॥ अथ

मथितं कपिवीरैर्यद्विट्सैन्यं शिलायुधैर्युद्धे । धूम्राक्षोप्य द्राक्षीत्तं वैदे-
हीप्रियं भजे * रामम् ॥ ५६२ ॥ दृष्ट्वायन्मित्रबलं तरु गिरिहस्तं
क्रुधाचधूम्राक्षः । विशिखैस्तीक्ष्णैरभिनत्तंवै * रामम् ॥५६३॥ यद्वि-
डनीकपानिहताः कपयःपेतुर्विभिन्नहृदयाङ्गाः । बहवोयुद्धधरण्यां तंवै*
रामम् ॥ ५६४ ॥ वानरराक्षससैन्यं युयुधेऽन्योन्यं द्वयंजयेच्छुतदा।
संपश्यति यद्दूतेतं वै * रामम् ॥ ५६५॥ अथयद्दूतःक्रुद्धस्संगृह्यशिलां
रथोपरिक्षिप्त्वा । साश्वंस्यन्दनमभिनत्तंवै * रामम् ॥ ५६६ ॥ नख
तरुगिरिपाषाणैरक्षस्सैन्यं प्रमथ्ययद्दूतः । अथतमहन्धूम्राक्षंतं वै *
रामम् ॥ ५६७ ॥ अथ तेनगदाभिहतो यद्दूतोद्रेः प्रगृह्यशिखरंद्राक् ।
क्षिप्त्वाशिरसितमवधीत्तं वै * रामम् ॥ ५६८ ॥ यद्विट्तंयुधिनिहतं
श्रुत्वाक्रुद्धोनिशाचरैश्शिष्टैः । प्रेषयदपरंशूरंतं वै * रामम् ॥ ५६९ ॥
शूरोथवज्रदंष्ट्रो यद्विट्प्रहितस्स्वसैन्य संयुक्तः । अगमद्युद्धभुवंद्राक्तंवै*
रामम् ॥५७०॥ चापंविष्फार्योग्रो विशिखानकिरत्सवानरांगेषु । यद्वि
ड्विजयाकांक्षीतं वै * रामम् ॥५७१॥ यद्विट्प्रहितस्यशरैर्विद्धाःकप-
यो बभूवुरतिभीताः । रुधिरोक्षितसर्वाङ्गास्तंवै * रामम् ॥ ५७२ ॥
यन्मित्रसैन्यनिहतै रक्षःकायैस्समावृताभूमिः । आसीत्समरेभीमेतंवै*
रामम् ॥५७३॥ यद्विट्प्रहितस्सेनां स्वीयामुद्वीक्ष्यभिन्नसर्वाङ्गाम् ।
अवधीत्कीशान्विशिखैस्तं * रामम् ॥ ५७४ ॥ रुधिरोक्षितसर्वाङ्गो
यद्भृत्यो वालिसूनुरथकुपितः । तदुपरिचिक्षेपतरुंतंवै * रामम् ॥
॥ ५७५ ॥ अथयद्भृत्यक्षिप्तं वृक्षंबहुधाविभिद्यविशिखैस्सः । भूमा
ववातरद्राक्तंवै*रामम् ॥५७६॥ अथयद्भृत्यश्शैलंविपुलंसंगृह्यतस्यमू-
र्ध्नितदा । प्रक्षिप्यननादोच्चैस्तंवै*रामम् ॥ ५७७ ॥ अथयद्भृत्याक्षिप्तं
शैलंदृष्ट्वागदांकरेधृत्वा । भूमौसचसमतिष्ठत्तं वैदेही*रामम् ॥५७८॥
अथशैलेनान्येनक्षिप्तोयद्विड्बलाधिपोभूमौ । संमूर्च्छ्योदस्थाद्द्राक्तंवै *
रामम् ॥ ५७९ ॥ अथतद्गदयाविद्धस्संमूर्च्छ्योत्थायतच्छिरोच्छित्त ।

असिनायद्भृत्योद्राक्कंवैदेहीप्रियंभजे रामम् ॥ ५८० ॥ अथवज्रदंष्ट्र मरणंश्रुत्वायद्विड्जगाद्युद्धार्थम् । गच्छेत्यकंपनं द्राक्कंवै * रामम् ॥ ॥५८१॥ त्वरितंसबलस्सरथी यद्विड्विजयं प्रकांक्षमाणस्सन् । प्रागा द्युद्धभुवंद्राक्कंवै * रामम् ॥५८२॥ यद्विट्प्रहितस्याभूद्वामेनयनेभुजेपदे स्फुरणम् । आधिर्व्याधिर्दर्शोपेत्तंवै * रामम् ॥ ५८३ ॥ अथतुमुलं युद्धमभूद्यद्विट्सैन्ययोर्द्वयोर्बलिनोः। अन्योन्यंविजयेच्छ्वोस्तं*रामम्॥ ॥ ५८४ ॥ तस्मिंस्तुमुलेयुद्धे जघ्नुर्विटपाद्रिदण्डमुसलाद्यैः । यद्विट्सै न्यं कपयस्तं वै * रामम् ॥ ५८५॥ तस्मिंस्तुमुलेयुद्धे रात्रिचरास्तेऽस्त्र शूलशक्त्याद्यैः । यन्मित्रबलं जघ्नुस्तं वैदेहीप्रियंभजे रामम् ॥ ५८६ ॥ अथमैन्दनलौकुमुदोद्विविदश्चैतेचमूमुखेस्थित्वा । जघ्नुर्यद्वेषिबलंतं वैदे* रामम् ॥ ५८७ ॥ आनीतंसारथिनाऽथारुह्याकंपनोरथंवेगात् । आ- गाद्यन्मित्रबलंतंवै * रामम् ॥ ५८८ ॥ अथयद्वेषिप्रहितोदृष्ट्वाकपिभिः कृतंतदाकदनम् । हस्तेचापमगृह्णात्तं वै * रामम् ॥५८९॥ सचतुर्दश भिर्बाणैर्यद्दूतमकम्पनोहनूमन्तम् । अवधीत्समरेक्रुद्धस्तंवै * रामम् ॥ ॥ ५९० ॥ अथवृक्षेणाभिहतो यद्दूतप्रेरितेनभुविपतितः । शमनगृहं सोऽगाद्राक्कंवैदेही * रामम् ॥ ५९१ ॥ पतितमकंपनमाजौनिहतंदृष्ट्वा निशाचराःशिष्टा । यद्द्विषमभिगम्योचुस्तं वै*राम ॥५९२॥ तेषांवचनं यद्विट्छ्रुत्वाऽवादीत्प्रहस्तमथवचनम् । युद्धार्थं सेनान्यंतंवै*रामम्॥ ॥५९३॥ गच्छाम्यहमथवात्वं गत्वातौद्वौविजित्यचायाहि । इत्यवद त्तं यद्विट्तं वै * रामम् ॥ ५९४ ॥ दानैर्मानैश्चाहं कृतसंमानःप्रयामि युद्धभुवम् । इतियद्विषमाहसगांतं वै*रामम् ॥ ५९५ ॥ उपक्रांतिकाले प्राप्ते प्राणारक्ष्याःकथंभवेयुर्मे । इतियद्विषमाहसगांतं*रामम् ॥५९६॥ इत्युक्त्वाराजानं यद्विट्सेनापतिर्बलाध्यक्षान् । आज्ञापयदनुगन्तुंतं वै* रामम् ॥ ५९७ ॥ अथसधनुष्काश्शूराधृतकवचास्तोबिनिर्ययुर्योद्धुम् । यद्विट्सैन्यपवचसातंवै*रामम् ॥५९८॥ यद्विट्सैन्यपमभितश्चेरुःकंकाः

प्रपेतुरुल्काश्च । उच्चैर्नेदुश्वशिवास्तं वैदेहीप्रियंभजेरामम् ॥ ५९९ ॥ आयान्तंतंदृष्ट्वासितपूर्वयो विभोषणंप्रोचे । वदकोयंवलवानिततिं वै * रामम् ॥ ६००॥ अथयद्भक्तोवादीत्सेनापतिरेष राक्षसाधिपतेः। बल वान्प्रहस्तइतियंतं स्मृतसीतं सराम्यहं रामम् ॥ ६०१॥ अथयद्व द्विट्सैन्येयुयुधातेतेद्रुमाद्रिकरमुसलैः । विशिखगदाप्रासैरपितं स्मृत * रामम् ॥ ६०२ ॥ युद्धेप्रहस्तसाचिवा यन्मित्रप्रेषितांश्चकपिवीरान् । जघ्नुर्विशिखैर्विविधैस्तंस्मृत * रामम् ॥६०३ ॥ गिरिशिखरेणद्विविदो यद्विट्प्रहितंनरान्तकंत्ववधीत् । दुर्मुखमपियुधिवेगात्तं स्मृत*रामम् ॥ ॥६०४॥ ऋक्षपतिस्त्वथशिलया यद्विट्प्रहितं त्वहन्महानादम्।तारोऽ पिचकुंभहनुन्तं स्मृत * रामम् ॥ ६०५॥ यद्विट्प्रहितासक्पायन्मित्र- प्रेषिताश्चकपिवीराः । तेरुर्युद्धनदीन्द्राक्तंस्मृत * रामम् ॥ ६०६ ॥ अथयन्मित्रप्राहितं नीलंदृष्ट्वाचमूपतिं योद्धुम् । अभ्यागमत्प्रहस्तस्तंस्मृ * रामम् ॥ ६०७ ॥ यद्वेषिसैन्यपालाऽभिहतोनीलोऽथवृक्षमुत्पाट्य । प्रजधानचतस्यहयांस्तं स्मृत * रामम् ॥ ६०८ ॥ यन्मित्रसैन्यनाथ स्तद्धस्तस्थंधनुश्चसंगृह्य । भङ्क्त्वाट्टहासमकरोत्तंस्मृत * रामम् ॥ ॥ ६०९ ॥ त्यक्त्वारथंप्रहस्तोयन्मित्रबलाधिपं ललाटतले । मुसले नाभ्याभिनद्राक्तंस्मृत * रामम् ॥ ६१० ॥ यन्मित्रसैन्यपालो नील- शिलया विभिद्यतं शीर्षं । शमनगृहातिथिमकरोत्तं स्मृत*रामम् ॥ ॥६११॥ अथयद्विड्गृहमापुर्निहतेसैन्याधिपेऽथरात्रिचराः । वक्तुं प्रह स्तनिधनं तं स्मृत * रामम् ॥ ६१२ ॥ श्रुत्वावचनं तेषां यद्विट्क्रु- द्धोऽवदद्गिरंसभ्यान् । रथसज्जीकरणार्थं तं स्मृत*रामम् ॥ ६१३ ॥ सज्जंरथमथदृष्ट्वागच्छाम्यहमद्यतौनिहन्तुंद्राक् । इतियद्विड्गिरमवदत्तं स्मृत * रामम् ॥ ६१४॥ सन्तर्पयामिपृथिवीं राघवकपिसङ्घदेहरक्तौ घैः । इतियद्विड्रथमभजत्तं स्मृत * रामम् ॥ ६१५ ॥ अद्यास्त्रवाण- जालैः कपिवृन्दंतौच निर्दहामीति । यद्विड्रथमारुक्षत्तं स्मृत*रामम्॥

॥ ६१६ ॥ यद्विट्प्रययौयोद्धुं रामेणबलैःप्रपूज्यमानस्सन् । त्रिपुरा
रिर्भूतैरिव तंस्मृतसीतंस्मराम्यहं रामम् ॥ ६१७ ॥ शङ्खमृदङ्गक्ष्वे-
ळितपटहनिनादैर्निशाचरस्तुतिभिः । यद्विट्प्रययौतुष्टस्तं स्मृतसीतं*
रामम् ॥६१८॥ वार्षिकनूतननीरदसच्छायःकोऽयमितिचपृच्छन्तम् ।
द्विट्सहजोयमभाणीत्तं स्मृत*रामम् ॥ ६१९ ॥ द्विरदस्कन्धारूढमकं
पनमेनं त्ववेहिराजंस्त्वम् । इत्यभणद्यंभक्तस्तंस्मृत* रामम् ॥ ६२० ॥
एषमृगराजकेतुश्शक्रारिस्स्यन्दनस्थ आयाति । इत्यभणद्यंभक्तस्तं *
रामम् ॥ ६२१॥ धन्विनमपरं रथगतमतिकायं विद्धिराक्षसंबलिनम् ।
इत्यभणद्यं * रामम् ॥ ६२२ ॥ अथगजमारुह्योन्नतमायान्तंतंमहोदरं
वेत्थ । इत्यभणद्यंभक्तस्तं स्मृत * रामम् ॥ ६२३ ॥ एषपिशाचो
नाम्नाप्रासकरोभ्येतिपश्यवाजिस्थः । इत्यभणद्यं * रामम् ॥ ६२४ ॥
आरूढवृषस्त्रिशिराःपन्नगकेतुश्चकुम्भनामासौ । इत्यभणद्यं *रामम् ॥
॥ ६२५ ॥ बलवानयंनिकुंभोरथमध्यस्थो नरान्तकोथशृणु ।इत्यभण
द्यं भक्तस्तं * रामम् ॥ ६२६ ॥ एषकिरीटीधन्वी राक्षसराजोनगेन्द्र
समकायः । इत्यभणद्यं * रामम् ॥ ६२७ ॥ एतस्याज्ञावशगाश्शक्र-
यमाद्यादिवौकसोभीताः । इत्यभणद्यंभक्तस्तं * रामम् ॥ ६२८ ॥ इति
भक्तोक्तंवचनं श्रुत्वादृष्ट्वारिपुंतमायान्तम् । भक्तंयोऽवददित्थंतंस्मृत*
रामम् ॥ ६२९ ॥ दिष्ट्यामममाद्यदृष्ट्योः पदवींप्राप्तश्शरैर्वधं प्राप्तुम् ।
भक्तंयोऽवददित्थंतं स्मृत * रामम् ॥ ६३० ॥ अद्यविमोक्ष्यामिरुषं
सीताहरणप्रभूतमहमाजौ । इतिभक्तंयोऽवादीत्तंस्मृत *रामम्॥६३१॥
मद्दृष्टिपथंप्राप्तः कथमर्हतिजीवितुं विरोध्येषः । इतिभक्तंयोऽवादीत्तं*
रामम् ॥ ६३२ ॥ नाहंमुञ्चाम्येनं सप्राणंदृष्टिगोचरमेद्य । इतिभक्तं-
योऽवादीत्तंस्मृत * रामम् ॥ ६३३॥ इत्युक्त्वानुजसहितस्सज्यंचापं
करेऽगृहीद्योद्राक् । कोपाविष्टश्शत्रौतं स्मृत * रामम् ॥ ६३४ ॥
तिष्ठतुसैन्यं सज्जं द्वारेद्वारेधृतास्त्रखड्गमिति । सचिवान्याद्विडवादीत्तं

स्मृतसीतं भजाम्यहं रामम् ॥६३५॥ अथदुद्रावहरीशो दृष्ट्वायद्वेषिणं
तदाक्रुद्धः । उत्पाट्यमहीध्रंद्राक्तंस्मृतसीतं भजाम्यहं रामम् ॥६३६॥
विशिखैश्छित्वाशैलंसुग्रीवंतंसमावृणोद्विशिखैः । यद्रेष्यथसंक्रुद्धस्तंस्मृ*
रामम् ॥ ६३७ ॥ अथयद्विड्बाणहतोभूमौनिपपात वानराधीशः ।
कूजन्विपरीतमतिस्तं स्मृत * रामम् ॥ ६३८ ॥ यत्सुहृदं भुविपातितं
दृष्ट्वातुष्टान्निशाचरान्प्रेक्ष्य । कपयोभ्रंस्तं वृक्षैस्तंस्मृत*रामम् ॥६३९॥
गजगवयगवाक्षादीन्कीशांश्छैलान्प्रवर्षतःप्रेक्ष्य । यद्विडहन्बाणैस्तांस्तं
स्मृत * रामम् ॥ ६४० ॥ यद्विड्विशिखैर्निहताःकपयोबलिनश्चमूमुखे
न्यपतन् । रुधिरोक्षितसर्वाङ्गास्तं स्मृत * रामम् ॥ ६४१ ॥ अथ
दृष्ट्वाकपिकदनं दशकण्टकृतं गृहीतकोदण्डः । योद्धुंद्राग्यःप्रययौतं
स्मृत * रामम् ॥ ६४२ ॥ अथविहिताञ्जलिरनुजोयोद्धुंतेनाहमद्यग
च्छामि । इत्यवदद्यंज्येष्ठन्तं स्मृत * रामम् ॥६४३॥ अनुजस्यवच
श्श्रुत्वा भवयत्नपरस्त्व मद्यसङ्ग्रामे । इत्याज्ञामकरोद्यस्तं स्मृत*रामम्
॥ ६४४ ॥ यत्नादृष्ट्याधनुषा रक्षात्मानं समाहितोभूत्वा । इत्याज्ञा*
॥६४५॥अभिवाद्यततोरामं करधृतचापोबलीक्रुधाऽगच्छत् । युद्धभुवं
यदवरजस्तं स्मृत ॥ ६४६ ॥ शरजालानि निवार्योत्प्लुत्यरथंयद्विषोऽ
थगत्वातम् । उचेवाचं हनुमांस्तं स्मृत * रामम् ॥ ६४७॥ धातुर्वर
लब्धन्तेऽवध्यत्वमहंप्रणाशयामि कपिः । इतियद्दूतोऽभाणीत्तं स्मृत*
रामम् ॥ ६४८ ॥ विधमिष्यतितेप्राणांश्चिरकालस्थान्मदीयदक्षकरः।
इतियद्दूतोऽभाणीत्तं * रामम्॥ ६४९ ॥ अक्षंसरपुत्रं त्वं मूढेत्युक्तो
जघानयद्विट्तम् । वक्षासिहस्तेनतदातं स्मृतसीतंभजाम्यहं रामम् ॥
❀॥६५०॥यद्वेषिकराभिहतो हनुमान्स्थित्वाक्षणं स्वहस्तेन । वक्षासि
तमहन्क्रोधात्तं श्रितकल्पद्रुमाश्रये रामम् ॥ ६५१ ॥ तेनाभिहतोयद्वि
ण्मर्मणिवेगात्पपातरथमध्ये । जनयन्मुदममराणांतं श्रित * रामम् ॥
॥६५२॥ अथयद्वेषिक्षिप्तैर्विशिखैस्सन्ताडितश्चमूनाथः । तंशैलेनाऽह-

न्द्रार्क्कं श्रितकल्पद्रुमाश्रेय रामम् ॥ ६५३ ॥ अथनीलस्स्वशरीरंह्रस्वं कृत्वाऽऽरुरोहसामर्थ्यात् । यद्विड्रथकेत्वग्रंतंश्रितकल्पद्रुभाश्रेयरामम् ॥ ६५४ ॥ अथधनुषोऽग्रंप्राप्योत्प्लुत्यततो यद्विषः किरीटाग्रम् ।नील स्सननाटमुदातंश्रित * रामम् ॥ ६५५ ॥ अथयद्वेष्याग्नेयं सन्धाया स्त्रं वधायनीलस्य । अमुचत्क्रुद्धोवेगात्तं श्रित * रामम् ॥ ६५६ ॥ अथयन्मित्रबलेशःपितृमाहात्म्यात्स्वतेजसाप्याजौ । नममाराऽऽग्नेया स्त्रात्तंश्रित * रामम् ॥ ६५७ ॥ अथयद्वेषीनीलं संज्ञाहीनं कपिंतदा त्यक्त्वा । सौमित्रिमथारौत्सीत्तंश्रित * रामम् ॥ ६५८ ॥ अथदश- वदनविसृष्टान्विशिखान्विशिखैःप्रमथ्ययदवरजः । विविधान्विशिखा नमुचत्तंश्रित * रामम् ॥ ६५९ ॥ छित्वालक्ष्मणमुक्तान्बाणान्यद्वि- ड्विधातृदशरेण । अवधीत्तं निटिलतटेतं श्रित * रामम् ॥ ६६० ॥ यदवरजोविशिखहतस्तस्यकरस्थं धनुर्विभिद्यद्राक् । त्रिभिरभिनत्तंभल्लै स्तं श्रित * रामम्॥ ६६१ ॥ अथयद्विड्ढिण्णिस्संज्ञो भूत्वोत्थायक्रुधाप्र चिक्षेप । लक्ष्मणबधायशक्तिंतं श्रित*रामम् ॥६६२॥ रुद्धाऽपिशरैश्श क्तिर्मर्मण्यविशद्विधातृवरलब्धा । यदवरजस्यतदानींतंश्रित* रामम्॥ ॥ ६६३ ॥ वैष्णवभागप्राप्तं देहंतस्यप्रचाल्य यद्वेषी । उद्धर्तुमनीशोऽ भूत्तं श्रित * रामम् ॥ ६६४ ॥ अथयद्दूतोहनुमान्क्रुद्धस्तंमुष्टिनाभिह त्यहृदि । भूमावपातयद्राक्तंश्रित * रामम् ॥ ६६५ ॥ अथहनुमान्सौ मित्रिं दशमुखशक्त्यार्दितंस्वहस्ताभ्याम् । अनयद्यस्यसमीपं तंश्रित * रामम् ॥ ६६६ ॥ संज्ञांलब्ध्वासमरेनिघ्नन्तं वानरान्दशास्यंयः। प्राद्रु द्रवदथकोपात्तं श्रित * रामम् ॥ ६६७ ॥ अथहनुमद्वचनाद्यस्तत्पृष्ठ- गतस्तदाऽद्रवच्छत्रुम् । करधृतकोदण्डोद्राक्तंश्रित*रामम् ॥ ६६८ ॥ तिष्ठत्वंममपुरतस्त्वमकार्यरुचिर्नजीवितुंयोग्यः । इति शत्रुमवादीद्य- स्तं श्रित * रामम् ॥ ६६९ ॥ अद्यजनस्थानहतान्द्रक्ष्यसिशीघ्रं त्वमे त्यशमनगृहम् । इतिशत्रुमवादीद्यस्तं श्रि*रामम् ॥६७०॥ इत्थंराघव

वचनंश्रुत्वाक्रुद्धो जघानयद्दूतम् । हनुमन्तं दशवक्त्रस्तंश्रितकल्पद्रु-माश्रये * रामम् ॥६७१॥ दृष्ट्वारावणविद्धंदूतं क्रुद्धोजघानरथसहितम्। सूतमरेरसिमपियस्तं श्रित*रामम् ॥ ६७२ ॥ अथतद्वक्षसिसुदृढेवि-स्तीर्णेदन्तिदन्तकिणसहिते । निचखानशरंद्राग्यस्तंश्रित * रामम् ॥ ॥६७३॥ वज्राशनिपतनादप्यक्षुब्धोयस्सचापमत्याक्षीत् । यद्बाणाभि हतोयुधितं श्रित * रामम् ॥ ६७४ ॥ तंविह्वलमाजौयः प्रसमीक्ष्याऽ थार्धचन्द्रविशिखेन । मकुटंतस्याश्वभिनत्तं श्रित* रामम् ॥ ६७५ ॥ श्रान्तंत्वां प्रेक्ष्याऽहं त्वत्प्राणहरं शरंनमुञ्चामि। इतितमभाणीद्योगा-न्तं श्रित* रामम् ॥ ६७६ ॥ गत्वाऽद्यपुरींदृष्ट्वाऽऽगत्यश्वस्त्वं प्रपश्य ममशौर्यम् । इतितममुञ्चद्योरिंतंश्रित * रामम् ॥ ६७७ ॥ इत्युक्तोयद्वे षीगतहर्षोनष्टचापरथदूतः । पुरमाविशद्धतमकुटस्तंश्रित * रामम् ॥ ॥ ६७८ ॥ मर्त्यात्ते भयमस्तीत्युक्तिर्धातुर्भवेत्किमसमर्था । इत्य व्यधतचयद्विट्तंश्रित * रामम् ॥ ६७९ ॥ अनरण्यभूपवचनं वेदव-तीवाक्चाकिं भवेद्वितथा । इत्यव्यधतचयद्विट्तं श्रित*रामम्॥६८०॥ नन्दीश्वररंभोमावरुणभुवां वाक्यमन्यथास्यात्किम् । इत्यव्यधतचय * रामम्॥६८१॥ अथ सैन्यंयद्वेषीद्वारेद्वारेन्ययुङ्क्तरक्षायै । घटकर्णबोध-नायचतं श्रित * रामम् ॥ ६८२ ॥ गतनवमेहानिसुप्तंबोधयता बरज-माहवार्थंमे । इति यद्विडवादीद्गान्तं श्रित * रामम् ॥६८३॥ अथ यद्विड्वचनन्ते श्रुत्वाऽसृक्पाविबोधनायाऽऽपुः । कुंभश्रवणस्यगृहंतं श्रित*रामम् ॥ ६८४॥ तच्छयनगुहां गत्वायद्विड्वचनात्प्रबोधयाञ्च क्रुः । तंमुसलाद्यैर्विध्वातंश्रित * रामम् ॥६८५॥ यद्विट्सहजविबोध-नसक्तायुगपद्विनेदुरुत्कंठाः । रजनिचराधृतदण्डास्तं श्रित * रामम् ॥ ॥६८६॥ मुसलगदातरुमुद्गरमुष्टिभिरघ्नन्निशाचराःकुपिताः॥ यद्विट्स हजं सुप्तंतंश्रित * रामम् ॥ ६८७॥ यद्विट्सहजस्यभृशंश्वासोच्छ्वासैः प्रपीडितावयवाः । तंरात्रिचराजग्मुस्तंश्रित * रामम् ॥६८८॥ उदकुंभ

तेऽश्वोष्ट्रखरगजाद्यैः कण्टकदण्डां कुशैःकशालगुडैः। यद्वेष्यनुजममश्नं स्तंश्रितकल्पद्रुमाश्रये रामम् ॥ ६८९ ॥ उदकुम्भशतान्यन्ये मद्य घटान्केचिदभ्यषिञ्चन्त । यद्वेष्यनुजश्रुत्योस्तंश्रित*रामम् ॥ ६९० ॥ केशान्प्रलुलुपुरन्येवारणवृन्दं प्रथावितं चान्यैः । यद्वेष्याज्ञावशगैस्तं श्रित*रामम्॥६९१॥ गतनिद्रःक्षुधयार्तस्सहसोदस्थद्विजृंभमाणस्सन् । यद्वेष्यनुजोऽथबलीतं श्रित * रामम् ॥ ६९२ ॥ विविधान्भक्ष्यान्स-र्वान्मांसश्चादन्नपपौचमद्यघटान् । यद्वेष्यनुजोऽथबलीतं श्रित*रामम्॥ ॥ ६९३ ॥ निद्राकलुषितनेत्रो यद्विट्सहजोहसन्नुवाचगिरम् । रात्रि चरांस्तत्रस्थांस्तंश्रित * रामम् ॥ ६९४ ॥ राजाऽऽस्तेकुशली किं व्य सनीवावदतयूयमित्यूचे । यद्विट्सहजस्तान्द्राक्तं श्रित * रामम् ॥ ॥ ६९५ ॥ यद्यस्तिभयं राज्ञो ब्रूततदुत्पाटयाम्यहं त्विवितितान् । ऊचे यद्विट्सहजस्तंश्रित * रामम् ॥ ६९६ ॥ अथयूपाक्षस्सचिवो यद्विट्स हजं जगादभयहेतुम् । सीताहरणाज्जातंतं श्रित * रामम् ॥ ६९७ ॥ इत्थंयद्विट्सहजश्श्रुत्वा वाचं जगादयूपाक्षम् । अतिकोपाद्रक्ताक्षस्तं श्रित * रामम् ॥ ६९८ ॥ युधिदाशरथींहत्वापश्चाद्द्रक्ष्यामि राक्षसेश मिति । यद्विट्सहजोऽभाणीत्तं श्रित * रामम् ॥ ६९९ ॥ गिरमथ महोदरोक्तां श्रुत्वायद्वेषिणं तदाद्रष्टुम् । प्रययौकुंभश्रवणस्तंश्रित * रामम् ॥ ७०० ॥ यान्तं दृष्ट्वाद्रिनिभंतं वानरसैन्य भीतिदंक्रूरम् । भक्तंतंयोऽपृच्छत्तंश्रित*राम ॥ ७०१ ॥ कःपर्वतसंकाशोयातिकिरीटी वदाऽद्यलङ्कायाम् । इति भक्तमपृच्छद्यस्तं श्रित * रामम् ॥ ७०२ ॥ इतिपृष्टःप्रत्यभणद्यं भक्तःकुम्भकर्णदौरात्म्यम् । वानरसेनामध्येतं श्रित *रामम् ॥ ७०३ ॥ वैवस्वतजेतारं विध्येनं कुम्भकर्णनामानम्। इति भक्तोयमभाणीत्तं श्रित * रामम् ॥ ७०४ ॥ विश्रवसःपुत्रोऽयं विधिवचनात्सर्वदाऽऽत्तनिद्रोऽभूत् । इतिभक्तोयमभाणीत्तंश्रित*रामम् ॥ ७०५ ॥ इति भक्तगिरं श्रुत्वा नीलं सेनापतिं तदोचेगाम् ।

यस्सेनाराक्षायैतंश्रितकल्पद्रुमाश्रये रामम् ॥७०६॥ तिष्ठव्यूह्यकपीं-
स्त्वं करधृतशैलद्रुमायुधान्वीरान् । इति नीलंयोऽभाणीत्तंश्रित*रामम्
॥७०७॥ अथशरभहनुमदंगदमुख्याःकपयस्समाययुर्द्वीरम् । यद्वचनं
श्रुत्वा द्राक्तंश्रित*रामम् ॥ ७०८ ॥ गत्वाथकुम्भकर्णो यद्विट्सदनं
प्रकंपयन्पृथ्वीम् । ज्येष्ठमवन्दत भक्त्यातंभूजा जानिमाश्रयेरामम्
॥ ७०९ ॥ उद्विग्नोप्यथ यद्विट्सहजं दृष्ट्वा समीपमानाय्य । पर्यष्वज
तखभुजैस्तंभूजाजानि * रामम् ॥७१०॥ राजन्किमर्थमधुनाचादृत्या
हंत्वयाविबोधमयाम् । इति यद्विषमाहसगांतंभूजा *रामम् ॥७११॥
इत्थं भ्रातुर्वचनं श्रुत्वायद्विड्जगाद तंवचनम् । वक्तुंवक्तव्यंत्विविति तं
भूजा * रामम् ॥ ७१२ ॥ सुखितस्त्वंनाज्ञासीर्मंमरामकृतं भयं त्विदं
क्रूरम् । इति तमवादीद्यद्विट्तंभूजा * रामम् ॥ ७१३ ॥ सेतुंबध्वा
जलधावत्राऽऽगच्छत्सलक्ष्मणो रामः । इति तमवादीद्यद्विट्तंभूजा *
रामम् ॥ ७१४ ॥ सुग्रीवस्तव सहजोप्येतौमित्रे बभूवतुस्तस्य । इति
तमवा* रामम् ॥ ७१५ ॥ बलिनोऽसृक्पानिहताः कपिभिर्युद्धेभृशं
बलाध्यक्षैः । इति तमवा * रामम् ॥ ७१६ ॥ कुरुविक्रममद्यत्वंभ्रात्र
र्थे कुम्भकर्ण विश्वासात् । इतितमवा * रामम् ॥ ७१७ ॥ यद्विट्
कृतपरिदेवितमेतच्छ्रुत्वाविहस्यघटकर्णः । तमुवाचवचोऽनीचंतंभूजा*
रामम् ॥७१८॥ मन्त्रविनिर्णयकाले ज्ञातो दोषोमयाद्यसफलोऽभूत् ।
इति यद्विषमाहसगान्तं * रामम् ॥७१९॥ अहितश्चहिताकारं जल्प-
न्मन्त्रे नरोबहिष्कार्यः । इति यद्विषमाहसगान्तं*रामम् ॥ ७२० ॥
अनुजेनोक्तंपूर्वं कुरुवाक्यंत्वं यदीच्छसिक्षेमम् । इति यद्विष*रामम् ॥
॥ ७२१ ॥ परदाराहरणं यत्तत्सदृशंपापमेव नास्तिभुवि। इतियद्विष
माहसगान्तं भूजा * रामम् ॥ ७२२ ॥ इति कुम्भकर्णवचनंश्रुत्वा-
यद्विट्क्रुधाऽवदत्सहजम् । वाचाप्रस्फुरदोष्ठस्तंभूजा *रामम् ॥७२३॥
मान्योगुरुरिव मांत्वंह्यनुशास्यद्यप्रधानतां प्राप्तः । इतितंयद्वेष्यवदत्तं

भूजाजानिमाश्रये रामम् ॥७२४॥ गतचिन्तनयाऽलन्तेयुक्तमिदाऽर्वी विधीयतांशीघ्रम्। इतितंयद्वेष्यवदत्तं भूजाजानिमाश्रयेरामम्॥७२५॥ गतमुद्दिश्यतुलोके विद्वांसोऽद्यापि नानुशोचन्ति। इतितंयद्वेष्यवदत्तं * रामम् ॥ ७२६ ॥ अपनयजंदोषंमे प्रीतिश्चेत्त्वं समीकुरुभ्रातः। इतितं यद्वेष्यवदत्तं * रामम् ॥ ७२७॥ अथयद्विषमतिकुपितं ज्ञात्वाऽवादीत्तदातुघटकर्णः। रोषंत्यजराजन्नितितंभूजा * रामम् ॥७२८॥ भ्रातृस्नेहादुक्तं वाक्यं श्रुत्वारुषं नकुर्यास्त्वम्। इति यद्विषमाहसगान्तं * रामम् ॥ ७२९ ॥ जीवतिमायिते व्यसनं मास्तुभ्रातार्द्विषं निहन्म्यधुना। इति यद्विषमाहस * रामम् ॥ ७३० ॥ अद्यमयाऽऽनीतं त्वंद्रक्ष्यसि शीर्षमुदाचरामस्य। इतियद्विषमाह * रामम् ॥ ७३१ ॥ अद्याऽहं सुग्रीवं सेनामाहितं रणेप्रमथ्नामि। इति यद्विषमाह * रामम्॥ ॥ ७३२ ॥ तेनाहंनिहतश्चेद्रामेणत्वंहतोऽसिसगणोद्राक्। इतियद्विषमाह * रामम् ॥ ७३३॥ वज्रिणमपि हस्ताभ्यां शमनं वाऽहंरणेद्यमथ्नामि। इतियद्विषमाह * रामम् ॥ ७३४ ॥ रामान्मुञ्चभयंत्वं जयमाहर्तुं व्रजामियुद्धभुवम्। इति यद्विषमाह * रामम् ॥७३५॥ यद्वेष्यनुजस्यवचःश्रुत्वाऽवोचन्महोदरो भूपम्। शृणुराजन्ममगिरमितितं * रामम् ॥ ७३६ ॥ एकोजेतुंनालं खरहन्तारंविनासहायमसौ। इति यद्विषमाह * रामम् ॥७३७॥ संहायहंद्विजिह्वोगच्छामोसौ वितर्दनः पञ्च। इतियद्विषमाह * रामम् ॥ ७३८ ॥ ज्येष्यामोयुधिशत्रूनथवोपायै रदामवयमधुना। इतियद्विषमाह * रामम् ॥ ७३९ ॥ अवघोषयलङ्कायां रामोभ्रात्रासहाऽद्यनिहतइति। इतियद्विषमाह * रामम् ॥ ॥ ७४० ॥ अथसीताश्वसतिभुवं प्राप्योक्त्वैवंप्रसान्त्वयत्वंताम्। इति यद्विषमाह * रामम् ॥ ७४१ ॥ नष्टधवाऽनाथासा वशमेष्यतितेस्वयं सुखप्रेप्सुः। इतियद्विषमाह * रामम् ॥ ७४२ ॥ इति तद्वचनं श्रुत्वा निर्भर्त्स्यैनं घटश्रवावचनम्। यद्विषमवदज्ज्यष्ठंतं भूजा * रामम् ॥

रामवधात्तवभीतिं भेत्स्याम्यधुनासुखीभवभ्रातः । इति यद्विषमाहस-
गान्तं भूजाजानिमाश्रये रामम् ॥ ७४४ ॥ इतिकुम्भकर्णवाचाभीतं
मत्वामहोदरं प्रहसन् । यद्वेष्यनुजमवादीत्तं * रामम् ॥७४५॥ त्वत्स
दृशोनास्तिसुहृन्ममगच्छत्वं बधायरामस्य । इतितंयद्वेष्यवदत्तं*रामम्
॥ ७३६ ॥ भयनाशात्थं निद्रासक्तस्त्वं वैप्रबोधितोऽसिमया। इतितं
यद्वेष्यवदत्तं * रामम् ॥ ७४७ ॥ इत्थं यद्वेष्युक्तःप्रययौ शूलंवहन्करे
वेगात् । घटकर्णस्समरभुवंतंभूजा * रामम् ॥ ७४८ ॥ तिष्ठत्विहमम
सैन्यं सर्वास्तुकपीन्प्रभक्षयेद्याहम् । इति यद्विषमुक्त्वाऽगात्तंभजरे-
चित्तराघवं रामम् ॥ ७४९ ॥ व्रजसबलस्समरधरामित्युक्त्वाहारमाब
बन्धमुदा । यद्वेष्यनुजस्यगळेतंभजरेचित्त * रामम् ॥७५० ॥ कृत्वा
ऽथसप्रदक्षिणमालिङ्ग्यचय.द्विषं तदाज्येष्ठम् । योद्धुमगाद्घटकर्णस्तं
भज*रामम्॥७५१॥ यद्वेषिकृताशीर्वाक्सेनासहितोऽभणद्धटश्रोत्रः।
वाचं योद्धुंगच्छंस्तंभज * रामम् ॥ ७५२ ॥ लक्ष्मणसहिते रामेनिहते
सर्वं निहन्मिकपिसैन्यम् । इतियद्विषमुक्त्वागात्तंभजरे * रामम् ॥
॥७५३॥ सोगणयन्नुत्पातांत्सालंपङ्क्त्यां प्रलंघयित्वाऽगात् । योद्धुंय
द्वेष्यनुजस्तंभजरे * रामम् ॥ ७५४ ॥ यद्वेष्यनुजोदृष्ट्वा वानरसैन्यं
तदाद्रवद्भीत्या । प्रहसन्हर्षादनदत्तं भजरे * रामम् ॥ ७५५ ॥
यत्प्रेष्योऽगद ऊचे नळनीलगवाक्षमुख्यकपिवीरान् । त्रासादभितो
गन्तृंस्तंभजरे*रामम् ॥ ७५६ ॥ रणभुविपलायनंवोयोग्यं किमिमां
बिभीषिकां दृष्ट्वा । इति यत्प्रेष्योऽवादीत्तं * रामम् ॥ ७५७ ॥ आ
गच्छतयूयमिमं विधभिष्यामो वयं बलाद्युक्त्या । इतियत्प्रेष्योऽवा-
दीत्तंभजरे * रामम् ॥ ७५८ ॥ अथतेनिवृत्यकपयो वृक्षैरभिनत्तम-
द्रिशिखरैश्च । यत्प्रेष्योक्त्यास्वबलात्तम्भजरेचित्त*रामम् ॥ ७५९ ॥
यद्विड्भ्रातेक्षिप्ताःकपिभिर्गिरयःप्रचूर्णिताः परितः । रणभुविप्रेतुर्नि-
बिडंतंभजरे * रामम् ॥ ७६०॥ अथवानरसैन्यन्तद्यद्वेष्यनुजोममन्थ

संक्रुद्धः । मधुमत्तो भीमतनुस्तंभजरेचित्त राघवं रामम् ॥ ७६१ ॥ केचित्पतिताजलधौ केचिद्गगनं समाश्रिताःकपयः । यद्वेष्यनुजाद्भी तास्तं * रामम् ॥ ७६२ ॥ अथयद्गतोहनुमान्बालिभिर्गिरिवृक्षपाणि-भिःकपिभिः । सहितस्तमधावदरंतं भजरे * रामम् ॥७६३॥ यद्विद् सहजोपिगदामुत्क्षिप्याजौनिहत्यकपिवीरान् । रणभुवमवृणोन्निहतै-स्तं * रामम् ॥ ७६४ ॥ अष्टौषोडशविंशत्रिंशच्छतमप्यदन्कपीन्युद्धे । यद्विद्सहजोऽयुध्यततंभज * रामम् ॥ ७६५ ॥ द्विविदोप्यथगिरिणा तं यद्विड्सहजं बलीसमाविध्य । वाहान् द्विरदांश्चाहंस्तं * रामम् ॥ ॥७६६॥ अथगिरिणान्येनायं यद्विद्सैन्यं निहत्यरणभूमिम् । रुधिर क्लिन्नांचक्रेतं * रामम् ॥ ७६७॥ यद्गतो गिरिकूटान्विविधान्वृक्षान्व-वर्ष गगनस्थः । कुम्भश्रवसःशीर्षेतं * रामम् ॥ ७६८ ॥ क्षोभंप्राप्तो गात्रं रुधिरासिक्तंसवीक्ष्ययद्गतम् । शूलेनोरस्यभिनत्तं*रामम्॥७६९॥ अथयद्गतोवक्षसिशूलेनहतो व्यावमद्रुधिरम् । रणभुव्यनदद्धनुमांस्तं* रामम् ॥ ७७० ॥ द्रवतोथकपीन्नीलो यन्मितबलाधिपस्समावार्य । अरयेचिक्षेपशिलान्तं * रामम् ॥ ७७१॥ अथनीलर्षभशरभप्रमुखाः कपयोऽद्रिमुष्टितरुपादैः । जघ्नुर्यद्वेष्यनुजंतं * रामम् ॥ ७७२ ॥ यद्वे ष्यनुजेनतदा प्रहृतेष्वहितेनयुद्धभुवि कपिषु । कपयस्तं परिवत्रुस्तं * रामम् ॥७७३॥ यद्वेष्यनुजस्याङ्गं गिरिमिवकपयःक्रुधासमारुह्य । जघ्नुः पादैर्हस्तैस्तं * रामम् ॥ ७७४ ॥ केचिद्दशनैर्नखरैर्मुष्टिभिरेकेदृषद्भिर प्यपरे । जघ्नुर्यद्वेष्यनुजंतंभज * रामम् ॥ ७७५ ॥ केशान्प्रलुलुपुरन्ये केचिच्छ्रवणेददंशुरथदन्तैः । यद्वेष्यनुजं समरेतं * रामम् ॥ ७७६ ॥ यद्वेष्यनुजःक्रुद्धो बाहुभ्यामथकपीन्प्रगृह्यतदा । दशशतमभक्षयद्रक्तं* रामम् ॥ ७७७ ॥ अथकपयो निर्जग्मुर्यद्वेष्यनुजस्यनासिकाद्वारात् । श्रोत्रद्वाराच्चतदातं * रामम् ॥ ७७८ ॥ यद्वेष्यनुजोपितदारणभूमिं रक्तमांससंक्लिन्नाम् । कुर्वन्निजघानकपींस्तंभजरे* रामम् ॥ ७७९ ॥

अथभीताःकपयस्ते यद्वेष्यनुजप्रमर्दिताश्शरणम् । जग्मुर्यमनन्यधिय-स्तंभजरे चित्तराघवं रामम् ॥ ७८० ॥ अथखिन्नंकपिसैन्यं दृष्ट्वेन्द्र सुतात्मजःप्रचिक्षेप । शैलंयद्विट्सहजेतं * रामम् ॥ ७८१ ॥ अथ शैलहतःक्रुद्धो यद्विट्सहजोऽक्षिपत्तदाशूलम् । अङ्गदवक्षसिवेगात्तंभ* रामम् ॥ ७८२ ॥ यत्प्रेष्योवालिसुतो दृष्ट्वाशूलं प्रमोचयित्वास्वम् । उत्प्लुत्योरसितमहंस्तं * रामम् ॥ ७८३ ॥ संज्ञांलब्ध्वासोप्यथयत्प्रे ष्यं मुष्टिनाभिहत्यहृदि । भूमावपातयद्यात्तं * रामम् ॥७८४॥ तस्मि न्पातितेऽसंज्ञे शूलमुपादायदुद्रुवे सतदा । यन्मित्रं कपिराजन्तं*रामम्॥ ॥ ७८५॥ आयान्तंदृष्ट्वातंयन्मित्रंपर्वतंसमुत्क्षिप्य । आविध्योवाचगिर न्तंभज * रामम् ॥ ७८६ ॥ प्राकृतकपिभिर्निहतैःकाते कीर्तिस्सह-स्वगिरिमेतम् । इत्यमुचद्यद्दूतस्तं * रामम् ॥ ७८७ ॥ अथशैलेनाभि हतःक्रुद्धश्शूलंप्रगृह्य यद्दूते । प्राक्षिपदमरारिद्रोक्तं * रामम् ॥७८८॥ अथयद्दूतोवेगादुत्प्लुत्यबभंजवैरिणाक्षिप्तम् । तच्छूलं हस्ताभ्यान्तं * रामम् ॥ ७८९ ॥ भग्नमवेक्ष्यसशूलं लङ्कामलयात्प्रगृह्यगुरुशिखरम्। यत्सुहृदमहन्कोपात्तंभज * रामम् ॥ ७९० ॥ अथशैलेनाभिहतंभूमौ पतितं विसंज्ञमरिसहजः । यत्सुहृदंतमगृह्णात्तं * रामम् ॥ ७९१ ॥ यद्वेष्यनुजकरास्थितमेनंहनुमान्समीक्ष्यकपिराजम् । एवंहृद्याचिचिन्तत्तं* रामम् ॥ ७९२ ॥ अद्यमयानिहतेरौ यन्मित्रं कोपमेवमयिकुरुते । इतिहनुमानाचिचिन्तत्तं * रामम् ॥ ७९३ ॥ अप्रीतिश्चभवेन्मयिकीर्ते र्हानिश्चजायते तस्य । इति यद्दूतोऽमन्यततं * रामम् ॥ ७९४ ॥ इति यद्दूतस्स्वान्तेनिश्चित्यचमूंस्वयंररक्षतदा । गच्छन्तमरिंपश्यंस्तं*रामम्॥ ॥ ७९५ ॥ यद्विट्सहजेपिपुरीं प्रविशतिवीथ्यां हिमांबुसिक्तायाम् । कपिराट्श्रमशून्योभूत्तं * रामम् ॥ ७९६ ॥ उपलभ्यतदासंज्ञां शत्रो र्नासां श्रुतीचदशननखैः । अच्छिददथयन्मित्रं तं*रामम् ॥ ७९७ ॥ यद्वेष्यनुजोपि रुषानासाश्रुतिखण्डनाद्रवेस्सूनुम् । क्षिप्त्वाभूमावपिषत्तं

भजरे चित्तराघवं रामम् ॥ ७९८ ॥ विफलीकृतशत्रुपदा क्रमणस्ता-
रापथं समुत्प्लुत्य । यत्सविधंसप्राप्तत्तंभजरे चित्तराघवंरामम्॥७९९॥
अथघटकर्णोपिपुनारुधिराद्रांगो विवेशरणभूमिम् । योदृधुंयत्पुरतोद्रा
क्तं * रामम् ॥८००॥ यद्वेष्यनुजोपितदावानरसैन्यं बभक्षरणमत्तः।
सप्ताष्टौदशशतमपितं * रामम् ॥ ८०१ ॥ लक्ष्मणाविशिखैर्विद्धोप्य-
सकृदतिक्रम्यतं घटश्रवणः । योदृधुंयमगाद्वेगात्तं *रामम् ॥ ८०२ ॥
अथदाशरथिः क्रुद्धोरौद्रंयोस्त्रंप्रयोजयन्धनुषि । व्यसृजच्छत्रोर्हृदयेतं*
॥८०३॥ यस्यास्त्रेणाभिहतोभूमौ क्षिप्त्वागदां सबाणास्त्राम् । आयुध
रहितस्सोऽभूत्तंधिषणेत्वं भजानिशं रामम्॥८०४ ॥ मुष्टिभ्यामथप
द्भ्यां कदनं चक्रेमहद्घटश्रोत्रः । यद्बाणैर्विद्धतनुस्तंधिषणेत्वं*रामम्॥
॥ ८०५ ॥ अथगिरिशृङ्गं विपुलं शत्रुक्षिप्तंबिभेदनिशितशरैः । योभ
जतामाधिहरस्तं * रामम् ॥ ॥ ८०६ ॥ अथयत्सहजगिराते कपयो
दृष्टास्तदंगमद्रिसमम् । आरुरुहुर्दृढकायास्तंधिषणे * रामम् ॥८०७॥
तानारूढान्प्लवगान्घटकर्णोऽयं व्यधूनयत्तरसा । यस्मिन्पश्यतिपुरतस्तं
धिषणे * रामम् ॥ ८०८ ॥ आयान्तं पुरतस्तं दृष्ट्वाजनयन्मुदंकपी-
नांयः । करधृतचापोऽतिष्ठत्तं * रामम् ॥ ८०९ ॥ रक्ताप्लुतसर्वाङ्गं
प्रलिहन्तंजिह्वयास्रवद्रुधिरम् । आगतमवदत्तंयस्तं * रामम् ॥ ८१०॥
भवितास्यद्यमयात्वं प्राणैर्हीनो निपत्यरणभूमौ । इतिगिरमवदत्तंयस्तं*
॥ ८११ ॥ इत्युक्तो घटकर्णः प्रोचेवाचं विहस्यभीमरवम् । शृणुमम
गिरमितियं द्राक्तंधिषणे * रामम् ॥ ८१२ ॥ नविराधोनकबन्धो न
खरोहं रामकुम्भकर्णोस्मि । इतियमवादीत्सहसंस्तंधिषणे * रामम् ॥
॥ ८१३ ॥ नाहंमारीचोवा वालीवाताटकापि वायोषित् । इतियमवा
दीत्सहसंस्तंधिषणे * रामम् ॥ ८१४ ॥ येनेन्द्राद्याविजितास्तन्मुद्गर
मद्यभातिममहस्ते । इति यमवादीत्सरुषा*रामम् ॥८१५॥ नासाश्रुति
नाशान्मे पीडानाल्पापि जायतेऽसह्या॥ इतियमवादीत्सरुषातं*रामम्॥

॥८१६॥तववीर्यंदर्शयमे दृष्ट्वाऽहंत्वां प्रभक्षयिष्यामि । इति यमवादी
त्सरुषातंधिषणेत्वंभजानिशं रामम्॥ ८१७ ॥ इति कुम्भकर्णवचनं
श्रुत्वा कुपितस्ससर्जविशिखान्यः । रक्षःप्राणहरांस्तांस्तं * रामम् ॥
॥ ८१८॥ अथशरताडितमपितं यद्वेष्यनुजं कपीन्विनिघ्नन्तम् । अनि-
लास्त्रेणाहन्यस्तंधिष * रामम् ॥ ८१९ ॥ वायव्यास्त्रेणततः कृत्तोह
स्तःपपातकपिसैन्ये । यद्वेष्यनुजस्यतदातं धिषणे*रामम् ॥ ८२० ॥
अथघटकर्णःक्रोधादुत्पाट्यैकेनबाहुनावृक्षम् । अभिदुद्रावरणेयं तंधिष
णे * रामम् ॥ ८२१ ॥ ऐन्द्रेणास्त्रेणपुनःकृत्तैककरःपपातरणभूमौ ।
यद्विट्सहजेपितदातं धिषणे * रामम् ॥ ८२२ ॥ अथभुविविवेष्टमानं
वृक्षानशैलान् कपीनसृक्पांश्च । घ्नन्तं तमपश्यद्यस्तंधिष * रामम् ॥
॥ ८२३ ॥ अथतच्चरणौद्वावपि निशिताभ्यामर्धचन्द्रबाणाभ्याम् ।
छिच्छेदतदानींयस्तंधिषणे * रामम् ॥ ८२४ ॥ वडबामुखसदृशंस्वं
वदनंविस्तार्यपार्श्वं भागगतम् । अहनत्तं विशिखैर्यस्तंधिषणे * रामम्
॥ ८२५ ॥ प्रतिगृह्याथैन्द्रास्त्रंतस्यशिरःकुण्डलप्रशोभिचयः । प्रचक
र्तामरशत्रोस्तं * रामम् ॥ ८२६ ॥ यच्छरकृत्तं शीर्षं देवारेस्तन्निप-
त्यजलधिचरान् । ग्राहाद्यानामथ्नात्तंधिषणेत्वं * रामम् ॥ ८२७ ॥
येनिहतंयुधिसहजंश्रुत्वारक्षःपतिःशुचाऽरोदीत् । बन्धुस्त्रीजनयुक्तस्तं*
॥ ८२८ ॥ हारिपुदर्पघ्नत्वं दैवाद्यातोऽसिमां विहायमृतिम् । इत्यरुद
द्यद्वेषीतंधिषणे * रामम् ॥ ८२९ ॥ युधिरामेणहतं त्वां दृष्ट्वादेवामुदं
प्रयान्तिखलु । इत्यरुदद्यद्वेषीतं * रामम् ॥ ८३० ॥ तवहन्तारंरामं
हन्मिनचेन्मेऽद्यजीवितं व्यर्थम् । इत्यरुदद्यद्वेषीतंधिष * रामम् ॥
॥ ८३१ ॥ निहतेत्वय्यनुजेमे कथमिवदेवानहं विजेष्यामि । इत्यरु-
दद्यद्वेषीतं * रामम् ॥८३२॥ यद्वेषिविलापमिमं श्रुत्वात्रिशिरागिरंब
भाणेमाम् । व्यसनंत्यजराजन्नितितंधिष * रामम् ॥ ८३३ ॥ त्रिशिरो
वाक्यंयद्विट्छ्रुत्वात्मानंकृतार्थमथमेने ।कालेनचोदितस्सचतं*रामम्॥

देवान्तकोतिकायःप्रययुर्योद्धुं नरान्तकोपितदा । यद्विट्प्रहिताबलिन स्तं धिषणेत्वं भजानिशं रामम् ॥ ८३५ ॥ मायाविद्या निपुणाःपित्रा यद्वेषिणापरिष्वक्ताः । प्रययुर्युद्धभुवं द्राक्तंधिषणे * रामम् ॥ ८३६ ॥ युद्धोन्मत्तंमत्तंसुतरक्षात्र्थन्ययुङ्क्तबलिनौद्वौ। यद्विड्विजयाकांक्षीतंधिष* रामम् ॥ ८३७ ॥ त्रिशिरःप्रमुखास्सर्वे रथमारुरुहुर्गृहीतचापास्त्राः । यद्विट्सन्तोषकरास्तं * रामम् ॥ ८३८ ॥ स्वेषांशत्रूणांवा निश्चित्य-मृतिंतथाजयापजयौ । प्रययुर्यद्विट्तनयास्तं धिष * रामम् ॥ ८३९ ॥ यद्विट्तनयान्कपयो दृष्ट्वाऽऽयांतोगृहीततरुशैलाः । कोपादुच्चैर्नेदुस्तं * ॥ ८४० ॥ अथयद्वेषिसुतास्ते विशिखैरस्त्रैर्गदासिपरिघाद्यैः । जघ्नुर्यु-धिकपिवीरांस्तंधिषणे * रामम् ॥ ८४१ ॥ अथयद्वेषिकुमारान्कपिवी-राजघ्नुराहवेक्रुद्धाः । तरुभिर्गिरिभिर्मुसलैस्तं धिषणेत्वं * रामम् ॥ ॥ ८४२ ॥ अथरथगजहयसंस्थाञ्श्रजानिचरान्जघ्नुराद्रिभिर्वृक्षैः । कप-यो यन्मितगिरातंधिषणे * रामम् ॥ ८४३ ॥ यद्वेषिसुताविशिखैरस्त्रै रसिभिर्गदाभिरथमुसलैः । जघ्नुर्युधिकपिसिंह्यांस्तं*रामम् ॥८४४॥ य द्विट्पुत्राश्चपुनःकपिभिर्जघ्नुस्तदाकपीन्समरे। बलिनोबलिनोऽसृक्पास्तं धिष*रामम्॥८४५॥अथयद्विट्पुत्राणां द्विरदैर्द्विरदान्हयैर्हयांश्चाघ्नन् । हरयो रक्षांसिचतैस्तंधिष * रामम् ॥ ८४६ ॥ यद्विट्सैन्यं नष्टंदृष्ट्वा सैन्यंवनौकसांजेतृ । देवामुनयस्तुतुषुस्तंधिष * रामम् ॥ ८४७ ॥ अथहयमारुह्यद्रा ग्रणभुविशक्त्यानरान्तकाऽशितया । यन्मितबलान्य भिनत्तं धिष * रामम् ॥ ८४८ ॥ आयान्तं प्रासकरं तमरिंहन्तुंसुहृत्त दायस्य । अङ्गदमनयद्वालिनंतंधिषणे * रामम् ॥ ८४९॥ स चयान्मि त्रप्रहितो दृष्ट्वोचेतं गिरंतदाशत्रुम् । मयिदर्शयतवबलमितितंधिषणे* रामम् ॥ ८५० ॥ श्रुत्वा यत्प्रेष्यगिरं क्रुद्धोऽथनरान्तकस्तदाप्रासम् । क्षिप्त्वावक्षस्यनदत्तंधिषणे * रामम् ॥ ८५१ ॥ यत्प्रेष्योथनरान्तकम-वधीद्हृदयेस्वमुष्टिनाऽऽहत्य । तोषकरस्त्रिदशानान्तंस्मरबुद्धेसुख-

प्रदं रामम् ॥८५२॥ अथदृष्ट्वानिहतन्तं त्रिशिरादेवान्तकोमहाजठरः। यत्प्रेष्यं परिवव्रुस्तंस्मरबुद्धेसुखप्रदं रामम् ॥ ८५३ ॥ अथतैस्त्रिभिरेकाकीयत्प्रेष्योऽभिद्रुतोऽपिपरिघाद्यैः । प्रहतोनाव्यथतद्राक्तं*रामम्॥ ॥ ८५४ ॥ अथयत्प्रेष्योयुधिगजमुत्प्लुत्याहत्यमुष्टिनानेत्रे । अवपातयदवनितलेतं स्मर * रामम् ॥ ८५५ ॥ अथतद्द्विरदविषाणं निष्कृष्यमहोदरं जघानतदा । यन्मित्राग्रजपुत्रस्तं स्मरबुद्धे* रामम्॥८५६॥ देवान्तकोऽथकुपितः परिघेणतदा जघानदृढमाजौ । यन्मित्राग्रजपुत्रन्तं स्मर * रामम् ॥ ८५७ ॥ जानुभ्यां भुविपतितं त्रिशिराबाणैर्जघानाशिरसिपुनः । यन्मित्राग्रजपुत्रन्तं स्मर * रामम् ॥ ८५८ ॥ त्रिभिरेकंप्रहृतन्तं यद्दुतोवीक्ष्यनीलसहितोद्राक् । तस्मै चिक्षेपाद्रिंतं स्मर * रामम् ॥ ८५९ ॥ चूर्णीकृत्यतमद्रिंदृप्तोदेवान्तकोऽथयद्दूतम् । परिघकरोऽद्रवदाजौतंस्मर * रामम् ॥ ८६० ॥ आयान्तं तं दृष्ट्वा यद्दूतोमुष्टिनादृढेनतदा । क्रुद्धोहंच्छिरसिद्राक्तंस्मर * रामम् ॥८६१॥ यद्दूतमुष्टिघाताद्भिन्न शिरोदन्तनेत्ररसनस्सः । भुव्यपतद्विगतासुस्तं * रामम् ॥ ८६२ ॥ अथयत्सैन्यपमाजौ नीलंत्रिशिरामहोदरश्चतदा । ववृषतुरुरसिपृषत्कांस्तंस्मर * रामम् ॥ ८६३ ॥ संज्ञामुपलभ्यततो यत्सेनापालकोगिरिं क्षिप्त्वा । मूर्ध्निमहोदरमवधीत्तंस्मर * रामम् ॥ ॥८६४॥ दृष्ट्वापितृव्यमरणंत्रिशिराः क्रुद्धोजघानयद्दूतम् । निशितैर्विशिखैर्बहुभिस्तंस्मर * रामम् ॥ ८६५ ॥ यद्दूतेनाथहयं निहतंदृष्ट्वाक्रुधा तदात्रिशिराः । प्रायुङ्क्तशक्तिमस्मैतंस्मर * रामम् ॥ ८६६ ॥ अथ यद्दूतश्शक्तितामायान्तीं प्रगृह्यतरसाद्राक् । भङ्क्त्वाद्वेधाव्यनदत्तं * रामम् ॥ ८६७ ॥ अथतत्खड्गप्रहृतःकुपितस्तंमुष्टिनाऽभिहत्यकरे । यद्दूतोजगृहेद्राक्तंस्मरबुद्धे * रामम् ॥ ८६८ ॥ तस्यत्रीणिशिरांस्यपि तत्खड्गेनैवचिच्छिदेस्वबलात् । यद्दूतःप्रथितयशास्तंस्मर * रामम् ॥ ॥ ८६९ ॥ यद्विट्प्राहितंमत्तं दृष्ट्वागदयाकपीन्विनिघ्नन्तम् । ऋषभः

पुरतस्तस्थौतंस्मरबुद्धे सुखप्रदं रामम् ॥८७०॥ ऋषभोगदयाभिहतः क्रुद्धोमत्तंचयद्विषाप्रहितम् । हन्तुं युधिमतिमतनोत्तंस्मरबुद्धेसुखप्रदं रामम् ॥ ८७१ ॥ तद्वदयैवतदानीं यद्विट्प्रहितंनिहत्यरणमूर्ध्नि । ऋष भोऽनृत्यन्मोदात्तं स्मर * रामम् ॥ ८७२ ॥ उन्मत्तस्तुगतासुं भ्रात रमुद्वीक्ष्ययद्विषाप्रहितम् । गदयाद्रागृषभमहंस्तं स्मर * रामम् ॥ ॥ ९७३ ॥ गदयाऽभिहतःपतितस्संज्ञां लब्ध्याऽथयद्विषाप्रहितम् । तंगिरिणाऽहनृषभस्तंस्मरबुद्धे * रामम् ॥८७४ ॥ भ्रातॄन्निहतान्सैन्यै र्निहतौसहजौच यद्विषःप्रेक्ष्य । अतिकायोयोद्धुमगात्तंस्मर * रामम् ॥ ॥ ८७५ ॥ यन्मितसैन्यमखिलं दृष्ट्वामेनेऽतिकायमायान्तम् । कुंभश्र-वणोऽसाविवितितंस्मर * रामम् ॥ ८७६ ॥ यन्मितबलंसर्वं तेनप्रहृतं द्रुतंसमागत्य । शरणंयंप्रापद्राक्तंस्मर * रामम् ॥ ८७७ ॥ अथरथ-गतमतिकायं दृष्ट्वायस्सस्मितं तदाऽपृच्छत् । वदकोयमितिस्वहितंतं * रामम् ॥ ८७८ ॥ दशवदनस्यसुतोऽयं जातोबलवांश्चधान्यमालि-न्याम् । इति समवादीद्भक्तस्तं * रामम् ॥८७९॥ अतिकायोनाम्ना ऽयंविधितःप्राप्तंरथंश्रितःकवची। आयातीत्याहसयन्तं*रामम्॥८८०॥ देवासुरयक्षाद्याविजिता बहुशोऽप्यनेनबाहुबलात् । इतिभक्तोयमभा णीत्तंस्मर * रामम् ॥ ८८१ ॥ नयति क्षयमेषशरैर्वानरसैन्यंततोऽस्य वधमाशु । कुर्वितियंसोभाणीत्तं स्मर * रामम् ॥ ८८२ ॥ अथकपि भिःप्रक्षिप्तान्गिरिशृङ्गतरूनप्रखण्डयतानवधीत् । यद्विट्सुतोतिकायस्तं* रामम् ॥ ८८३ ॥ अथयमुपेत्यकलापी सधनुर्वचनंसगर्वमवदत्सः । दर्शयतवपौरुषमितितंस्मर * रामम् ॥ ८८४ ॥ तद्वाक्यंयत्सहजः श्रुत्वाऽमर्षात्समुत्पपाततदा । चापकरस्तत्पुरतस्तंस्मर*रामम्॥८८५॥ यत्सहजज्याशब्दं राक्षसभीतिप्रदं तदाश्रुत्वा । व्यस्मयताऽप्यतिका-यस्तंस्मर* रामम् ॥ ८८६ ॥ बालस्त्वंसौमित्रे गच्छयथेच्छंनयोद्धुम र्हसिमे । इति यद्विट्सुत ऊचेतंस्मर * रामम् ॥ ८८७ ॥ अथवाममपुर

तस्त्वं तिष्ठत्वां प्रेषयामिशमनगृहम् । इतियद्विट्सुतऊचेतंभजबुद्धेसुख प्रदंरामम् ॥ ८८८ ॥ इतितद्वचनंश्रुत्वा यत्सहजोवाक्यमाहतं क्रुद्धः । दर्शयमेपौरुषमितितंस्मर ॥८८९ ॥अद्यशितामम बाणाः पास्यन्त्युष्णं तवांगरुधिरंद्राक् । इतियत्सहजोऽवादीत्तं*रामम्॥८९०॥ बालोवृद्धो वाऽहंमृत्युंजानीहिसंयुगेसिस्ते । इतियत्सहजोवादी*रामम् ॥८९१॥ इतियत्सहजगिरं सश्रुत्वाक्रुद्धश्शरंप्रचिक्षेप । तसैशितमतिकायस्तं * रामम् ॥ ८९२ ॥ यद्विट्पुत्रक्षिप्तंबाणंसौमित्रिरर्धचन्द्रेण । अच्छिद्-दतिकोपाद्राक्तंस्मर*रामम् ॥ ८९३ ॥ कृत्तंस्वशरंदृष्ट्वा क्रुद्धोबाणान्स सर्जपश्चपुनः । यदवरजायचसतदातंस्मर* रामम् ॥ ८९४ ॥ तान प्राप्तान्विशिखैश्छित्वानिटिलेतदाजघानरुषा । विशिखेनचयत्सहज-स्तंस्मर * रामम् ॥ ८९५ ॥ यत्सहजक्षिप्तशरप्रहतश्शत्रुर्विचिन्त्यागिर मूचे । बलवानसिमेरिपुरितितंस्मर * रामम् ॥८९६॥ उक्त्वेत्थंरज-निचरो निशितान्व्यसृजच्छरानसंख्यातान् । यत्सहजायक्रुद्धस्तंसर* रामम् ॥ ८९७ ॥ यत्सहजोऽसंभ्रान्तो विशिखैर्विशिखान्विपक्षवि-क्षिप्तान् । चूर्णानकरोत्समरेतंस्मर * रामम् ॥ ८९८ ॥ अथकुपित त्रिदशारिर्निशितं विशिखं प्रगृह्ययत्सहजम् । प्रायुङ्क्तोरोमध्येतंसर* रामम् ॥ ८९९ ॥ अथरुधिराक्तशरीरोयत्सहजोऽस्त्रंप्रगृह्यचाग्नेयम् । प्रायुङ्क्तारौतस्मिंस्तंस्मर * रामम् ॥९०० ॥ यद्विट्तनुजोऽपितदासौरं ॐचास्त्रंप्रयुज्यधनुषिद्राक् । आग्नेयंतन्यरुधत्तंसेवेभक्तवत्सलं रामम्॥ ॥९०१॥ अरिणाविद्धोमर्मणियत्सहजः प्राप्यचेतनांशतोः । सूतंकेतुं बिभिदेतंसेवेभक्त * रामम् ॥ ९०२ ॥ ब्राह्मेणास्त्रेणैनंभिन्धित्वमिति प्रभञ्जनोक्तवचः । अश्रौषीद्यदवरजस्तंसेवे*रामम् ॥ ९०३ ॥ ज्ञात्वा ऽवध्योरच्छदमेनंवायोर्गिराचयत्सहजः । अयुजद्धनुषितदस्त्रं तं सेवे * रामम् ॥ ९०४ ॥ दृष्ट्वाऽऽगतमस्त्रं तत्सविधेनिशितैश्शरैरुरोधद्राक् । यद्विट्तनुजोषितदातंसेवे * रामम् ॥ ९०५ ॥ अथ यद्विट्तनुजशरा-

न्मोघान्कृत्वा चकर्तमकुटयुतम् । तस्यशिरोब्रह्मास्त्रंतंसेवे भक्तवत्स-
लं रामम् ॥ ९०६ ॥ अथशिष्टारजनिचरावेगाद्यद्विट्समीपमुपगम्य।
युधिसुतनिधनमवोचंस्तंसेवे * रामम् ॥ ९०७ ॥ अतिबलमतिकाय-
न्तं युधिविनिपात्यद्रुतं ससौमित्रिः । यत्साविधंसंप्रापत्तंसेवे*रामम् ॥
॥ ९०८ ॥ अथनिहतं सुतमाजौश्रुत्वायाद्विड्दुस्तदाबहुशः । चित्तेऽ
चिन्तयदेवन्तंसेवे * रामम् ॥ ९०९ ॥ तंमन्येरघुवीरंनारायणमाश्व
नामयं देवम् । इत्यमनुतयद्वेषीतंसेवे * रामम् ॥ ९१० ॥ इत्थंपुत्रा
न्भ्रातृन्निहतान्मनसाविचिन्त्ययद्वेषी । उच्चैर्व्यरुदद्व्यसनात्तंसेवे*रामम्
॥ ९११ ॥ प्रलपन्तंपितरमथोशोकार्णवमग्नमाशुतं प्रेक्ष्य । यद्विड्जो-
गिरमवदत्तंसेवे * रामम् ॥ ९१२ ॥ मयिजीवतितातत्वं मोहंप्रति
गन्तुमेव महसिकिम् । इत्यूचेयद्विड्जस्तंसेवे * रामम् ॥ ९१३ ॥
सानुजकशिंरामंपश्यत्वं मच्छरैर्विशीर्णतनुम् । इति यद्विषमाहसुतस्तं
सेवे * रामम् ॥ ९१४॥ इत्युक्त्वाशक्रारिर्यद्विट्पुत्रस्समारुरोहरथम् ।
अत्युत्तमखरयुक्तंतं सेवे * रामम् ॥ ९१५ ॥ प्रस्थितमनुजग्मुस्तं य-
द्विट्प्राहितास्सुरारयोबहवः । करधृतधनुरसिपरिघास्तंसेवे * रामम् ॥
॥९१६॥ अश्वारूढाः केचिद्रथखरपृष्ठस्थिताःपरेयोधाः । यद्विड्वचना
त्प्रययुस्तंसेवे * रामम् ॥ ९१७॥ पितृविहिताशीर्वचनो यद्विट्पुत्रो
रथन्तुसंस्थाप्य । अजुहोदग्निंहविषातंसेवे * रामम् ॥ ९१८ ॥ छागं
कृष्णंहत्वास्वीयजयेच्छुर्जुहाववायुसखम् । यद्विट्पुत्रोभक्त्या तंसेवे *
रामम् ॥ ९१९ ॥ तत्रविभीतकसमिधोरक्तंवसनं जुहावलाजयुतम् ।
याद्विट्पुत्रोज्वलनेतंसेवे * रामम् ॥ ९२० ॥ करधृत चापगदासिर्ग-
गनेऽदृश्योभवन्स्वयंविशिखैः । यन्मित्रबलान्यवधीत्तंसेवे * रामम् ॥
॥ ९२१ ॥ यन्मित्रमृषभमंगदमन्यांश्चकपींश्चकार निस्संज्ञान् । इन्द्र
जिदाजौविशिखैस्तंसेवे * रामम् ॥ ९२२ ॥ हनुमन्मैन्दद्विविदज्यो-
तिर्मुखनीलकेसरिप्रमुखान् । अवधीद्यद्विट्पुत्रस्तंसेवे*रामम् ॥९२३॥

अथतच्छरवृष्टिहतस्सावरजोयस्स्वयं विचिन्त्यहृदि । सौमित्रिंगिरमभणत्तंसेवे भक्तवत्सलं रामम् ॥ ९२४ ॥ विधिलब्धवरोऽरिरयंनावर्दयतिप्लवंगमान्हत्वा । इतियोऽनुजमाहगिरन्तंसेवे * रामम् ॥९२५॥ आवां पतितौदृष्ट्वानिस्संज्ञाविन्द्रजिज्जयीभविता । इतियोनुजमाह * रामम् ॥ ९२६ ॥ अथयंसानुजमाजौब्राह्मेणास्त्रेणशक्राजिद्भूमौ । विनिपात्यपुरीमभजत्तंसेवे * रामम् ॥९२७॥ ऋक्षाधिपनीलांगदसुग्रीवाद्यानिरीक्ष्यबंभूमौ । पतितंसानुजमरुदंस्तंसेवे * रामम् ॥ ९२८ ॥ अथकपिसैन्यंदीनंदृष्ट्वा वाचंविभीषणोऽभाणीत् । यद्भक्तःकपिवीरांस्तं सेवे * रामम् ॥ ९२९ ॥ माभैष्टाविषादोसौ युष्माकंमास्तुराघवौदृष्ट्वा। इतियद्भक्तोऽवादीत्तंसेवे * रामम् ॥ ९३० ॥ ब्राह्मेणास्त्रेणोभौप्रहृतौ विवशौ बभूवतुस्समरे । इतियद्भक्तोऽवादीत्तंसेवे * रामम् ॥ ९३१॥ अथवैधात्रंचास्त्रं बहुमान्यमरुत्सुतोभ्यधाच्चागिरम् । दृष्ट्वायद्भक्तंद्राक्तंसेवे * रामम् ॥ ९३२ ॥ युधिशत्रुप्रहितशरैः प्रहृतानाश्वासयावहै प्लवगान् । इतियद्दूतःप्रययौ * रामम् ॥ ९३३ ॥ उल्काहस्तो हनुमान्यद्भक्तयुतःकपीन्ददर्शहतान् । कृत्तशिरोलांगूलांस्तंसेवे*रामम् ॥ ॥ ९३४ ॥ पतितानां गिरिसदृशां प्लवगानां सप्तषष्टिमथकोटीः । तत्रैक्षतयद्दूतस्तंसेवे * रामम् ॥ ९३५ ॥ अमृगयताऽथर्क्षपतिंजरयायुक्तं प्रजापतेस्तनुजम् । यद्भक्तःकपिमध्येतंसेवे * रामम् ॥ ९३६ ॥ अथ दृष्टस्सर्क्षपतिर्यद्भक्तं वाक्यमब्रवीत्कृच्छ्रात् । जीवतिवाहनुमानितितं सेवे * रामम् ॥ ९३७ ॥ तच्छ्रुत्वायद्भक्तः पृच्छासिकस्माद्विहायतौ प्लवगम् । इतिवृद्धंतमपृच्छत्तंसेवे * रामम् ॥ ९३८ ॥ इतिपृष्टस्सर्क्षपतिश्शृणुवक्ष्येऽहंसहेतुकंवचनम् । इत्याहसयद्भक्तंतंसेवे * रामम् ॥ ॥ ९३९ ॥ तस्मिन्जीवतिवीरोनिहताःकपयोनजातुमन्तारः । इत्याहस यद्भक्तंतंसेवे * रामम् ॥९४० ॥ हनुमत्युज्झितजीवे जीवन्तस्स्यामानि गतप्राणाः । इत्याहसयद्भक्तंतंसेवे*रामम् ॥ ९४१॥ एतांजांबवदुक्तिं

श्रुत्वाभक्त्याननाम तत्पदयोः। यद्दूतोवायुसुतस्तंसेवेभक्तवत्सलंरामम्
॥ १४२ ॥ हरि शार्दूलागच्छत्वन्नस्त्राताभवाऽद्य निहतानाम् ।
इत्याहसयद्दूतंतंसेवे* रामम् ॥ १४३॥ यद्दूतकण्ठनादं श्रुत्वाऽऽत्मानं
तदैवजातमिव । मेनेद्रागृक्षेशस्तंसेवे * रामम् ॥ १४४ ॥ नान्यंत्व-
दृतेकश्चनपश्याम्येतद्व्यपोहितुं कष्टम् । इत्याहसयद्दूतं तं सेवे*रामम्॥
॥१४५॥ एतौविरुजौकुरुताद्दाशरथीत्वं कपींश्चतनुविरुजान् । इत्याह
सयद्दूतंतंसेवे * रामम् ॥ १४६॥ हनुमन्नर्हसिगन्तुंहिमवत्कैलासशृङ्ग
मध्यतटम् । इत्याहसयद्दूतं तंसेवे * रामम् ॥ १४७ ॥ तत्रौषधिगि
रिरास्तेतत्रौषधयोविभान्तिबह्वयस्ताः। इत्याहसयद्दूतं तंसेवे* रामम्॥
॥ १४८ ॥ तत्रचतस्रोभवताचानेतव्याः क्षणेनपवनसुत । इत्याहस
यद्दूतंतंसेवे*रामम् ॥ १४९ ॥ मृतसञ्जीविन्येकासावर्ण्यकरीविशल्य-
करिणीद्वे । इत्याहसयद्दूतं तंसेवे * रामम् ॥ १५० ॥ सन्धानकरी-
चान्यानाम्नाशस्ताविभान्तितत्राद्रौ । इत्याहसयद्दूतंतंसेवे * रामम् ॥
॥ १५१ ॥ ❀ श्रुत्वागिरमृक्षपतेर्मलय गिरिन्तं समारुरोहतदा ।
यद्दूतो वायुगतिस्तंमैथिल्याःपतिंभजे रामम् ॥१५२ ॥ गच्छन्गगन-
पद्व्या नगराद्रिनदीरतीत्य यद्दूतः। ओषधिशैलंप्रापत्तं मैथि*रामम्॥
॥१५३॥ अथयद्दूतोऽपश्यन्नोषधिविततीः प्रकुप्यतंशैलम् । उत्पाट्या
ऽऽदायऽऽगात्तंमैथि * रामम् ॥ १५४ ॥ आगत्यहरिभ्योद्राङ्न्त्वाय-
द्भक्तमालिलिङ्गतदा । यद्दूतस्तुष्टमनास्तंमैथि * रामम् ॥ १५५ ॥
आघ्रायौषधिगन्धं सावरजोयो बभूवनिश्शल्यः । सुहृदाकपिभिस्साकं
तंमैथि*रामम् ॥१५६॥ यद्विट्सैन्यंनिहतं मानार्थं तत्तदातदाजल-
धौ । प्रक्षिप्तंमृतमासीत्तं मैथि * रामम् ॥ १५७ ॥ यद्दूतागिराकपयो
ऽथोल्काहस्ताः पुरींययूरात्रौ । दग्धुंदशवदनगृहं तंमैथि * रामम् ॥
॥ १५८ ॥ यद्विट्प्रासादांगणवलभीश्चाश्वोष्ट्रमत्तगजशालाः । उल्का-
भिरधाक्षुस्तेतंमै * रामम् ॥ १५९ ॥ धूमव्याप्त्यापरितोरुरुदुर्नार्यो

धृताभकाःकटचाम् । यद्विट् पुरवासिन्यस्तंमैथिल्याः पतिंभजेरामम् ॥
॥ ९६० ॥ अथ राक्षसभीतिकरं धनुषश्शब्दंकापिप्रतोषकरम् । चक्रे-
यस्सावरजस्तं मैथि * रामम् ॥ ९६१ ॥ यन्मित्रेणादिष्टाहरयोयोद्धुं
गृहीततरुशिखराः । जग्मुर्द्वाराणिपुरस्तं मैथि * रामम् ॥ ९६२ ॥ यः
कुरुतेवितथंममशासनमज्ञातमद्यहन्म्यसिना । इतियत्सुहृदाहकपींस्तं
मैथि * रामम् ॥ ९६३ ॥ अथयद्वेष्यनुजसुतौ कुंभनिकुंभौशशासयु
द्धार्थम् । यूपाक्षाद्यैस्सहितौतंमै * रामम् ॥ ९६४ ॥ यद्विट्सैन्यं
दृष्ट्वाऽऽगच्छत्कपयोयुयुत्सवस्सर्वे । उत्पेतुर्निनदन्तस्तंमै * रामम् ॥
॥ ९६५ ॥ यद्विट् प्रहिताश्शूराश्शस्त्रैरासिभिश्शितैः प्लवङ्गानाम् । ज-
हुश्शीर्षाणितदातंमै * रामम् ॥ ९६६ ॥ तरुशैलाद्यैर्निहतायद्विट्प्रहि
ता रणाङ्कणेपेतुः । हरिभिरसृक्पाश्शूरास्तंमै * रामम् ॥ ९६७ ॥
रिपुणागदयाऽभिहतोयत्प्रेष्योवालिसूनुरथ कुपितः । कम्पनमवधीद्गि
रिणातंमै * रामम् ॥९६८॥ निहतं कंपनमाजौ यद्विट् प्रहितस्सशो-
णिताक्षोद्राक् । बिव्याधाङ्गदमस्त्रैस्तंमै * रामम् ॥ ९६९ ॥ यन्मि-
त्राग्रजपुत्रस्तस्यरथंचापमाशुगांश्चशितान् । क्रुद्धोऽच्छिददति वेगात्तंमै
* रामम् ॥ ९७० ॥ अथशत्रुकरस्थमसिं वेगादाच्छिद्यतेनतन्निटि-
लम् । यत्प्रेष्योच्छित्ततदातंमै * रामम् ॥ ९७१ ॥ अथ स गदापा
णिर्द्राग्यत्प्रेष्यं वालिजंप्रदुद्राव । आजौसैन्यसमेतस्तंमैथि * रामम् ॥
॥ ९७२ ॥ यूपाक्षोपिरथस्थो यद्विट् प्रहितः प्रजंघसहितोद्राक् । अङ्ग
दमभिरोद्धुमगात्तं मैथि * रामम् ॥ ९७३ ॥ अथ मैन्दद्विविदावपि
यत्प्रेष्यात्यं समापतुश्शीघ्रम् । तद्रक्षणकामौद्रौतं मैथि * रामम् ॥
॥ ९७४ ॥ द्विविदांगदमैन्दैस्सहयुद्धमकुर्वं स्त्रयोपिरजानिचराः । यद्वे
षिप्रहितास्तेतं मैथि * रामम् ॥ ९७५ ॥ यन्मित्रभ्रातृसुतो दृष्ट्वानि
कटंप्रजंधमायान्तम् । वृक्षेणाती तडदथतंमैथि * रामम् ॥ ९७६ ॥
तस्यकरभ्रष्टमसिं संगृह्याशिरस्तदीयमच्छित्त।यन्मित्रभ्रातृसुतस्तं*रामम्

यूपाक्षःक्षीणेषुस्संत्यज्यरथंधृतासिरागच्छत् । यन्मित्रभ्रातृसुतं तंमैथिल्याःपतिंभजे रामम् ॥९७८ ॥ द्विविदस्तंयूपाक्षं यद्विट्प्रहितं प्रताड्यहृदिकोपात् । जग्राहकरंतस्यचतंमै * रामम् ॥९७९ ॥ अथयद्वेषिप्रहितो गदयाद्विविदं जघानहृदिकोपात् । आदौसशोणिताक्षस्तंमै * रामम् ॥९८०॥ अथयद्विट्प्रहितन्तं द्विविदो नखरैर्विदार्यभुव्यपिषत्। मैन्दोयूपाक्षमहंस्तं मैथि * रामम् ॥ ९८१ ॥ अथ यद्विड्भ्रातृसुतः कुंभोभूमावपातयद्विविदम् । विशिखैर्मैंदमपिद्राक्तं मै* रामम्॥९८२॥ यन्मित्रभ्रातृसुतोदृष्ट्वापतितौ स्वमातुलौ भूम्याम् । अभ्यद्रवदथकुंभन्तं मै * रामम् ॥ ९८३ ॥ आयान्तं तंकुंभःपञ्चभिरन्यैस्त्रिभिश्चविशिखैर्द्राक् । यत्प्रेष्यमहन्क्रुद्धस्तं मै * रामम् ॥ ९८४ ॥ यत्प्रेष्यश्शरविद्धश्शैलान्वृक्षान्ववर्षतच्छिरसि । कुपितोवालिसुतो द्राक्तंमै*रामम्॥ ॥ ९८५ ॥ अथयद्विट्सहजसुतो विशिखैश्छित्वागिरींस्तरूंस्तमपि । भ्रूमध्येहन्विशिखैस्तं मै * रामम् ॥ ९८६ ॥ अथरक्तीकृतनेत्रस्सालं वृक्षंसमूलमुत्पाट्य । तमहन्हृदियत्प्रेष्यस्तं मै ॥ ९८७ ॥ चूर्णीकृत्य तरुंतं सप्तभिरेनंबिभेदविशिखैर्द्राक् । यद्वेष्यनुजतनूजस्तं मै *रामम् ॥ ॥ ९८८ ॥ मोहं प्राप्तमथांगद मरिणाव्यथितं निशम्ययत्प्रहिताः । कपयोऽरिं योद्धुमगुस्तंमै *रामम् ॥९८९॥ अथयद्वेष्यनुजसुतं जांबवदाद्याः कपीन्द्रसंयुक्ताः । गिरितरुहस्तारुरुधुस्तं मै * रामम् ॥ ॥९९०॥ क्रुद्धंकुंभंबहुभिस्तरुभिर्गिरिभिर्ववर्षयन्मित्रं। सहजसुतंपालयितुंतंमै *रामम् ॥९९१॥ कुंभेनद्रुमवर्षं छिन्नं दृष्ट्वारुषास यन्मित्रं । आक्षिप्यबभञ्जधनुस्तंमै * रामम् ॥ ९९२ ॥ अप्रतिमंकर्मकृतंश्रान्तस्त्वमसीतिनाऽऽहनन्दयया । इतितं यत्सुहृदभणीत्तं मै * रामम् ॥ ॥ ९९३ ॥ इति यत्सुहृदाप्रोक्तः कुंभःक्रुद्धोऽगृहीत्करास्यान्तम् ।

योद्धुंकृतसन्नाहस्तं मै * रामम् ॥ ९९४ ॥ कुंभमथोत्क्षिप्यबलाल्लवणां भस्यक्षिपत्तदादुष्टम् । तुष्टोयस्येष्टोद्राक्तंमैथिल्या * रामम् ॥९९५ ॥ उत्पत्यततःकुंभो यन्मित्रंमुष्टिनाजघानहृदि । कपिनिवहमध्यसुस्थंतंमैथिल्याः पतिंभजे रामम् ॥ ९९६ ॥ अथयत्सुहृदाकुंभः प्रहतोहृदये समुष्टिनाप्रापत् । विगतासुश्शमनगृहन्तं मै * रामम् ॥९९७॥ दृष्ट्वा सहजंनिहतंक्रुद्धः परिघंप्रगृह्ययत्सुहृदम् । शिरसिनिकुंभोऽहन्द्राक्तं मै* रामम् ॥ ९९८ ॥ यद्दूतंपुरतस्थितमथदृष्ट्वोरसिजघानपरिघेण । सनिकुम्भोझडितिबलीतं मै * रामम् ॥ ९९९॥ यद्दूतोरसिकठिनेपतितः परिघो गतस्वरूपोपि । रुजमकरोत्तद्धृदयेतं मै *रामम् ॥ १००० ॥ ❀ अथ यद्दूतःक्रुद्धोहृदयेद्राङ्मुष्टिनाऽभिहत्यतदा । भुविविनिपात्यतमपिषत्तं ममकुलदैवतं भजे रामम् ॥ १००१॥ उत्प्लुत्यतमायान्तंपरिगृह्यकरेण शीर्षमथतस्य । यद्दूतोऽकृन्तद्राक्तंममकूलदैव * रामम् ॥ ॥ १००२ ॥ कुंभनिकुम्भौ निहतौ श्रुत्वायद्विड्प्रचोदयद्बलिनम् । खरपुत्रंमकराक्षंतंममकुल * रामम् ॥ १००३ ॥ यद्विषमाभिवन्द्यतदा स्यन्दनमारुह्यसैन्यसंयुक्तः । प्रययौमकराक्षोद्राक्तंमम * रामम् ॥ ॥ १००४ ॥ यद्विट् प्रहितं दृष्ट्वाऽऽयान्तंकपयोगृहीततरुगिरयः । अभिजग्मुस्तंहृष्टास्तंमम * रामम् ॥ १००५ ॥ यद्विट्प्रहितस्यन्दनबद्धःकेतुःपपातभुविमार्गे ।सारथिकरगतकशयातंमम*रामम्॥१००६॥ मनसितदविचार्यतदा यद्विट् प्रहितःकपीन्समकराक्षः । अवधीद्विशिखैःप्रासैस्तं * रामम् ॥ १००७ ॥ तिष्ठत्वं पुरतोममपितृघातकराम- हन्म्यहंद्राक्त्वाम् । इति यमवोचत्सागिरंतंमम * रामम् ॥ १००८ ॥ दहतिममांगंदुखं दृष्ट्वात्वांतातघातकंदुष्टम् । इतियमवोचत्सागिरन्तं * रामम् ॥१००९॥ श्रुत्वेत्थंतद्वचनं प्रहसन्वाक्यं तदाऽऽहतंदृष्ट्वा । शत्रु

ध्वान्तरविर्यस्तंमम * रामम् ॥ १०१० ॥ युद्धेनाविनाजेतुं शत्रुर्वा-
चानशक्यते पुंसा । इतितंयःप्राहहसंस्तंमम * रामम् ॥ १०११ ॥
इत्युक्तःखरपुत्रःक्रुद्धोविशिखान्बहून्ववर्ष तदा । अभिलक्ष्यखरारिंयं
तंमम * रामम् ॥ १०१२ ॥ छिन्नान्विशिखान्भूमौ पतितान्कृत्वा-
द्विषाप्रयुक्तांस्तान् । यस्तेनसहायुध्यततंममकुलदैवतं भजे * रामम् ॥
॥ १०१३ ॥ येनारब्धं युद्धंद्रष्टुंदेवास्सकिन्नरागगनम् । परितस्थुर्नागै
स्सहतं ममकुल * रामम् ॥ १०१४ ॥ राक्षसमुक्तान्विशिखान्विशि-
खानकरोच्छरैर्निहत्यतदा । युधियोभिमुखास्थित्वातंमम * रामम् ॥
॥ १०१५ ॥ यन्मुक्तान्बाणौघांश्छिन्नाभिन्नाननेकधाकृत्वा । सववर्ष
पुनर्विशिखांस्तंमम * रामम् ॥ १०१६ ॥ अथराक्षसहस्तधृतं चापं
तद्वाजिसूतरथयुक्तम् । विव्याधशरैर्योद्राक्तंमम * रामम् ॥१०१७॥
अथविरथोभुवितिष्ठंच्छूलं विभ्राम्यपाणिनाऽमुञ्चत् । यस्मैमकराक्षो-
द्राक्तं मम * रामम् ॥ १०१८ ॥ बाणैस्त्रिभिरथगगने शूलं छित्वा-
न भोगतान्द्रेवान् । सन्तुष्टानकरोद्यस्तं मम * रामम् ॥ १०१९ ॥
अथमकराक्षंमुष्टिंकृत्वाऽऽयान्तंधनञ्जयास्त्रेण । आभिददुरोमध्येद्राक्तं*
रामम् ॥१०२०॥ दृष्ट्वासैन्यपनिधनं गत्वालङ्कांत्यवेदयद्राज्ञे । यद्विट्
प्रहिताश्शिष्टास्तं मम * रामम् ॥१०२१॥ अथशक्राजितं पुत्रं यद्विट्
प्रोक्त्वा गिरं तदनुकूलाम् । समचोदय दाजिभुवं तंमम * रामम्॥
॥ १०२२ ॥ जहिदाशरथीवीरौ त्वमदृश्योमाययाथवादृश्यः । इति
यद्विट्सुतमाहचतंतं मम * रामम् ॥ १०२३॥ इति यद्द्रिष्युक्तवचःप्रति
गृह्यसुराररिग्निमजुहोद्द्राक् । पित्रेविजयं दित्सुस्तं ममकु * रामम् ॥
॥ १०२४ ॥ शरपत्राणि विभीतकसामिधश्शस्त्राणिपावकेऽहौषीत् ।
यद्विट्पुत्रस्तुष्टस्तंमम* रामम् ॥ १०२५॥ रथमन्तर्धानगतंचारुह्यद्रा-

क्छरास्त्रचापयुतः । व्यरुचद्यद्वेषिसुतस्तंममकुल * रामम् ॥१०२६॥
कृत्वासज्यंकार्मुकमथविशिखैर्यंववर्षसावरजम् । दशकण्ठसुतस्समरेतं
मम * रामम् ॥ १०२७ ॥ तच्छरवेगाभिहतो यस्सावरजो धनुःप्रगृ
ह्यकरे । शरमयमकरोद्गगनं तंमम * ॥रामम् ॥१०२८॥ नचपस्पर्श
शरैस्तं यस्सावरजोऽरिमाशुगैर्भ्रन्तम् । अन्तर्धानगतन्तंतं * रामम् ॥
॥१०२९॥ विधिदत्तवरस्समरेविव्याधशरैरदृश्यतां प्राप्तः । यंसानुज
माजिमुखेतंममकुलदैवंतभजे रामम् ॥ १०३०॥ यद्विट्सुतशरानिहताः
कपयःप्रेतुर्गतासवोभूमौ । अमरांशप्रभवा अपितं ममकुल*रामम् ॥
॥ १०३१ ॥ अथसौमित्रिः क्रुद्धोब्राह्मंवास्त्रंत्वहंप्रयोक्ष्वामि । इत्यवद
द्यत्पुरतस्तंमम * रामम् ॥ १०३२॥ तद्वचनंश्रुत्वायः प्रोचेवाचं हि
तायलोकानाम् । एकस्यकृतेमास्त्विवातितंमम * रामम् ॥ १०३३ ॥
प्रच्छन्नंशरणागत माजौभीतं निहन्तुमर्हसिकिम् । इतियोनुजमाहगिरं
तंमम * रामम् ॥ १०३४ ॥ इतिवचनं तच्छ्रुत्वा गत्वालङ्कां पुनस्स-
मागच्छत् । यद्विड्भूर्मायाधीतंमम * रामम् ॥ १०३५ ॥ पश्चिम
दिग्द्वारिरथे मायासीतायुतेस्थितं शत्रुम् । यद्दूतस्समपश्यत्तं मम *
रामम् ॥ १०३६॥ यद्विट् सुतरथवासां मायासीतांतपस्विनींसीताम् ।
अमनुततां पवनसुतस्तंमम * रामम् ॥१०३७॥ ऊपवासकृशादीना
विगतानन्दाविदेहजेयमिति । यद्दूतोऽमंस्ततदातं ममकुल * रामम् ॥
॥ १०३८ ॥ तांसनिरीक्ष्यमुहूर्तं सीतेतिधियाकुधारिमरुधत्तम् । कपि
भिस्सहयद्दूतस्तं मम * रामम् ॥ १०३९ ॥ अथ यद्विट्पुत्रस्तां क्रोश
न्तीं रामरामरामेति । मूर्ध्निपरामृशदचिरात्तं मम * रामम्॥१०४०॥
अथ यद्दूतः क्रुद्धस्त्वांधिक्पापं तवात्रकिंशौर्यम् । इति तमनिन्दीद्बहु-
धातं मम * रामम् ॥ १०४१ ॥ केशस्पर्शोन्यासां स्वात्मविनाशंकरो
तिपुरुषाणाम् । इति यद्दूतोनिन्दीत्तं मम * रामम् ॥ १०४२ ॥

सैषाकिमकुरुतागोवद्रे मेपृच्छतस्त्वममरारे । इति यद्दूतोऽनिन्दीत्तं* रामम् ॥ १०४३ ॥ सीतां हत्वेदानीं जीविष्यसिरेकथन्नुपापीत्वम् । इति यद्दूतोऽनिन्दीत्तंमम * रामम् ॥ १०४४ ॥ इत्थं निन्दन्तंतंहनुमन्तं प्रत्युवाच यद्विड्भूः । स्वकुलध्वंसकरींगांतंमम * रामम् ॥ ॥१०४५॥ हत्वैनां दाशरथीत्वां सुग्रीवं पितृव्यमपिहन्मि । इति यद्विड्जोभाणीत्तं ममकुल* रामम् ॥ १०४६ ॥ इत्युक्त्वायद्विड्भूर्निजघानशितेनतां कृपाणेण । पश्यतिहनुमति कपिभिस्तंमम *रामम् ॥ १०४७ ॥ अथ यद्दूतः क्रुद्धेरक्षस्सैन्यं निहत्यागिरमूचे । गिरितरुहस्तांश्चकपींस्तं ममकुलदैवतं भजे रामम् ॥ १०४८॥ अर्थविनिवेद्येमंरामे स सखेततःपरं कुर्मः । इति यद्दुतोक्तिरभूत्तंमम * रामम् ॥ ॥ १०४९ ॥ आयातो यद्दूताद्दक्षपतिर्वृत्तमाशुसं श्रुत्य । तमनुययौ सैन्ययुतस्तंमम * रामम् ॥ १०५० ॥ अथहनुमान्यत्सविधंप्राप्यविषण्णोश्रुपूर्ण नयनोद्राक् । सर्वमुदन्तमभाणीत्तं * रामम् ॥१०५१॥ ❀ आजावस्मत्पुरतश्शक्रारिर्जानकींरथेऽनैर्षात् । इतियंदूतो वादीत्तं सनकादिस्मृतंभजे रामम् ॥ १०५२ ॥ अथ सचपापीसीतांकरधृतकेशोऽसिनाजघानगळे। इतियंदूतोऽवादीत्तं सन * रामम् ॥१०५३॥ इत्थं स्वदूतवचनंश्रुत्वा यश्छिन्नमूल इव वृक्षः । निस्संज्ञोभुव्यपतत्तं सन * रामम्॥ १०५४ ॥ अथकपयोभुविपतितंप्रेक्ष्यजलैःपद्मगन्धिभिश्शीतैः । यमसिञ्चन्दुःखार्तास्तंसन * रामम् ॥ १०५५॥ सौमित्रिर्बाहुभ्यां यंपरिरभ्याथदुःखितो वचनम् । हेत्वर्थयुतंप्रोचेतंसन * रामम् ॥ १०५६ ॥ शुभवर्त्मनितिष्ठन्तं नारक्षत्त्वां त्वयाकृतोधर्मः । इति यमभाणीत्सहजस्तंसन * रामम् ॥ १०५७॥ धर्मोयदिसफलोभुविनैवं कष्टं त्वमाप्स्यसिह्यार्य । इति यमभाणीत्सहजस्तंसन*रामम्॥

॥ १०५८ ॥ धर्मविरोधीजीवति दशवदनोऽद्यापि पुत्रपौत्रयुतः। इति यमवादीत्सहजस्तंसन * रामम् ॥ १०५९ ॥ यत्ना धर्मोबहुळस्तत्रश्रेयांसिवृद्धिमुपयान्ति । इति यमवादीत्सहजस्तंसन *रामम् ॥१०६०॥ धर्मस्सत्यंशौचं शास्त्रोक्तं चेत्तथापिशृणुवक्ष्ये । इति यमवादीत्सहजस्तंसन * रामम् ॥ १०६१ ॥ उत्सृजता राज्यं स्वंछिन्नंमूलंत्वयैवधर्मस्य । इतियमभाणीत्सहजस्तंसन *रामम् ॥१०६२॥ वृद्धेभ्योः ह्यर्थेभ्यः कर्माण्यखिलानि संप्रवर्तन्ते । इति यमभाणीत्सहजस्तं * रामम् ॥ १०६३ ॥ बान्धवमित्राद्या अपिधनिकानामेव भान्तिलोकेऽस्मिन् । इति यमभा*रामम् ॥ १०६४ ॥ यस्यार्थाःसकुलीनोविद्वान्मतिमान्पराक्रमीचगुणी । इति यमभाणी * रामम् ॥ १०६५ ॥ हर्षःकामोदर्पः क्रोधोधर्मोदमश्चधनिनांस्युः । इति यमभाणीत्सहजस्तं सनकादिस्तुतंभजेरामम् ॥ १०६६ ॥ नार्थास्त्वयिदृश्यन्तेसीताऽपहृताऽद्यकष्टमापिजनितम् । इति यमभा * रामम् ॥१०६७ ॥ आर्योत्तिष्ठत्वमहंव्यपनेष्यामीन्द्रजित्कृतं व्यसनम् । इति यमभा * रामम्॥ ॥ १०६८ ॥ अद्यात्मानं त्वंप्रभुमात्मानं नावबुध्यसेकिमिति । इति यमभा * रामम् ॥ १०६९ ॥ इत्थंज्येष्ठाश्वासंकुर्वत्यनुजे चतत्रयद्भक्तः । सचिवैस्सममागच्छत्तंसन * रामम् ॥ १०७० ॥ दृष्ट्वाश्रुमुखांत्सर्वां श्छ्रुत्वाशक्रारिणाहतां सीताम् । यद्भक्तोगिरमूचेतंसन*रामम्॥ ॥ १०७१ ॥ मन्येहमयुक्त मिदं सीतांस्प्रष्टुंभवेत्सा किंशक्तः । इति यद्भक्तोऽभाणीत्तंसन * रामम् ॥१०७२॥ दशवदनोजोवेद्वातांप्राणेभ्योगरीयसींहत्वा । इति यद्भक्तोऽवादीत्तंसन* रामम् ॥ १०७३ ॥ युष्मान्संमोह्यैवं कर्तुंहोमं निकुंभिलांसययौ। इतियद्भक्तोऽवादीत्तंसन* रामम् ॥ १०७४ ॥ यद्युपयातोहूत्वाभवतिरणेसौ द्विषांदुराधर्षः। इति

यद्भक्तोवादीत्तंसन * रामम् ॥ १०७५ ॥ विघ्नमानिच्छन्यागेमायामे
तां प्रयोज्य सम्प्रययौ । इति यद्भक्तोऽवादीत्तंसन* रामम् ॥१०७६॥
स्वस्थमनाभवतुभवान्कपिभिः प्रेषयतुलक्ष्मणंतुमया । इतियद्भक्तोऽवा
दीत्तंसनका*रामम् ॥ १०७७ ॥ सौमित्रिस्तंविशिखैस्तत्कर्मत्याज-
यिष्यति क्षिप्रम् । इति यद्भक्तोऽवादीत्तं* रामम् ॥ १०७८॥ निहते
तस्मिन्विजयःप्राप्तोभवतेतिनिश्चयोभवति । इति यद्भक्तो * रामम् ॥
॥ १०७९ ॥ श्रुत्वेमांभक्तगिरंयोऽनुजमूचे वचस्तदाधृष्टः। स्वाश्रित-
रक्षणदीक्षं तंसन * रामम् ॥ १०८० ॥ ब्रह्मास्त्रज्ञंबलिनं तंजहिशत्रुं
निकुंभिलां गत्वा । इत्यवदत्सहजंयस्तंसन * रामम् ॥ १०८१ ॥
जांबवतासहकपिभिर्हनुमत्प्रमुखैर्जयाय गच्छत्वम् । इत्यवदत्सहजंयस्तं
सन * रामम् ॥ १०८२ ॥ भक्तोयंसामात्यस्त्वामनुयास्यत्यभिज्ञ
इत्युक्त्वा । अप्रेषयदनुजं यस्तंसन * रामम् ॥१०८३॥ अथकवची-
धृतचापःखड्गिप्रययौ विभीषणेनपुरीम् । अभिवन्द्यसयत्पदयोस्तंसन-
कादिस्तुतंभजे रामम् ॥ १०८४ ॥ भ्रातृकृतस्वस्त्ययनो हनुमत्प्रमुखै
र्युतःकपिश्रेष्ठैः । यदवरजोऽगाल्लङ्कां तंसन* रामम् ॥१०८५॥ राक्ष
ससैन्यव्यूहं दृष्ट्वासधनुर्विजेतुमरिमाजौ । तस्थौयस्यावरजस्तंसन*रामम्
॥ १०८६ ॥ एतैरक्षस्सैन्यैर्लक्ष्मणकपयोद्रुतं प्रयुध्यन्ताम् । इतियद्भ
क्तोऽभाणीत्तंसन * रामम् ॥ १०८७ ॥ व्यूहच्छेदेजाते कपिभिर्दृश्यो-
भवेत्तदेन्द्रारिः । इति यद्भक्तोऽभाणीत्तं सन * रामम् ॥ १०८८ ॥
अथ जहिरावणिमाजौ मायाविनमाशुतीक्ष्णशरबृन्दैः । इति यद्भक्तोऽ
वादीत्तंसन * रामम् ॥ १०८९ ॥ श्रुत्वा यद्भक्तवचस्सौमित्रिर्बाण-
वर्षमकरोद्द्राक् । शक्रारिंप्रतिकुपितस्तंसन* रामम् ॥१०९०॥ ऋक्षाः
कपयोजघ्नुर्यद्विट्सैन्यं गृहीततरुगिरयः । परितःस्थित्वाक्रुद्धास्तंसन *

रामम् ॥ १०९१ ॥ केचित्कपयो नखरैर्दशनैर्दण्डैर्दृषद्भिरथपादैः ।
यद्विट्सैन्यं जघ्नुस्तंसन * रामम् ॥१०९२॥ निहतान्राक्षससङ्घान्कपि
भिर्ज्ञात्वा विहायकर्माधर्मम् ।* उदतिष्ठद्याद्विड्भूस्तंसन * रामम् ॥
॥ १०९३ ॥ अननुष्ठितकर्मान्तो यद्विट्पुत्रोनिकुंभिलां त्यक्त्वा ।
आभितोऽपश्यत्प्लवगांस्तंसन * रामम् ॥ १०९४ ॥ अथयद्दूतंपश्यन्रा-
क्षससङ्घान्बहूनभिघ्नन्तम् । शक्रजिदूचेसूतंतंसन * रामम् ॥१०९५॥
यत्रास्माकंसैन्यंहन्तिकपिस्तत्रचोदयाशुरथम् । इति यद्विड्भूरवदत्तं*
रामम् ॥ १०९६॥ अथतत्रोपेत्यशरां स्तीक्ष्णान्सन्धायधनुषियद्दूतम्।
शक्रारि रहन्समरेतंसन * रामम् ॥ १०९७ ॥ तत्प्रक्षिप्तान्विशिखा-
न्प्रासगदादीन्प्रगृह्यहस्ताभ्याम् । यद्दूतस्तमभाणीत्तंसन * रामम् ॥
॥ १०९८ ॥ रेयदिशूरोसि त्वं युध्यस्वमयाद्यदुष्ट पापेति । यद्दूतस्त-
मभाणीत्तं सन * रामम् ॥१०९९॥ आसाद्यत्वंमांयुधिनैष्यसिजीव-
न्पुनःपुरींस्वीयाम् । इति यद्दूतोऽभाणीत्तंसन * रामम् ॥ ११०० ॥
बाहुभ्यांयुध्यस्वत्वं शूरश्चेन्मयाद्यदुष्टेति । यद्दूतस्तमभाणीत्तं*रामम्॥
॥ ११०१ ॥ अथ रणभुविहनुमन्तंदृष्ट्वा शक्रारिणाप्रयुध्यन्तम् । यद
नुजमाहसभक्तस्तं सनकादिस्तुतं भजे रामम् ॥ ११०२ ॥ त्वङ्गत्वा
चेन्द्राजितंजहिविशिखैर्मर्म भेदिभिस्समये। इतिसयदवरजमूचेतंसन *
रामम् ॥ ११०३ ॥ इतियद्भक्तेनोक्तस्सौमित्रिस्तद्युतो ययौ सधनुः।
❀ पवनजमाशुदिदृक्षुस्तं नत्यजचित्तमुक्तिदं रामम् ॥ ११०४॥ वृक्ष
छायानिबिडं देशंयद्भक्तदर्शितं भीमम् । सौमित्रिस्समपश्यत्तन्नत्यज
चित्तमुक्तिदं रामम् ॥ ११०५॥ ज्ञात्वाथ वृत्तमखिलं यद्भक्तगिराऽरि
माशुविजिगीषुः। सधनुस्सौमित्रिरभूत्तं नत्यज * रामम् ॥११०६ ॥

विध्वंसया प्रविष्टन्यग्रोधं त्वं जितेन्द्र मद्यशरैः। इति यद्भक्तोवादी त्तंनत्यज चित्तमुक्तिदं रामम् ॥११०७॥ श्रुत्वा यद्भक्तगिरं शक्रारिं प्राह लक्ष्मणः क्रुद्धः। त्वं दर्शयतव बलमिति तंनत्यज = रामम् ॥११०८॥ अथ यद्भक्तं दृष्ट्वा शक्रजिदवदत्पितृव्यमाजि भुवि। कोपात्प्रस्फुरितोष्ठ स्तंनत्यज = रामम् ॥११०९॥ भ्रात्रा वृद्धिमवाप्य भ्रातृसुतं किं निहन्तुमपि युक्तम्। इत्याह स यद्भक्तं तंनत्यज = रामम् ॥१११०॥ दुर्बुद्धे शोच्यस्त्वं साधुविनिन्द्यश्च भवसि पापिष्ठ। इत्याह स यद्भक्तं तंनत्यज = रामम् ॥११११॥ श्रितपरपक्षः कुमतिः पश्चादरिभिर्निहन्यते समये। इत्याह स यद्भक्तं तन्नत्यज = रामम् ॥१११२॥ इत्युक्तश्शक्र जितायद्भक्तः प्रत्युवाचतं दुष्टम्। गिरमनपेतांन्यायात्त्तंनत्यज = रामम् ॥१११३॥ राक्षसकुलसंजातोप्यार्ये वर्त्मन्यहश्चरामि सदा। इत्याह स यद्द्वि-ड्जं तंनत्यज = रामम् ॥१११४॥ नाधर्मेऽभिरुचिर्मेन ज्येष्ठे भक्तिरस्ति दुर्वृत्ते। इत्याह स यद्द्विड्जं तंनत्यज = रामम् ॥१११५॥ हिंसापरस्वहरणेतरदारासक्तमत्यजं ज्येष्ठम्। इत्याह स यद्द्विड्जं तंनत्यज = रामम् ॥१११६॥ मुन्यन्तकममररिपुं ज्येष्ठं त्यक्त्वा भजामि रघुनाथम्। इत्याह स यद्द्विड्जं तंनत्यज = रामत् ॥१११७॥ त्वं कालपाशबद्धो ब्रूहि यथेच्छं जिहासुरद्यासून्। इत्याह स यद्द्वि-ड्जं तंनत्यज = रामम् ॥१११८॥ युधि लक्ष्मणबाणहतश्शमन-गृहं गच्छ शीघ्रमतिथिस्त्वम्। इत्याह स यद्द्विड्जं तंनत्यज = रामम् ॥१११९॥ इत्थं पितृव्यवचनं श्रुत्वा क्रुद्धो जगादरथ-संस्थः। शक्रारिर्यदवरजं तं नत्यज = रामम् ॥११२०॥ हनुम-त्पृष्ठारूढं स विभीषणवानरं च सौमित्रिम्। यद्द्विड्जोगिरमूचे = रामम् ॥११२१॥ विधमिष्यन्ति शरावोगात्राणि मया धनुः प्रयुक्ताद्द्राक्। इति यद्द्विड्जोवादीत्तं नत्यज = रामम् ॥११२२॥

तोमरशक्ति प्रासैर्गमयिष्याम्यद्यकालसदनं वः । इति यद्विड्जोवादी- त्तंनत्यजचित्तमुक्तिदं रामम् ॥११२३॥ अथ तद्वचनं श्रुत्वा यद्- वरजस्तं जगादनिर्भीकः । करधृत चापशरौघ स्तंनत्यज = रामम् ॥११२४॥ वागाडंबरतोलं यदिशौर्यन्तेप्रदर्शयाजिमुखे । इति गिरमाह यदनुज स्तंनत्यज = रामम् ॥११२५॥ इत्युक्तश्शक्रा- रिर्विशिखैर्विध्वाशितैर्यदनुजं द्राक् । विनदन्वाचमवोच त्तंनत्यज = रामम् ॥११२६॥ आदास्यन्तेतेऽसून्मत्करधृत चापनिस्सृता विशिखाः । इति स यदनुजमावादी त्तंनत्यज = रामम् ॥११२७॥ गृध्राश्श्येनाश्च शिवाः खादन्तुत्वां गतासुमद्यहतम् । इति स यदनु- जमवादी त्तंनत्यज = रामम् ॥११२८॥ इत्थं परुषं वचनं निग- दन्तं तं सुरारिमथवाचम् । यद्वरजः प्रावोच त्तंनत्यज = रामम् ॥११२९॥ त्यजदुर्बुद्धे वाग्बलमित्युक्तं पूर्वमेवदुष्टमया । इत्याह यद- नुज स्तंनत्यज = रामम् ॥११३०॥ इत्युक्त स्स यदनुजं स हनूमन्तं जघाननिशितशरैः । द्राक्सप्तभिरथदशभि स्तंनत्यज = रामम् ॥११३१॥ अथ शितशर शतघातैरुधिरोत्सिक्तांगमाशुयद्भक्तम् । *अकरोदिन्द्रजिदाजौ तंनत्यज = रामम् ॥११३२॥ तंदृष्ट्वा यद्- वरजः प्रहसन्विशिखैर्बिभेदशक्रारिम् । समरमुखेनिर्भीक स्तंनत्यज = रामम् ॥११३३॥ नैवं शूरास्समरे प्रहरन्ति शरैश्शिवं करैश्शत्रून् । इत्याह स यद्वरज स्तंनत्यज = रामम् ॥११३४॥ इत्युक्त्वा विध्वस्तं कवचं कृत्वा शरैर्बिभेदतनुम् । शक्रारेर्यद्वरज स्तंनत्यज = रामम् ॥११३५॥ अथ शक्रारिः क्रुद्धो रुधिराद्रांगोववर्षबाणौ घान् । यस्यावरजस्य तनौ तंनत्यज = रामम् ॥११३६॥ यद्वर- जेन्द्रजितौ द्वावन्योन्यं द्राग्विजे तु कामौ तौ । युद्धमकुरुतां विशि- खै स्तंनत्यज = रामम् ॥११३७॥ यद्वरजेन्द्रारीतौ श्रमवैमुख्येन किञ्चिदभजेताम् । अनवरतं युध्यन्तौ तंनत्यज = रामम् ॥११३८॥

यद्भक्तोपि क्रुद्धस्सामात्यो राक्षसां स्तदानिशितैः । विशिखैरणभुव्य वधी त्वंनत्यज चित्तमुक्तिदं रामम् ॥११३९॥ एतद्राक्षससैन्यं शिष्टं हतयूयमित्यवोचत्तान् । कपिवीरान्यद्भक्त स्तंनत्यज = रामम् ॥११४०॥ अस्मिन्निहते पापे रावणवर्ज बलं हतं सर्वम् । इति यद्भक्तोवादी त्वंनत्यज = रामम् ॥ ११४१ ॥ एतावदेव शेषं जेतव्यं वोस्ति रक्षसां सैन्यम् । इत्यवदद्यद्भक्त स्तंनत्यज = रामम् ॥११४२॥ न हनिष्याम्ये न महं पापिनमपि सहजपुत्र इति दयया । इत्यवदद्यद्भक्त स्तंनत्यज = रामम् ॥११४३॥ नेत्रे मम च निरुन्धेबाष्पं पुत्रं निहन्तु कामस्य । इत्यवदद्यद्भक्त स्तंनत्यज = रामम् ॥११४४॥ तस्माद्युयं कपयस्सं भूयै तान्नतास्य भृत्यान्द्राक् । इत्यवदद्यद्भक्त स्तंनत्यज = रामम् ॥११४५॥ अथ जांबवान्स्वयूथैर्युक्तोहन्नद्रि शृंगतरुबृन्दैः । यद्विट्सुतभृत्यान्युधि तंनत्यज = रामम् ॥११४६॥ ऋक्षाधिपमथपरितास्थित्वा भृत्यान्विनिघ्नतो दृष्ट्वा । यद्दूतः क्रुद्धोभू त्वंनत्यज = रामम् ॥११४७॥ अथ यद्दूतो गिरिभिस्तरुभिर्दशनैर्नखैः पदाघातैः । राक्षस भृत्यान वधी त्वंनत्यज = रामम् ॥११४८॥ यद्भक्तंश क्रारिर्विध्वाविशिखै स्ततो निरीक्ष्य पुनः । सौमित्रिमभ्यधावत तंनत्यज = रामम् ॥ ११४९ ॥ आदान विप्रमोक्षौ बाणानां तत्रकोपिनाद्राक्षीत् । *यदवरजस्य तदानीं तंभजरेत्वं मनस्सदा रामम् ॥११५०॥ रुधिरौघ महानद्यस्सुस्रुवुरभितस्तदाऽऽजिमेदिन्याम् । यदवरजे धृत चापे तंभज = रामम् ॥११५१॥ मुष्टिप्रति संग्रहणं लक्ष्यग्रहणं च नेतरैर्दृष्टम् । यदवरजेधृत विशिखे तंभज = रामम् ॥११५२॥ लोकेभ्य स्स्वस्त्यस्त्विति मुनयो वाचं जजल्पुरन्योन्यम् । यदवरजे धृत विशिखे तंभज = रामम् ॥११५३॥ अथ रावण डिंमहयांश्चतुरश्चतुरोव्य ताडयन्निशितैः । विशिखैर्यस्यावरज स्तंभज =

रामम् ॥११५४॥ अथ भल्लेनरथस्थं सूतमहन्लाघवेन शक्रारेः
विजिगीषुर्यदवरज स्तंभजरेत्वं मनस्सदा रामम् ॥११५५॥ यन्त
रिनिहतेसमरे हर्षं त्यक्त्वा विषण्णवदनो भूत् । यद्विड्जो मायावं
तंभज = रामम् ॥११५६॥ अथ शरभगन्धमादनरभसा स्सहिता
प्रमाथिनोत्प्लुत्य । यद्विड्जहयान्जघ्नु स्तंभज = रामम् ॥११५७।
अथ हयसारथिहीनाद्यद्वेषि सुतो रथादवप्लुत्य । सौमित्रि मधावीद्रा
क्तंभज = रामम् ॥११५८॥ मायाव्यथ यद्विड्जो युद्धं कुर्वत्सु
राक्षसेष्वरिभिः । रथहेतोः पुरमविश त्तंभज = रामम् ॥११५९॥
आक्ह्यान्यं स्यन्दनमागान्मन्दोदरी सुतोयोद्धुम् । यदवरजे न समं
द्रा क्तंभज = रामम् ॥११६०॥ वानरवीरान्विशिखैर्विध्वाभूमौ
स पातयामास । यद्विड्जन्माऽऽजिमुखे तंभज = रामम् ॥११६१॥
तद्विशिखवध्यमाना बहुशः कपयश्शरण्य मथमत्वा । यदवरजं सं
प्रापु स्तंभज = रामम् ॥११६२॥ अथ यत्सहजः क्रुद्धश्चिच्छेद
धनुस्तदीय हस्त धृतम् । पौनः पुन्येन द्रा क्तंभज = रामम्
॥११६३॥ सं भिन्नचापमथतं वक्षसि विव्याधपंचभिर्विशिखैः ।
यत्सहजो दृढधन्वा तंभज = रामम् ॥११६४॥ रुधिराद्रां गोरक्तं
वदनेन वमन्धृतान्य चापस्सः । यत्सहज महन्विशिखै स्तंभज =
रामम् ॥११६५॥ मत्वाभेद्योरच्छदमेनं शत्रुस्तदा यदनुजं द्राक् ।
निटिलेऽविध्यद्विशिखै स्तंभज = रामम् ॥११६६॥ अवधीदथ
विशिख हतो यत्सहजः पञ्चभिश्शरैर्वदने । धृत कुण्डलमिन्द्रारिं
तंभज = रामम् ॥११६७॥ यत्सहज यदरिजातौ रेज तु राजौ
मिथश्शरप्रहतौ । रुधिरालंकृत देहौ तंभज = रामम् ॥११६८॥
शक्रारिर्यद्भक्तं विध्वावदने शरैस्ततःप्लवगान् । प्रत्येकमहन्विशिखै
स्तंभज = रामम् ॥ ११६९ ॥ सारथि मथयद्भक्तश्चतुरश्चतुरोह-
यांश्च शक्रारेः । गदयानिजयानतदा तंभज = रामम् ॥११७०॥

हत सारथिरथ्याद्रागवतीर्य रथादरिश्च यद्भक्तम्। रथशक्त्याहन्वेगा त्तंभजरेत्वं मनस्सदा रामम् ॥११७१॥ तां यत्सहजो दृष्ट्वा दश-धाछित्वान्यपातयद्भूमौ। आयान्तीं रथशक्तिं तंभज = रामम् ॥११७२॥ यद्भक्तयदरिजौ द्वावस्त्रप्रत्यस्त्रवर्षिणाव थतौ। युद्धं प्राकुर्वातां तंभज = रामम् ॥११७३॥ अथ यत्सहजाविसृष्टं वारुणमस्त्रं रुरोध रौद्रेण। शक्रारि स्समरमुखे तंभज = रामम् ॥११७४॥ आसुरमस्त्रं व्यसृजच्छक्रारिश्शत्रु नाशकं घोरम्। लक्षीकृत्य यदनुजं तंभज = रामम् ॥११७५॥ अथ माहेश्वरमस्त्रं चापे सन्धाय तन्य रुन्धास्त्रम्। यत्सहजोस्त्रविदग्न्य स्तंभज = रामम् ॥ ११७६ ॥ ऋषयः पितरो देवाश्शतमख मुख्यास्तदाजि मुखवासम्। यस्या वरजमरक्षं स्तंभज = रामम् ॥११७७॥ येनाजयदिन्द्रोरीनसुरा-नैन्द्रं तदस्त्रमभिवीक्ष्य। यत्सहजोऽधत्तकरे तंभज = रामम् ॥११७८॥ श्रेष्ठे धनुषि श्रेष्ठं विशिखं श्रेष्ठो धनुष्मतां युङ्क्त्वा। यत्सहजो गिर-मवद त्तंभज = रामम् ॥११७९॥ धर्मात्मा सत्यवचा रामो यदि बाण शत्रु माशु जहि। इति यत्सहजोक्तिरभू त्तंभज = रामम् ॥११८०॥ यदि रामो दाशरथि स्त्वंचाप्रतिमोहतान्ममाद्यरिपुम्। इति यत्सहजोक्तिरभू त्तंभज = रामम् ॥११८१॥ इत्युक्त्वा-चापज्यामाकृष्याकर्णमत्यजाद्विशिखम्। यत्सहजश्शत्रुं प्रति तंभज = रामम् ॥११८२॥ ऐन्द्रास्त्रछिन्नमरेस्सशिरस्त्राणं शिरः पपातभुवि। यस्यावरजे पश्यति तंभज = रामम् ॥११८३॥ इन्द्रारौ निहते युधियत्सहजेनाशुचुक्रुशुः कपयः। स विभीषण तत्साचिवा स्तंभज रामम् ॥११८४॥ पतितेनाथे यद्विट्सैन्यं कपिभिः प्रताड्यमानं द्राक्। भीतं दुद्रावादिश स्तंभज = रामम् ॥११८५॥ त्यक्त्वा-पट्टसपरिघप्रसादीन्या युधानि दुद्राव। यद्विट्सैन्यं भीतं तंभज = रामम् ॥११८६॥ ववृषुः पुष्पाणि तदा जहृषुः प्रशंस सुरादिते

यास्ते। निहतारिं यदवरजं तंभजरेत्वं मनस्सदा रामम् ॥११८७॥ निहतरिपुं यत्सहजं दृष्ट्वा कपयो विभीषणो हनुमान्। चक्रु स्स्तुतिमतिहृष्टा स्तंभज = रामम् ॥११८८॥ युक्तस्सौमित्रिस्तै रागत्योद्वीक्ष्य रामकपिनाथौ। यस्मै प्रणनामद्रा क्तंभज = रामम् ॥११८९॥ कृत रावणिवधमेनं यस्मै भक्तोन्यवेद यत्तोषात्। श्रुत रावणि वधतुष्ट न्तंभज = रामम् ॥११९०॥ यस्त मुपाघ्राय शिरस्युत्तमवीर्यं विलज्जमानमपि। आरोप्यांकमुदीक्षत तंभज = रामम् ॥११९१॥ अरिशरपीडितकायंयो दृष्ट्वा निश्वसन्तमप्यनुजम्। ऊचे वाचमनीचां तंभज = रामम् ॥११९२॥ अद्य कृतं कल्याणं दुष्करमपि कर्मतत्त्वया भ्रातः। इति योवरजमभाणी त्तंभज = रामम् ॥११९३॥ अद्य विभीषणहनुमन्मुख्याः कपयः श्रमं परं प्रापुः। इति योमनसास्मार्षी त्तंभज = रामम् ॥११९४॥ श्रुत्वा पुत्रान्निहतं निर्यान्तं राक्षसाधिपं स्वबलैः। हन्म्यहमित्यभणद्य स्तंभज = रामम्॥११९५॥ मत्सहजं च कपीनपि निर्व्रण देहान्कुरुत्वमति शीघ्रम्। इत्याह सुषेणं य स्तंभज = रामम् ॥११९६॥ इत्थं येनाज्ञप्तस्ससुषेणस्तान्कपींश्च सौमित्रिम्। अकरोद्दृढकायान्द्रा क्तंभज = रामम् ॥११९७॥ सर्वेमुदित स्वान्ता निरुपद्रवरोगकल्मषा भूत्वा। यन्निकटे प्रावात्सु स्तंभज = रामम् ॥११९८॥ अथ सचिवाश्शुस्येमां शक्रारि वधं निवेदयाञ्चक्रुः। यद्रिपवे राज्ञे द्रा क्तंभज = रामम् ॥११९९॥ श्रुत्वा पुत्रस्य वधं क्रन्दन्भूमौ निपत्य निस्संज्ञः। स्वयमुदतिष्ठद्यद्विट्तं भज = रामम् ॥१२००॥ हा पुलेन्द्रारेत्वं *सौमित्रि वशं कथं गतोसि वद। इत्यरुदद्यद्वेषीतं दशकण्ठद्विषं भजे = रामम् ॥१२०१॥ कालान्तकविजयीत्वं नर शरवध्यः कथं न्वभूर्वदरे। इत्यरुदद्यद्वेषी तंदश = रामम् ॥१२०२॥ स्वप्स्यन्त्यद्यमृतं त्वां श्रुत्वा देवामहर्षयोरिपवः। इत्यरुदद्यद्वेषी तंदश =

रामम् ॥१२०३॥ अद्यत्वन्मातॄणां रुदितं श्रोष्याम्यहं कथं व दरे। इत्यरुदद्यद्वेषी तंदशकण्ठद्विषंभजे = रामम् ॥१२०४॥ क्रन्दन्त्यास्त्वन्मातु र्वदनं द्रक्ष्याम्यहं कथं वदरे। इत्यरुदद्यद्वेषी तंदश = रामम् ॥१२०५॥ मयि यमसदन याते खलु कर्तव्यं त्वयाचनैवापम् । इत्यरुदद्यद्वेषी तंदश = रामम् ॥१२०६॥ जीवति स सुहृदि रामे शल्यमनुद्धृत्यकां दिशं यायाः । इत्यरुदद्यद्वेषी तंदश = रामम् ॥१२०७॥ वृद्धौ मातापितरौ भार्याश्च सतीं विहायकुलागाः। इत्यरुदद्यद्वेषी तंदश = रामम् ॥ १२०८ ॥ इत्थं विलपन्तं तं यद्वेषिणमाविवेशरुण्णितराम् । पुत्र व्यसनजानिद्रां त्तंदश = रामम् ॥१२०९॥ क्रुद्धान्तक सदृशोयं यद्विड्भीतांश्च राक्षसान्दृष्ट्वा। वाचं धृष्टोवोच त्तंदश = रामम् ॥ १२१० ॥ देवेभ्योप्यसुरेभ्यो भीतिर्मेनास्ति धातृ दत्तवरात् । इति यद्विड्गिरमवद त्तंदश = रामम् ॥ १२११ ॥ हन्मि धनुष्मान्कवची रामं सहजातमित्र कपि सहितम् । इति यद्विड्गिरमवदत्तंदश = रामम् ॥१२१२॥ अथ सुतवधसन्तप्तो यद्विड्सीतां निहन्तु मिच्छन्द्राक् । अवददसृक्पान्वाचं तंदश = रामम् ॥ १२१३ ॥ कपि वंचनाय पूर्वं मायासीता हतासुतेन मम । इति तानवदद्यद्वि ट्तंदश = रामम् ॥ १२१४ ॥ अहमद्य यथार्था तां हन्म्याचिरादेव पुत्रशोकार्तः । इति तानवदद्यद्वि ट्तंदश = रामम् ॥ १२१५ ॥ इत्थं जल्पन्खड्गं हस्ते धृत्वा वनं प्रयान्तं तम् । यद्विषमरुधन्सुहृद स्तंदश = रामम् ॥ १२१६ ॥ दृष्ट्वाऽऽयान्तं करधृत खड्गं यद्वेषिणं तदावाचम् । भीतासीतावोच त्तंदश = रामम् ॥१२१७॥ अद्यसनाथां मामपि मत्वानाथामिवैष किमुहन्यात् । इति यत्पत्न्यक्रन्द त्तंदश = रामम् ॥१२१८॥ हनुमत्पृष्ठेन तदा यायां यद्यद्य किं भवेद्दुःखम् । इति यत्पत्न्य क्रन्द त्तंदश = रामम् ॥१२१९॥ इति विल-

पत्न्यां सत्यां सचिवोनाम्ना सुपार्श्व इति धीमान् । यद्रिपमूचे वचनं तंदश कण्ठद्विषं भजे रामम् ॥१२२०॥ नैषी स्सीतां हन्तुं कोपाद्धर्मस्त्वया न सन्त्याज्यः । इति यद्विषमाह स गां तंदश = रामम् ॥१२२१॥ ब्रह्मकुलेजातस्त्वं स्त्रीवधबुद्धिं त्यजत्रयी विद्वान् । इति यद्विषमाह सगां तंदश = रामम् ॥१२२२॥ शूरस्समरे धीमान्हत्वा रामं समाप्स्यासित्वं ताम् । इति यद्विषमाह सगां तंदश = रामम् ॥१२२३॥ अभ्युत्थानमिदानीं कुर्वस्माभि स्सहारिविजयाय । इति यद्विषमाह सगां तंदश = रामम् ॥१२२४॥ श्वोऽमावास्या यान्त्वं विजयाय बलैर्वृतः प्रयाहिद्राक् । इति यद्विषमाह सगां तंदश = रामम् ॥१२२५॥ प्रतिगृह्य वचस्सुहृदो गत्वागेहं पुनस्सभां प्रापत् । यद्विड्दुःखाक्रान्त स्तंदश = रामम् ॥१२२६॥ सुतशोकार्तो यद्विट्प्रां जलिरूचेगिरं बलाध्यक्षान् । मामनुयातद्रागिति तंदश = रामम् ॥१२२७॥ अथ रथगजहयसंघैर्युक्तास्ते निर्ययुस्तदायोद्धुम् । यद्विड्सन्तोषकरा स्तंदश = रामम् ॥१२२८॥ परिघपरश्वधपट्टसविशिखप्रासासिकुन्तशस्त्रयुतम् । यद्विट्सैन्यं प्रययौ तंदश = रामम् ॥१२२९॥ यद्विट्प्रहिता न थतान्दृष्ट्वा कपयोगृहीततरुशैलाः । अभवं त्समरोद्युक्ता स्तंदश = रामम् ॥१२३०॥ सूर्योदयमारभ्यत्व तुमुलं युद्धं बभूव भीतिकरम् । यद्विट्सैन्यकपीनां तंदश = रामम् ॥१२३१॥ यद्विड्रथगजवाजि प्रहरणसंघान्बभञ्जु रथकपयः । शैलद्रुम नखदशनै स्तंदश = रामम् ॥१२३२॥ एकैकमसृक्पन्ते कपयो बहवस्तदाभ्य धावन्त । यत्सुहृदाज्ञावशगा स्तंदश= रामम् ॥१२३३॥ यद्विट्प्रहिताश्शूरास्समरे जघ्नुः कपीन्बहून्विशिखैः । भल्लैः परिघैः प्रासै स्तंदश = रामम् ॥१२३४॥ अथ कपयो भृशमभितोऽसृक्पैर्विशिखैः प्रहन्यमानास्ते । यंप्रापुश्शरणं द्रा क्तंदश = रामम् ॥१२३५॥ लोकशरण्यश्शरणं प्राप्तान्प्लवगा-

न्निरक्षयिषु रचिरात् । यःकोदण्डकरोभू त्तंदशकण्ठद्वि षंभजे रामम् ॥१२३६॥ धनुरायम्य दृढं यो निशितान्विशिखान्ववर्ष रक्षस्सु । गिरिषु पयांसीवघन स्तंदश = रामम् ॥१२३७॥ ददृशुः कर्माणि रणे यस्यासृक्पाभयंकराणि तदा । चालयतस्स्वानीकं तंदश = रामम् ॥१२३८॥ यं नोददृशु रसृक्पाददृशुर्निहतं गजाश्वपत्तिरथम् । पतितं रणभुवमभित स्तंदश = रामम् ॥१२३९॥ यत्प्रहितास्त्रस्याद्भुतशक्त्या सृक्पा स्तदाश्रिता मोहम् । अवधिषु रन्योन्यन्ते तंदश = रामम् ॥१२४०॥ न ददृशिरेयं रामं गान्धर्वास्त्रेण मोहिता रिपवः । भक्त जनाक्ष्णां विषयं तंदश = रामम् ॥ १२४१ ॥ धनुषः कोटिं ददृशुर्यस्य तनुं नैव नील नळिनाभम् । पापास्ते सृक्पा युधि तंदश = रामम् ॥१२४२॥ येनैकेन रथानां दशसाहस्रं हतं बभूव तदा । अह्नोष्टमेथभागे तंदश = रामम् ॥१२४३॥ येनैकेन स.स्राण्येका दशदन्तिनां हतानि तदा । अह्नोष्टमेथभागे तंदश = रामम् ॥१२४४॥ येनैकेन चतुर्दश साहस्रं वाजिनां तदा निहतम् । अह्नोष्टमभागे युधि तंदश = रामम् ॥१२४५॥ येनैकेन जनानां लक्षद्वितयं हतं तदा बलिनाम् । अह्नोष्टमभागे युधि तंदश = रामम् ॥१२४६॥ हतशेषा रजनि चरा लंकामभिपेतुराशु यद्भीताः । रुधिरालंकृत देहा स्तंदश = रामम् ॥ १२४७ ॥ अथ सुग्रीव विभीषण हनुमद्रक्षोधिपादिमान्प्लवगान् । हृष्टोगिरमभणद्य स्तंदश = रामम् ॥१२४८॥ गतस्यास्त्रस्य बलं वेद्म्यहमथवा त्रिलोचनोवेत्ति । इति योगिरमभणत्तां स्तंदश = रामम् ॥१२४९॥ अथ येन धवां न्निहतांच्छ्रुत्वा नार्योऽरुदंश्च लंकायाम् । श्लथचिकुरागण्डकरा स्तंदश = रामम् ॥१२५०॥ शूर्पणखामूलोयं जातो नोऽनर्थ इत्युदीर्योच्चैः । यद्विद्पूस्थौरुरुदु स्तंदश = रामम् ॥१२५१॥ सीताऽनीता राज्ञा स्ववधायास्मान्प्रकर्तुमपि

विधवाः । इति यद्विषमशपं स्तां स्तंदशकण्ठद्विषं भजे रामम् ॥१२५२॥ वालिविराध कबन्धान्निहतां च्छ्रुत्वापि नास्य भीतीरभूत् । इति यद्विषमशपं स्ता स्तंदश = रामम् ॥१२५३॥ खरघट कर्णेन्द्रारी न्निहतां च्छ्रुत्वापि नास्य धीरुदभूत् । इति यद्विषमशपं स्ता स्तंदश = रामम् ॥१२५४॥ रुद्रोवा विष्णुर्वा मृत्युर्वास्मा-*न्निहन्ति रामामिषात् । इत्यरुदन्यदरिजना स्तंवैराग्येप्सुराश्रये रामम् ॥१२५५॥ रामशराद्दशवदन स्स्वस्य वधं नैव मन्यते-दुर्धीः । इत्यरुदन्यदरिजना स्तंवै = रामम् ॥ १२५६॥ उत्पाता रामजयं रावणनिधनश्च सूचयन्त्यधुना इत्यरुदन्य दरिजना स्तंवै = रामम् ॥१२५७॥ अभयं न मानुषेभ्यः पूर्वममुष्मै न दत्तमब्जभुवा । इत्यरुदन्यदरिजना स्तंवै = रामम् ॥१२५८॥ सीतां स्वविनाशार्थं जातां नामंस्त बुद्धिहीनोयम् । इत्यरुदन्यदरिजना स्तंवै = रामम् ॥१२५९॥ रामविरोधिन मेनं श्रयतान्नः कोपि रक्षको न भवेत् । इत्यरुदन्यदरिजना स्तंवै = रामम् ॥१२६०॥ अथ यद्वेषी क्रुद्धस्संदश्योष्ठं तदाक्षणं ध्यात्वा । निकटस्थान्गिरमवद त्तंवै = रामम् ॥१२६१॥ सैन्यानि वदतशीघ्रं निर्याते त्याज्ञयाद्य ममयूयम् । इतितानवदद्य द्विट्तंवै = रामम् ॥१२६२॥ यद्वेष्याज्ञां ज्ञात्वा प्राञ्जल यस्तस्थुराशुरजनिचराः । सर्वे विजयाकांक्षा स्तंवै= रामम् ॥१२६३॥ अथ यद्विड्गिरमूचे बलिनं च महोदरं महा पार्श्वम् । प्रघसविरूपाक्षमपि त्रीन् तंवै = रामम् ॥१२६४॥ रामं सानुजमित्रं नेष्याम्यह मद्यकाल सद्मशरैः । इति यद्विट्तानभण त्तंवै = रामम् ॥ १२६५ ॥ घटकर्णखरेन्द्राजितां कुर्यां शत्रोर्वधादहं तृप्तिम् । इति यद्विट्तानभण त्तंवै = रामम् ॥१२६६॥ विधमिष्याम्यद्य कपीं नृक्षेश कपीश संयुतान्समरे । इति यद्विट्तानभण त्तंवै = रामम् ॥१२६७॥ गोमायु कंक गृध्रा नरिमां सैरद्य तर्पयि-

ष्यामि । इति यद्विद्वतानभण च्वैराग्येप्सुराश्रये रामम् ॥१२६८॥ श्रुत्वा यद्वेषिगिरं सेनाध्यक्षान्गिरं महापार्श्वः । उचेद्रागायान्त्विति तंवै = रामम् ॥१२६९॥ यद्वेष्याज्ञातो द्राक्सूतोष्ट हयं रथं स्वलंकृत्य । आनैषीद्विर्निकटं तंवै = रामम् ॥१२७०॥ आरुह्यरथं यद्विड्बहूभीरक्षो भिरन्वितो बलिभिः । प्रययौ योद्धुं कवची तंवै = रामम् ॥१२७१॥ बलवांश्च विरूपाक्षोऽथ महापार्श्वो महोदरश्च तदा । यद्विषमनुययुराचिरा त्वंवै = रामम् ॥१२७२॥ स भ्रात्राये न द्राग्योद्धुं प्रागाद्दशाननो धन्वी । द्वारोत्तरया स बल स्तंवै = रामम् ॥ १२७३ ॥ निष्पत तो युद्धार्थं यदरेरभिपेतुरग्रतो थोल्काः । नेदुश्च शिवाः क्रूरं तंवै = रामम् ॥१२७४॥ रुधिरं ववर्षदेवश्चास्खलुरश्वाश्च यद्विषो मार्गे । कण्ठस्वरोप्य गच्छ त्वंवै = रामम् ॥१२७५॥ उत्पातानथ घोरानेतान्दृष्ट्वाप्यगात्समरधरणिम् । विजिगीषुर्यं द्वेषि तंवै = रामम् ॥१२७६॥ अय यद्वेषी विशिखैर्निशितैः प्लवगान्निकृत्तकरपादान् । छिन्नगळानपि चक्रे तंवै = रामम् ॥१२७७॥ केचिद्विभिन्न शिरसः केचित्पार्श्वेषु खण्डिताः प्लवगाः । पेतुस्समिति यदरिणा तंवै = रामम् ॥१२७८॥ इत्थं प्लवगानृक्षान्हत्वा कांश्चित्सविद्रुतान्कृत्वा । आसीदद्यं युद्धे तंवै = रामम् ॥१२७९॥ अथ यन्मित्रो भग्नान्दृष्ट्वा द्रवतः कपीन्त्रिरक्षुर्द्राक् । आज्ञापयत सुषेणं तंवै = रामम् ॥१२८०॥ रक्षैतानित्युक्त्वा प्रायात्कपिभिस्सहाद्रि विटपिकरैः । यन्मित्रोरिपुनिकटं तंवै = रामम् ॥१२८१॥ यन्मित्रेण क्षिप्तैर्गिरिभिस्तरुभिर्विभिन्नकटिकण्ठाः । क्रव्यादा भुवि पेतु स्तंवै = रामम् ॥१२८२॥ सैन्यं भग्नं निपतन्नि नदद्दृष्ट्वा क्रुधाविरूपाक्षः । यत्सुहृदमगाद्योद्धुं तंवै = रामम् ॥ १२८३ ॥ अथ यत्सुहृदं विशिखैर्गजकण्ठस्थो बिभेद सैन्ययुतम् । सविरूपाक्षोरणभुवि तंवै = रामम् ॥१२८४॥ तच्छरविद्धशरीरो यन्मित्रो

मुष्टिनाभिहत्यगजम् । तस्मै चिक्षेपशिलां तंवैराग्यप्रदं भजे रामम्
॥१२८५॥ सोपक्रम्यतदानीं खड्गे नाहत्यमूर्च्छितं चक्रे । रणभूमौ
यन्मितं तंवै = रामम् ॥१२८६॥ यत्सुहृदुत्थाय ततोऽसृक्पं तं
मुष्टिनाजघान तदा । वक्षसि पाषाणदृढे तंवै = रामम् ॥१२८७॥
अनभिहतो वञ्चनया स विरूपाक्षोऽथ मुष्टिनातस्य । स्वयमभि-
नद्यत्सुहृदं तंवै = रामम् ॥१२८८॥ अथ यन्मित्रेण तदा शंखे
भिहतः पपातविगतासुः । समरे स विरूपाक्ष स्तंवै = रामम्
॥१२८९॥ स्वबलं प्रक्षीणन्तद्दृष्ट्वा यद्विण्मनोव्यथां प्राप्य । गिर-
माह महोदरमथ तंवै = रामम् ॥१२९०॥ विजयाशास्तित्वयि
ममजहिशत्रुचमूंत्वमद्याशितविशिखैः । इति तमवादीद्यद्वि ट्तंवै =
रामम् ॥१२९१॥ इत्थं यद्वेष्युक्तः कदनं चक्रे प्रविश्य कपि
सैन्यम् । स महोदर आजि मुखे तंवै = रामम् ॥१२९२॥ अथ
कपि वीराविपुलाः प्रतिगृह्य शिलानिजघ्नुररि सैन्यम् । यत्सुहृ
दाज्ञां लब्ध्वा तंवै = रामम् ॥१२९३॥ नष्टं स्वबलं दृष्ट्वा यत्सु-
हृदाज्ञा वशंवदैः कपिभिः । क्रुद्धः स कपी नभिद त्तंवै = रामम्
॥१२९४॥ तेन हतां स्वचमूंतां दृष्ट्वा विपुलां शिलां करेधृत्वा ।
तमहन्यन्मित्रं द्रा क्तंवै = रामम् ॥१२९५॥ अथ यन्मित्रं दृष्ट्वा
छिन्नां शतधाशिलां तदाकुपितः । सालागेनाहं स्तं तंवै = रामम्
॥१२९६॥ दृष्ट्वा शरभग्नमगं भूमिस्थं परिघमाशु संगृह्य । यान्मि-
त्रहन्वाहां स्तंवै = रामम् ॥१२९७॥ अथ तत्प्रेरित गदया
परिघेभिन्ने प्रगृह्य मुसलं द्राक् । यत्सुहृदभिनच्च गदां तंवै = रामम्
॥१२९८॥ अथ तस्य करस्थमसिं चर्मविहीनं प्रगृह्य यन्मितम् ।
तस्य शिरोकृन्तद्रा क्तंवै = रामम् ॥१२९९॥ निहते महोदरे
युधियन्मित्र चमूं तदा महापार्श्वः । विशिखैरभिदन्निशितै स्तंवै =
रामम् ॥१३००॥ अरिशर भिन्नान्प्लवगान्वीक्ष्य क्रुद्धो गदोपि

यत्प्रेष्यः । परिघेणारिमहन्द्रा क्तंवैराग्यप्रदं भजे रामम् ॥१३०१॥
अथ भुवि पतितं स्वरथान्निस्संज्ञं तं निरिक्ष्य यत्प्रेष्यः । शिलया-
हत्रथवाहां स्तंवै = रामम् ॥१३०२॥ अथ लब्धप्राणोद्राग्य द्वि-
ट्प्रेष्यो जघान वालिसुतम् । ऋज्ञाविषमपि विशिखै स्तंवै = रामम्
॥१३०३॥ अथ जांबवद्गवाक्षा वरिशरभग्नौ निरीक्ष्य यत्प्रेष्यः ।
क्रुद्धोरिसमीपमगा त्तंवै = रामम् ॥१३०४॥ अथ तत्कर धृत
परिघं प्रोत्कृष्यहठात्करेण तं हृदये । तेनाहन्यत्प्रेष्य स्तंवै = रामम्
॥१३०५॥ यत्प्रेष्येणाभिहतः परिघेणारि स्समत्यजस्वधनुः ।
सशरं सशिरस्त्राणं तंवै = रामम् ॥१३०६॥ अथ यत्प्रेष्ये
*णारिर्गण्डेभिहतः परश्वधं क्रुद्धः । वालिसुतो रस्यमुचत्तं भजकैव-
ल्य दंमते रामम् ॥१३०७॥ लक्ष्याद्विनिवृत्यारेर्यत्प्रेष्यो मुष्ठिनात-
मभिहत्य । शमनगृहातिथिमकरो त्तंभजकै = रामम् ॥१३०८॥
तेषु हतेषु त्रिष्वपि यद्विट्क्रुद्धो जगादसूतं माम् । आनयमेद्राग्रथ-
मिति तंभज कै = रामम् ॥१३०९॥ रामा नोकहमाजौ सीता-
सुमफलदमाशु कपि शाखम् । छेत्तेत्यूचे यद्वि द्तंभज कै = रामम्
॥१३१०॥ इत्थं निनदन्प्रययौ रामं विजिगीषु राशुदशवदनः ।
यद्वेष्यारूढ रथ स्तंभज कै = रामम् ॥१३११॥ अथ यद्वेषी क्रुद्धो
घोरेणास्त्रेण तामसेन तदा । प्लवगानदहत्समरे तंभज कै = रामम्
॥१३१२॥ न हि तत्सोढुंशेकुर्धात्रानिर्मायदत्तमेतस्मै । यत्सुहृ
दाप्ताः कपय स्तंभज कै = रामम् ॥१३१३॥ अथ दशवदनोपश्यद्यं
तिष्ठन्तं गृहीत कोदण्डम् । समरमुखेनुजसहितं तंभज कै = रामम्
॥१३१४॥ आयान्तं दशवदनं भग्नान्प्लवगांश्च सानुजो दृष्ट्वा ।
यश्चापध्वनि मकरो त्तंभज कै = रामम् ॥१३१५॥ इच्छन्प्रथमं
योद्धुं तेन यदनुज श्शिलीमुखैर्निशितैः । अभ्यव धीत्प्रत्यंगं तंभज
= रामम् ॥१३१६॥ दशवदनस्तान्विशिखै स्स्वीयै र्निर्भिद्यलक्ष्मणं

त्यक्त्वा । आगाद्यं विजिगीषु स्तंभज कैवल्यदं मते रामम् ॥१३१७॥ अरिकरमुक्तान्विशिखान्निभिद्यशरै स्सहस्रधासमरे । तमहान्विविधशरैर्य स्तंभज कै=रामम् ॥१३१८॥ अथ दशकण्ठः क्रुद्धो यस्य ललाटे व्यमुञ्चदिषु पङ्क्तीः । निशितमुखाः पक्षयुता स्तंभज कै = रामम् ॥१३१९॥ अथ कोदण्डे मन्त्रान्प्रजपन्नोद्रं प्रयुज्ययोस्त्रमरेः । अभिनत्कवचमभेद्यं तंभज कै= रामम् ॥१३२०॥ अथ रथगतमरिमेनं विशिखैरभिदल्ललाट मध्यतले । यस्सर्वास्त्र विदाजौ तंभज = रामम् ॥१३२१॥ अस्त्रं घोरमथासुरमाशुगृहीत्वा दशाननः क्रुद्धः । व्यसृजद्यं प्रत्याजौ तंभज = रामम् ॥ १३२२ ॥ यद्देप्यस्त्रोद्भूतास्सिंहव्याघ्रादिजन्तु समवदनाः । परितः पेतुर्विशिखा स्तंभज = रामम् ॥१३२३॥ चन्द्रार्ध चन्द्रवक्त्राविद्युज्जिह्वोपमाश्शराः पेतुः । यद्देप्यस्त्रोत्पन्ना स्तंभज = रामम् ॥१३२४॥ ते विशिखा गगनतले विलयं जग्मुर्यदस्त्रसंछिन्नाः । धूळी भूतास्सर्वे तंभज=रामम् ॥१३२५॥ द्विगुणी कृतकोपोस्त्रं मय विहितं रौद्रमन्यदस्राक्षीत् । लक्षीकृत्यैव स यं तंभज=रामम्॥१३२६॥ मुद्गरशूल गदाशनिमुसलादीन्यायुधानि तज्जानि । यस्यपुरस्ताच्चेरु स्तंभज = रामम् ॥१३२७॥ गान्धर्वेणास्त्रेणाच्छित्ततदायोरिसृष्ट शस्त्राणि । पश्यति विंशति नयने तंभज = रामम् ॥१३२८॥ न प्राकंपत समरे दशभिर्विशिखैर्विरोधिकरमुक्तैः । विद्धोप्युरसिदृढेय स्तंभज = रामम् ॥१३२९॥ यस्मिन्विसृजति बाणानमितांच्छत्रौ क्रुधा तदावरजः । सप्त मुमोचशरान्द्रा क्तंभज = रामम् ॥१३३०॥ मानवशीर्ष मरिध्वजमच्छित्त स सूतचाप माशुरुषा । यदवरजस्समरमुखे तंभज = रामम् ॥१३३१॥ जलपूर्णा भ्रसमांश्चतुरश्चतुरस्तदारिरथवाहान् । यद्भक्तः क्रुद्धोहं स्तंभज = रामम् ॥१३३२॥ अथ दशवदनः क्रुद्धश्चिक्षेप महाशक्तिमार्तिदां शक्तिम् ।

यद्भक्तवधार्थं द्रा क्तंभज कैवल्यदं मते रामम् ॥१३३३॥ यत्सहजश्शक्तिं तामप्राप्तामेव संबिभेदशरैः । पश्यति विंशति नयने तंभज = रामम् ॥१३३४॥ यत्सहजेन विमोचितम् तं सहजं विसृज्य गिरमूचे । स कर धृते तरशक्ति स्तंभज कै = रामम् ॥१३३५॥ मयमाया विहितेयं शक्तिस्त्वदसून्प्रगृह्य निर्याति । इति तां यद्विड्जगृहे तंभज कै = रामम् ॥१३३६॥ घण्टालंकृतमूलां सशिता भ्रान्तां महास्वनां शक्तिम् । यत्सहजाय व्यसृज तंभज कै = रामम् ॥१३३७॥ मोघास्याच्छक्तिरियं भ्रातास्वान्मेऽरूगद्य दैवबलात् । इति देवान्योसेवत तंभज कै = रामम् ॥१३३८॥ अरिणामुक्ताशूरस्य भयस्य ममञ्जसस्वनाशक्तिः । यद्वरजस्या हि विषा तंभज कै = रामम् ॥१३३९॥ शक्त्या तं भिन्नहृदं विपतितं प्रेक्ष्य रक्तसिक्तांगम् । योभून्निर्विण्णमना स्तंभज कै = रामम् ॥ १३४० ॥ दुःखस्य न कालोयं त्विति मत्वारिं जिगीषु रथयुद्धम् । तु मुलं यो भृशमकरो तं कै = रामम् ॥१३४१॥ योनुज वक्षसि मग्नांशक्तिमथोत्कृष्य तस्य रक्षार्थे । उचे कपिपति भक्तौ तंभज कै = रामम् ॥१३४२॥ तिष्ठतमत्रयुवांद्वौ विक्रमकालो ममाद्य जागर्त । इति तौ योगिरमूचे तंभज कै = रामम् ॥१३४३॥ अद्यारावणमथवाऽरामं वा द्रक्ष्यथो युवां लोकम् । इति तौ योगिरमूचे तंभज कै = रामम् ॥१३४४॥ चक्षुर्विषयमिदानीं प्राप्यारिरयं न जीववान्गच्छेत् । इति तौ योगिरमूचे तंभज कै = रामम् ॥ १३४५ ॥ पश्यन्त्वमरास्सर्वे युद्धे रामस्यमद्य रामत्वम् । इति तौ योगिरमूचे तंभज कै = रामम् ॥१३४६॥ इत्युक्त्वा निशितमुखैर्विशिखै रभिदद्दशाननं समरे । योस्त्रविदांमून्यर्पदाम्मूर्धन्यः स्तंभज कै = रामम् ॥१३४७॥ नाराचै रथमुसलैर्य दशवदनो ववर्ष समरमुखे । जयमाकांक्षन्क्रुद्ध स्तंभज कै = रामम् ॥१३४८॥ अथ भीतो दशवदनो

यस्माद्रिशिखान्विमुञ्चतः क्रुद्धात्। अभ्यद्रवदाजि भुव स्तंभज कैव-
ल्यदं मते रामम् ॥१३४९॥ अपलायित शत्रुर्यश्शक्त्या भिहतं
निरीक्ष्य सहजमथो। आह सुषेणं वचनं तंभज कै = रामम् ॥१३५०॥
आपन्नः पञ्चत्वं यदि मम सहजः फलं किमिह धनुषा। इति तं
गिरमवदद्य स्तंभज कै = रामम् ॥१३५१॥ मम वीर्येण शरैर्वा
किं फलमस्मिन्दिवं गते सहजे। इति तं गिरमवदद्य स्तंभज कै =
रामम् ॥१३५२॥ मम चिन्ता च मुमूर्षा जायेते मे निरीक्ष्य
पतित ममुम्। इति तं गिरमवदद्य स्तंभज कै = रामम् ॥१३५३॥
युद्धे न प्राणैर्वा वैदेह्यावा फलं भवेन्मम किम्। इत्युच्चैररुदद्य
स्तंभज कै = रामम् ॥१३५४॥ देशे देशे भार्यास्सुहृदस्सुलभा
न चानुजोस्य समः। इत्युच्चैररुदद्य स्तंभज कै = रामम् ॥१३५५॥
*एवं विलपन्तं भुविपतितं शोकाकुलीकृतं साश्रुम्। यं गिरमाहसु-
षेण स्तंभज सीतापतिं मते रामम् ॥१३५६॥ नमृतोयं तव
सहजो नास्यमुखं विकृतमप्रभं चाभूत्। इत्याह सुषेणो यं तंभज
सी = रामम् ॥१३५७॥ सुप्रभमास्यं रक्तौ हस्ततलौ नेत्रयुग्म-
मप्यमलम्। इत्याह सुषेणो यं तंभज सी = रामम् ॥ १३५८ ॥
दीर्घायुस्तेऽवरजो नायं प्रेतस्त्य जाशु दुःखं त्वम्। इत्याह सुषेणो
यं तंभज सी = रामम् ॥१३५९॥ इत्युक्त्वा यं साभिषग्द्राग्घनु-
मन्तं जगादवाचमिमाम्। ओषध्या नयनार्त्थं तंभज सी = रामम्
॥ १३६० ॥ गत्वे तस्[illegible] जांववतोक्तास्समानयाशु[illegible]ः।
इत्याह स यद्भक्तं तंभज सी = रामम् ॥ १३६१ ॥ इत्युक्तो
यद्दूतो गत्वा गिरिमाशुतास्तदाऽज्ञात्वा। धृत्वागाद्गिरि शृंगं
तंभज सी = रामम् ॥१३६२॥ आनीयौषध्य द्रेश्शृंगं भूमौ
विनिक्षिपन्नूचे। भिषजं यद्भक्तो गां तंभज सी = रामम् ॥१३६३॥
ओषध्य दर्शनाद्राक्कृत्स्नं शृंगं बलान्मयानीतम्। इत्यवदद्यद्दूत

स्तंभज सीतापतिं मते रामम् ॥१३६४॥ इत्थं निगदन्तं यद्दूतं वाचाप्रशस्यससुषेणः । अकरोल्लक्ष्मणमरुज न्तंभज सी = रामम् ॥ १३६५ ॥ दृष्ट्वोत्थितमनुजं यस्स्नेहादालिङ्ग्य वाचमाह मुदा । दिष्ट्याऽद्राक्षं त्वामिति तंभज सी = रामम् ॥ १३६६ ॥ प्राणेनार्थो न हि मे वैदेह्या वामृतेत्वयीह गिरम् । यस्य श्रुत्वाह स गां तंभज सी = रामम् ॥ १३६७ ॥ इत्थं सत्यधृति स्त्वं वक्तुं नार्हस्य सत्य इव मनुजः । इति यमभाणीदनुज स्तंभज सी = रामम् ॥१३६८॥ अनुपालय सन्धां त्वं शत्रुवधेनाद्य मैथिली रमण । इति यमभाणीदनुज स्तंभज सी = रामम् ॥१३६९॥ इति गिरमथयश्श्रुत्वा धृत कोदण्डोऽनुजे न कथितां द्राक् । विशिखानरये व्यसृज त्तंभज सी = रामम् ॥१३७०॥ अथ रथसंस्थस्सोरिर्नि जघानशरैस्सुवर्णपुंखयुतैः । भूस्थं यं समरमुखे तंभज सी = रामम् ॥१३७१॥ असमं युद्धं दृष्ट्वा प्रेषयितुं स्वं रथं तदा शक्रः । ऐच्छद्यस्मैमुदित स्तंभज सी = रामम् ॥१३७२॥ मातलि रथशक्र गिरा रथसहितोयं प्रणम्य गिरमूचे । भवते रथमाहृतमिति तंभज सी = रामम् ॥१३७३॥ ऐन्द्रं कवचं चापं विशिखां स्त्वमरे र्जयाय गृह्णीष्व । इति मातलि रवदद्यं तंभज सी = रामम् ॥१३७४॥ ऐन्द्र्या शक्त्या च युतान्यायुध जालानि यः करेधृत्वा । आरुक्षद्रथमैन्द्रं तंभज सी = रामम् ॥१३७५॥ युद्धं तुमुलमथाभूद्दशवदने नाद्भुतं तदा यस्य । द्रष्टॄणामति भयदं तंभज सी = रामम् ॥१३७६॥ द्विण्मुक्तं गान्धर्वं गान्धर्वास्त्रेण योभिदच्छतधा । दैवन्देवेनाप्यथ तंभज सी = रामम् ॥१३७७॥ अस्त्रं परमं घोरं राक्षसमथ राक्षसाधिपोऽमुञ्चत् । सर्पविषं द्राग्यस्मै तंभज सी = रामम् ॥१३७८॥ आपततस्सर्पास्यां स्तीक्ष्णविषां स्तान्निरीक्ष्ययो विशिखान् । गारुडमस्त्रं व्यमुच त्तंभज सी = रामम् ॥१३७९॥

अथ यस्यास्त्रोद्भूता गरुडास्सर्पांश्च भक्षयाञ्चक्रुः। पश्यति युधि दशवदने तंभज सीतापतिं मते रामम् ॥१३८०॥ अथ कोपाद्दशवदनस्सन्ताड्यशरैर्यमाशु सूतमपि। केतुं वाजांश्चाहं स्तंभज सी= रामम् ॥१३८१॥ आर्तं यं दृष्ट्वादि विदेवास्सिद्धा महर्षयश्च भुवि। स कपिर्भक्तोऽखित्सत तंभज सी = रामम् ॥१३८२॥ ऋक्षं प्राजापत्यं तस्था वाक्रम्य रोहिणीञ्च बुधः। यस्यार्त्युद्धव काले तंभज सी = रामम् ॥१३८३॥ सूर्योऽदृश्यत गगने संसक्तो धूमकेतुना मलिनः। यस्यार्त्युद्धवकाले तभज सी=रामम् ॥१३८४॥ ऋक्षमपि कोसलानां तस्था वाक्रम्य भूसुतो गगने। यस्यार्त्युद्धव काले तंभज सी = रामम् ॥१३८५॥ अरिणा निरस्यमानो नाशक्रोद्यश्शरान्करे धृत्वा। अभि सन्धातुं रणभुवि तंभज सी = रामम् ॥१३८६॥ अथ यं क्रुद्धं दृष्ट्वा चोत्पातान्भीकरां स्तदा दृष्ट्वा। भीतो दशवदनो भू त्तंभज सी = रामम् ॥१३८७॥ देवा महर्षयोपित्वं जयरामे त्यवादिषुः प्रेम्णा। यं युध्यन्तं दृष्ट्वा तंभज सी = रामम् ॥१३८८॥ अथ दशवदनो यद्विट्छूलं जग्राह शत्रुमर्मस्पृक्। मृत्योरपि दुष्प्रसहं तंभज सी = रामम् ॥१३८९॥ शूलमिदं वज्रदृढं स भ्रातुस्ते हरिष्यति प्राणान्। तिष्ठेत्यवदद्यमरिस्तंभज सी = रामम् ॥१३९०॥ निहतानां यातूनां तृप्तिं कुर्वेहमद्य हत्वा त्वाम्। इति यं गिरमाह द्वि ट्तंभज सी = रामम् ॥१३९१॥ इत्युक्त्वा तच्छूलं प्रयुयोज तदाष्टघण्टममरारिः। यं लक्षीकृत्याजौ तंभज सी = रामम् ॥१३९२॥ यस्त्व विसृष्टान्विशिखान्भस्मी भूतान्निरीक्ष्यमय शक्त्या। प्रयुयोजैन्द्रीं शक्तिं तंभज सी = रामम् ॥१३९३॥ अथ साप्रहिताशक्तिर्गतम् लाग्रं विभिद्य-तच्छूलम्। पुनरगमद्यद्धस्तं तंभज सी = रामम् ॥१३९४॥ अथ विशिखैर्वज्रनिभैरभिदत्तं द्वेषिणं तदा हृदये। निटिले चातिदृढय

स्तंभज सीतापतिं मते रामम् ॥१३९५॥ अथ यद्विशिखाभिहतो रुधिरार्द्रतनुर्दशानन स्समरे । प्रापत्खेदक्रोधौ तंभज सी = रामम् ॥१३९६॥ अथ धनुरायम्य महद्विशिखान्सबहून्प्रयुज्य दशवक्त्रः । यमभिववर्षाजिमुखे तंभज सी = रामम् ॥१३९७॥ अथ योयद्विड-पिद्वावन्योन्यं बहुभिराशुगैर्विद्धौ । रुरुचाते रक्तांगौ तंभज सी = रामम् ॥१३९८॥ अथ दशवदनं प्रहसन्पर भार्याहरणतस्त्वमति शूरः । इत्यभणीद्यस्समरे स्तंभज सी = रामम् ॥१३९९॥ कृत्वा-त्वं कापौरुषकर्माहं शूर इति कथं वदसि । इत्यरिमभणीद्युधिय स्तंभज सी = रामम् ॥१४००॥ निर्लज्जाद्य प्राप्नु हि फलमिह दुष्कर्मणस्त्वमाशु मृतिम् । इत्यरिमभणीद्युधिय स्तंभज सी = रामम् ॥१४०१॥ दिष्ट्यामम दुष्टात्मं श्रक्षुर्विषयं गतोसि मृत्यर्थम् । इत्यरिम भणीद्युधिय स्तंभज सी = रामम् ॥१४०२॥ अद्यमम विशिखभिन्ना दुरसस्तवरक्तमापि बन्तुशिवाः । इत्यरिम भणीद्यु-धिय स्तंभज सी = रामम् ॥१४०३॥ अद्यगतासोस्तवयुधि मां-सान्युरसः प्रभक्षयन्तु खगाः । इत्यरिमभणीद्युधिय स्तंभज सी = रामम् ॥१४०४॥ इति योवाचं प्रवदन्निकटस्थमरिं ववर्ष विशि-खचयान् । द्विगुणीकृतशौर्योय स्तंभज सी = रामम् ॥१४०५॥ ज्ञात्वा चिह्नानि शुभान्यात्मगतानि प्रमोदवांच्छत्रुम् । योर्दयदाजौ-विशिखैस्तस्यमुखाब्जं स्मरामि रामस्य ॥१४०६॥ यद्विशिखैः कपिमुख्यै स्तरुभिर्गिरिभिश्च हन्यमानोरिः । सो भूत्संभ्रान्त मना-स्तस्य मु = रामस्य ॥१४०७॥ यदमित्रस्तदवस्थः प्रेक्ष्याजि मुखान्निवर्त्तमानरथम् । सूतं गिरमाह सरु ट्तस्य मु = रामस्य ॥१४०८॥ भीरुं लघुमिव मत्वामां दुर्बुद्धे विचेष्टसे स्वधिया । इत्यक्रुध्य द्यद्वि ट्तस्य मु = रामस्य ॥१४०९॥ त्वामह मरिणो-पस्कृतामिव मनसा वेद्मि दुर्मते सूत । इत्यक्रुध्य द्यद्वि ट्तस्य मु =

रामस्य ॥१४१०॥ यावन्नोपैतिरिपुर्योद्धुं तावन्निवर्तयाशु रथम् । इति तं यद्विडवोचत्त स्यमुखाब्जं स्मरामि रामस्य ॥१४११॥ इत्युक्तो रथयन्ता नाहं भीतो हितं करोवारेः । इति सयदरिमाह गिरं तस्यमु = रामस्य ॥ १४१२ ॥ ज्ञात्वा श्रममिह भवतो नीतोद्यमया रथोऽपरत्रद्राक् । इति यद्विषमाह स गां तस्य मु = रामस्य ॥१४१३॥ रथवहनश्रमयुक्तान्वाजीनुद्वीक्ष्य कार्यमिदमकृषि । इति यद्विषमाह सगां तस्य मु = रामस्य ॥१४१४॥ अथ यद्वेषी सूतं संमान्यगिरं तदाऽऽह मम च रथम् । रामाभिमुखं कुर्विति तस्य मु = रामस्य ॥१४१५॥ नाह त्वाऽऽजौ रामं लंकामेष्यामि रावणस्सोहम् । इति तमभाणीद्यं गां तस्य मु = रामस्य ॥१४१६॥ अथ युद्धपरिश्रान्तं चिन्ताविष्टं दशाननस्य पुरः । यमगस्त्यो गिरमभणी त्तस्य मु = रामस्य ॥१४१७॥ राम महाबाहो शृणु मम वचनं त्वं दशास्य हननाय । इति यमृषिर्गिरमवद त्तस्य मु = रामस्य ॥१४१८॥ आदित्यहृदय नामकमन्त्रं जपतान्मयो पदिष्टस्त्वम् । इति यमृषिर्गिरमवद त्तस्य मु = रामस्य ॥१४१९॥ चिन्ता शोक प्रशमनमायुर्वृद्धि प्रदन्तमद्यजप । इति यमृषिर्गिरमवद त्तस्य मु = रामस्य ॥१४२०॥ शत्रुविनाशनपूर्वं युधिजयदन्तं जपाद्य मंगळदम् । इति यमृषिर्गिरमवदी त्तस्य मु = रामस्य ॥१४२१॥ ब्रह्माविष्णुश्च शिवस्सर्वात्मक एष सूर्य इति भजतम् । इत्युपदिदिशे यस्मै तस्य मु = रामस्य ॥१४२२॥ पितरो वसवस्साध्या मरुतो मनुरेष सूर्य इति भजतम् । इत्युपादिदिशे यस्मै तस्य मु = रामस्य ॥१४२३॥ सीदति न नरः कोपि च कृच्छ्रेष्वापत्स्विदं पठन्स्तोत्रम् । इत्युपदिदिशे यस्मै तस्य मु = रामस्य ॥१४२४॥ इत्याद्युपदिश्यमुनिर्यस्मै प्रययौ यथागतं तुष्टः । अरिविजिगीषव आजौ तस्य मु = रामस्य ॥१४२५॥ गतवति लो-

पामुद्रा रमणे स्वस्थानमाशुयस्त्रिपः। प्राश्याभूच्छुद्धमना स्तस्य मुखाब्जं स्मरामि रामस्य ॥ १४२६ ॥ त्रिगुणितमथजप्त्वै तं धृत धैर्योयोगृहीत कोदण्डः। अरिवधकृतयत्नो भू त्तस्य मु = रामस्य ॥१४२७॥ अथ रविरवदत्तुष्टस्तोत्रेणानेन देवमध्यगतः। यमरिवधं कुर्वाश्विति तस्य मु = रामस्य ॥१४२८॥ अथ दशवदनस्य रथं सारथ्यानीतमर्व संपन्नम्। यो नरराजोपश्य त्तस्य मु = रामस्य ॥१४२९॥ अथ बालेन्दुनतंध-राकृष्योवाचमातालं गांयः। पश्यत्व मरिन्द्रागिति तस्य मु = रामस्य ॥१४३०॥ समरायायान्तमरिं संप्रेक्ष्यत्वं विनाप्रमादेन। तिष्ठत्यभणत्तं यस्तस्य मु = रामस्य ॥१४३१॥ अद्ययुयुत्सुरहन्ते स्मारयिताहं न शिक्षयेकामम्। इति मातलिमभणीद्य स्तस्य मु = रामस्य ॥१४३२॥ अथ सन्तुष्टो मातलिरप सव्यमरे रथं तदा कुर्वन्। यद्रथमभिमुखमकरो त्तस्य मु = रामस्य ॥१४३३॥ क्रुद्धस्ततो दशास्योऽभिमुखस्थं यन्निरीक्ष्य धृत चापः। विशिखैर्निशितैरभिद त्तस्य मु = रामस्य ॥१४३४॥ अथ धृत शतमुख चापो योहस्करघृष्टि सन्निभान्विशिखान्। प्रयुयोज दशास्यो परि तस्य मु = रामस्य ॥१४३५॥ यद्विट्स्यन्दनमध्ये रुधिरं देवोववर्ष पर्जन्यः। पांसून्ववृषुर्वाता स्तस्य मु = रामस्य ॥१४३६॥ यद्विट्स्यन्दनशिखरे पेतुर्गृध्राभयंकराश्शतशः। मुमुचुर्बाष्पाण्यश्वा स्तस्य मु = रामस्य ॥१४३७॥ एवं बहवो भूवन्नुत्पातायद्विषोथमरणाय। स्यन्दननिस्सृति समये तस्य मु = रामस्य ॥१४३८॥ स्वस्य निमित्तानि शुभान्य शुभानि च तान्यरेस्समुद्वीक्ष्य। मेनेयोरिं निहतं तस्य मु = रामस्य ॥१४३९॥ यस्य च यदरेश्च तदा द्वैरथमासीद्भयंकरं युद्धम्। रक्षः कपि विस्मयदं तस्य मु = रामस्य ॥१४४०॥ ज्येष्याम्यह मरिमितियोमर्तव्यं द्राङ्मयेति यद्द्वेषी। अन्योन्यमयुत्साता

तस्य मु = रामस्य ॥१४४१॥ यद्रथमुद्दिश्यारि प्रहिता विशिखाः प्रपेतु राजि भुवि। कुण्ठीकृत मुखभागा स्तस्य मुखाब्जं स्मरामि रामस्य ॥१४४२॥ येनविसृष्टो विशिखो दशवदनरथस्य केतुमथभङ्क्त्वा। प्राविक्षत्पुनरिषुधिं तस्य मु= रामस्य ॥१४४३॥ दृष्ट्वो न्मथनं केतोस्स्वस्यदशास्योरुषाशरानमितान्। यद्वाज्यंगेष्वकिर त्तस्य मु = रामस्य ॥१४४४॥ अस्खलितान्भ्रमरहिता नश्वा न्दृष्ट्वा दशाननो यद्विट्। पुनरकिरद्विशिखै स्तां स्तस्य मु = रामस्य ॥१४४५॥ यद्वि ट्प्रहिता दस्त्रा न्मायाविहिताद्बभूवु रथविशिखाः। तरु गिरिपरिघासि मुखा स्तस्य मु = रामस्य ॥१४४६॥ यत्स्यन्दनमथमुक्त्वा विशिखैः प्लवगान्सहस्रशोबिभिदे। अश्रान्तोद्यमहृदय स्तस्य मु = रामस्य ॥१४४७॥ अनिमित्तानपृषत्कानाभेत्तारो न निष्फला *अपिते। यद्यद्वेषिप्रहिता स्तस्य पदाब्जं भजामि रामस्य ॥१४४८॥ एवं यद्यदमित्रौ संक्रुद्धौ तौ प्रचक्रतुर्युद्धम्। अद्भुतमसमंतुमुलं तस्य प = रामस्य ॥१४४९॥ यद्यदमित्रावाजावन्योन्यंतौ शरैः प्रलिप्त विषैः। जघ्नतुरथरथवाहांस्तस्य प = रामस्य ॥१४५०॥ चतुरश्च तुरोपि हयान्यःप्रत्यानेष्ट युधितदाशत्रोः। विशिखैरेव चतुर्भि स्तस्य प = रामस्य ॥१४५१॥ अपसर्पणेहयानां यस्मिन्क्रोधान्मुमोच स च विशिखान्। विषदिग्धाग्रान्समरे तस्य प = रामस्य ॥१४५२॥ अव्यथमविकारं यं दृष्ट्वा रोषादशाननोविशिखान्। अमुचन्मातल्यं गे तस्य प = रामस्य ॥१४५३॥ यद्विट्प्रहिता विशिखाश्शतमख सूतस्य नव्यथां चक्रुः। युधि बुद्धिभ्रमणं वा तस्य प = रामस्य ॥१४५४॥ अथ विमुखमपि दशास्यं विशिखै रभिदत्सहस्रशः कुपितः। युधियः करधृत चाप स्तस्य प=रामस्य ॥१४५५॥ दशवदनोपि क्रुद्धो मुसल गदापरिघ पट्ट स प्रमुखैः। अभ्यर्दयदाजौ यं तस्य प = रामस्य ॥१४५६॥ यद्यद्विड्युधि

तु मुले जाते देवामहर्षयोप्यन्ये। अभवं श्चिन्ता विष्टा स्तस्य पदाब्जं भजामि रामस्य ॥१४५७॥ यद्यदरा त्योर्युद्धं यद्यदरा त्योरिवेति जल्पन्त्यः। ददृशुर्देवाप्सरस स्तस्य प = रामस्य ॥१४५८॥ व्योमसमं व्योमस्यान्नान्यद्भवती त्युदीर्यददृशुस्ताः। यद्यदरा त्योर्युद्धं तस्य प = रामस्य ॥१४५९॥ क्रुद्धोथमहाबाहुर्विशिखे नारेश्च कर्तमुखमेकम्। कुण्डलशोभिद्राग्य स्तस्य प = रामस्य ॥१४६०॥ भूमौ पतित शिरस्सम मन्यद्यद्वेपिणश्शिरस्समभूत्। पश्यत्स्वखिल जनेष्वपि तस्य प = रामस्य ॥१४६१॥ जातं पुनर्द्वितीयं विशिखेनाच्छित्तयो युधि क्रुद्धः। पश्यत्स्वखिलप्राणिषु तस्य प = रामस्य ॥१४६२॥ पुनरप्यन्यदभूत्त त्सदृशं मुखमाशुयद्द्विषो युद्धे। तदपि च योच्छित्त द्रा क्तस्य प = रामस्य ॥१४६३॥ एकोत्तर शतमेवं छिन्नं शिरसां च येन रुष्टेन। नममारचयद्वेषी तस्य प = रामस्य ॥१४६४॥ येन खराद्या दुष्टानिहतास्सशरोद्य निष्फलो भवति। इति यो चिन्तयदाजौ तस्य प = रामस्य ॥१४६५॥ येन विराधकबन्ध प्रमुखानिहतास्सनिष्फलो विशिखः। इति चिन्तामगमद्य त्तस्य प = रामस्य ॥१४६६॥ यो वालि प्राणहरस्सशरो विफलो दशानन-स्य कृते। इति यश्चिन्तां प्राप त्तस्य प = रामस्य ॥१४६७॥ अथ दशवदनः क्रुद्धो मुसलगदापाणि रर्दयन्समरे। चिन्ताक्रान्त धियं यं तस्य प = रामस्य ॥१४६८॥ नाहो रात्रमुहूर्त क्षणिके-ष्वपि युद्धशान्तिरुदभून्नो। यद्यदरात्यो स्समयो स्तस्य प = रामस्य ॥१४६९॥ अथ दशरथसूनुं यं सुरवर रथसारथि स्समुद्वीक्ष्य। वाचमवोचदनीचां तस्य प = रामस्य ॥१४७०॥ वीरत्वमजानन्निव तुच्छस्य वधेस्य किं पुनर्भ्रमसि। इति मातलिरवदद्यं तस्य प = रामस्य ॥१४७१॥ विसृज वधायास्मै त्वं पैतामहमस्त्रमाशु समय इति। सूतोऽस्मारयदथयं तस्य प = रामस्य ॥१४७२॥

अथ योऽस्त्रं वैधात्रं कलशभुवादत्तमग्रहीद्धस्ते। वज्रदृढं दृढहृदय स्तस्य पदाब्जं भजामि रामस्य ॥१४७३॥ अभिमन्त्र्य तदस्त्रं योऽथ वेदप्रोक्तेन सन्दधे विधिना। स्वीये कोदण्डे द्रा क्तस्य प = रामस्य ॥१४७४॥ अक्षेप्सीदथ चास्त्रं यो धनुरायम्य कर्णपर्यन्तम्। दशवदनो रसि सुदृढे तस्य प = रामस्य ॥१४७५॥ यत्कोदण्डादस्त्रं निर्गम्यतदा विभिद्य वक्षोऽरेः। हृत्वासून्क्ष्मामविश त्तस्य प = रामस्य ॥१४७६॥ कृतकर्मास्त्रं ब्राह्मं यत्तूणीरं विवेश शरपूर्णम्। पश्यत्सुजनेषु तदा तस्य प = रामस्य ॥ १४७७ ॥ यद्विड्ब्रह्मास्त्रहतो न्यपतद्भूम्यां मतासुरथसशरम्। चापं त्यक्त्वा स्वरथा त्तस्य प = रामस्य ॥१४७८॥ यद्वेषिण मथनिहतं दृष्ट्वा शिष्टा निशाचराः परितः। भीतादुद्रुवुरचिरा त्तस्य प = रामस्य ॥१४७९॥ यच्छस्त्र हतं शत्रुं दृष्ट्वा कपयस्तदा विनर्दन्तः। जघ्नुस्तरुभिरसृक्पां स्तस्य प = रामस्य ॥१४८०॥ गगने दिविषद्दुन्दुभि राशुन्य नदद्ववौ सुखं वायुः। येन हते दशवदने तस्य प = रामस्य ॥१४८१॥ आशिष मृषयस्तुष्टा यस्मै जितशत्रवे तदा पेठुः। वेदोक्तामभियुक्ता स्तस्य प = रामस्य ॥१४८२॥ यस्य जयं द्वेषि वधं दृष्ट्वा देवामहर्षयो नागाः। बभ्रुर्मुदमतिवेलं तस्य प = रामस्य ॥१४८३॥ ऊहुस्तोषमपारं सुग्रीवविभीषणौ च कपयोऽन्ये। यस्मिन्हत दशवदने तस्य प = रामस्य ॥१४८४॥ यो विरराज तदानीं सहज सुहृद्भक्त सेवकैर्जुष्टः। धृत कोण्डस्तुष्ट स्तस्य प = रामस्य ॥१४८५॥ विगतासुं भुविपतितं यन्निर्जितमाशु चक्षुषा वीक्ष्य। विललापशुचा सहज स्तस्य प = रामस्य ॥१४८६॥ प्राप्तं तदिदं पूर्वं कथितं सहजेन यन्मयाभ्रातः। इति यद्भक्तो रोदी त्तस्य प = रामस्य ॥१४८७॥ इन्द्रजिदाद्यां श्छूरान्निहतान्दृष्ट्वापि तेन धीरुदभूत्। इति यद्भक्तो रोदी त्तस्य प = रामस्य ॥१४८८॥

सहजं घट कर्ण त्वं धिक्कृत्ये मां गतोसि दुरवस्थाम्। इति यद्भक्तो रोदी तस्य पदाब्जं भजामि रामस्य ॥१४८९॥ मम वचनं सुखदं त्वं त्यक्त्वा विपदं गतोस्य हो भ्रातः। इति यद्भक्तो रोदी तस्य प = रामस्य ॥१४९०॥ इति विलपन्तं भक्तं शोकाक्रान्तं विभीषणं प्रेक्ष्य। यो वाचं प्राह हितां तस्य प = रामस्य ॥१४९१॥ नैकान्त जयोयुद्धे दृष्टः केनापि भूतपूर्वोस्ति। इत्यभणीद्यो भक्तं तस्य प = रामस्य ॥१४९२॥ हन्ति परान्वाशूरस्समरे स परैर्निहन्यतेवापि। इत्यभणीद्यो भक्तं तस्य प = रामस्य ॥ १४९३ ॥ भुविमरणान्तं वैरंनिर्वृत्तं नः प्रयोजनं त्वासीत्। इत्यभणीद्यो भक्तं तस्य प = रामस्य ॥१४९४॥ कृत्यं प्रेतस्य त्वं ज्येष्ठ भ्रातुः कुरुष्वशास्त्रोक्तम्। इति भक्तं यो भाणी तस्य प = रामस्य ॥१४९५॥ हुत हव्य वहस्य त्वं ज्येष्ठस्य कुरुष्व कर्म वेदोक्तम्। इति भक्तं यो भाणी तस्य प = रामस्य ॥१४९६॥ संस्कारोस्य क्रियतामेष यथाते ममापि भवति तथा। इति भक्तं यो भाणी तस्य प = रामस्य ॥१४९७॥ अथ यद्विषमाजि हतं श्रुत्वा नार्यो विनिर्ययुर्नगरात्। अन्तःपुरवासिन्य स्तस्य प = रामस्य ॥१४९८॥ मुक्तकचादुःखार्तः क्रोशन्त्यो नाथकुलवससीति। यद्विट्कान्तारुरुदुस्तस्य प = रामस्य ॥१४९९॥ द्वारोत्तरयागत्य प्रंविचिन्वन्त्यः पतिं यदरिमचिरात्। ददृशुस्ता भुविपतितं तस्य प = रामस्य ॥१५००॥ तं दृष्ट्वा परिपेतुर्जठरेशीर्षे च ताडयन्त्यस्ताः। यद्विड्भार्या रणभुवि तस्य प = रामस्य ॥ १५०१ ॥ यदरेश्चरणौ काचित्कण्ठं काचिद्भुजौ च काचित्स्त्री। अवलम्ब्यो चैररुद तस्य प = रामस्य ॥१५०२॥ काचिद्यदरेर्वदने स्वमुखं निक्षिप्य बाष्पपूर्णाक्षी। कामेगतिरित्यरुद तस्य प = रामस्य ॥ १५०३ ॥ वित्रासित दिक्पालस्त्वं वैश्रवणात्त पुष्पको येन। निहतो सीत्यरुदंस्ता

स्तस्य पदाब्जं भजामि रामस्य ॥१५०४॥ मरणायेयं सीताऽऽनी-
ताऽरण्या त्वयेति रुरुदुस्ताः। यद्विड्भार्या रणभुवि तस्य प = रामस्य
॥१५०५॥ इत्थं विलपन्तीनां तासां मन्दोदरी तदाऽरोदीत्।
यदरेर्महिषी ज्येष्ठा तस्य प = रामस्य ॥१५०६॥ आक्रम्य
त्रैलोक्यं नाथकथं त्वं रणे नरेणजितः। इति यद्विट्पत्न्य रुद
त्तस्य = रामस्य ॥१५०७॥ खरनिधनं श्रुत्वाते रामे नरधीः
* कथन्वभून्नाथ। इति यद्विट्पत्न्य रुद त्तस्य कृपां प्रार्थयामि रामस्य
॥१५०८॥ लंकायां हनुमन्तं दृष्ट्वा नरधीः कथन्वभूद्रामे। इति
यद्विट्पत्न्य रुद त्तस्य कृ = रामस्य ॥१५०९॥ रामाकारेण
यमस्समजायतते वधं चिकीर्षद्रोक् । इति यद्विट्पत्न्य रुद त्तस्य कृ
= रामस्य ॥१५१०॥ तवरामेण विरोधो मास्त्वित्युक्तो मयासि-
पूर्वं त्वम्। इति यद्विट्पत्न्य रुद त्तस्य कृ = रामस्य ॥१५११॥
एष महायोगीशस्तेन विरोधोन कार्य इत्यवदम्। इति यद्विट्पत्न्य
रुद त्तस्य कृ = रामस्य ॥१५१२॥ तमसो महतश्च परो रामो
सावित्यवादिषं तेहम्। इति यद्विट्पत्न्य रुद त्तस्य कृ = रामस्य
॥१५१३॥ साक्षाद्विष्णू रामस्तेन विरोधो न कार्य इत्यवदम्।
इति यद्विट्पत्न्य रुद त्तस्य कृ = रामस्य ॥१५१४॥ सृष्टि
स्थिति हननेषु प्रभुरयमितिमद्गिरं त्वमत्याक्षीः। इति यद्विट्पत्न्य रुद
त्तस्य कृ = रामस्य ॥१५१५॥ दुष्टानां संहृतये रामोऽविक्षद्वनं
तदित्य वदम्। इति यद्विट्पत्न्य रुद त्तस्य कृ = रामस्य ॥१५१६॥
तन्महिषीं तस्मै त्वं देहि विधाय प्रणाममित्यवदम्। इति यद्विड्पत्न्य
रुदत्तस्य कृ = रामस्म ॥१५१७॥ तस्याः पतिव्रतायास्तप साद
ग्धो सिमेप्रभोकान्त। इति यदमित्रस्त्र्य रुद त्तस्य कृ = रामस्य
॥१५१८॥ लभते जन्तुरवश्यं स्वकृतस्य हि कर्मणः फलं समये।
इति यदमित्रस्त्र्य रुद त्तस्य कृ = रामस्य ॥१५१९॥ प्रापत्सुख-

मनुजस्ते प्रापस्त्वं कष्टमीदृगपिनाथ। इति यदमित्रस्त्र्य रुद् त्तस्य कृपां प्रार्थयामि रामस्य ॥१५२०॥ न मयासदृशी सीता कुलशीलवयस्सुरूप दाक्षिण्यैः। इति यदमित्रस्त्र्य रुद् त्तस्य कृ=रामस्य ॥१५२१॥ अज्ञाना त्त्वं मोहादन्यामिच्छंत्स्त्रियं मृतिं प्रापः। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५२२॥ हाराजन्मां विधवां कृत्वा त्यक्त्वा गतोसिकं लोकम्। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५२३॥ राक्षसराजोनाथो दानवराजः पितेति गर्वोगात्। इति यदमित्रस्त्र्य रुद् त्तस्य कृ=रामस्य ॥१५२४॥ सुकुमारस्तवदेहो विशिखैर्व्याप्तो न शक्यते स्प्रष्टुम्। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५२५॥ मृत्योरपि मृत्युस्त्वं मृत्योर्वशगः कथं त्वभूर्वदमे। इति यदमित्रस्त्र्य रुद्त्तस्य कृ = रामस्य ॥१५२६॥ नाथविहीना नाहं वस्तुमिहेच्छाम्यतस्त्वयाऽऽयामि। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५२७॥ विजित त्रैलोक्यस्त्वं नारी चौर्यं वधायकथमकरोः। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५२८॥ कुंभश्रोत्र विभीषण मारीचानां हितं वचोऽत्याक्षीः। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५२९॥ धिगिदं मम दुर्हृदयं त्वयि युधिनिहतेपि दार्ढ्ययुक्तमहो। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५३०॥ त्यक्त पितृरमणसुतया न मयादुःखं च पार्यते सोढुम्। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५३१॥ लंकां प्रविशन्ति करास्तीक्ष्णा स्सूर्यस्य निर्भयस्याद्य। इति यदमित्रस्त्र्य रुद् त्तस्य कृ = रामस्य ॥१५३२॥ इत्याक्रोशन्तीन्तामपराश्च तदानिरीक्ष्य विलपन्तीः। यो भक्तं गिरमूचे तस्य कृ = रामस्य ॥१५३३॥ अद्य विभीषण नारी रेतानीत्वा परत्रकुरुकृत्यम्। ज्येष्ठस्ये त्यवदद्य स्तस्य कृ = रामस्य ॥१५३४॥ इत्युक्तो थस

भक्तो बुद्ध्या सम्यग्विमृश्य गिरमूचे । यमरिध्वंस न चतुरं तस्य कृपां प्रार्थयामि रामस्य ॥१५३५॥ नेमं संस्कुर्वेहं न हि ममपरदार चौर्य कृद्भ्राता । इत्यमणद्यं भक्त स्तस्य कृ = रमास्य ॥१५३६॥ तच्छ्रुत्वा धर्म भृतां श्रेष्ठोऽवादी द्विभीषणं वचनम् । उपकार विधिज्ञोथ स्तस्य कृ = रामस्य ॥१५३७॥ वैरंभुविमरणान्तं निवृत्तं नः फलञ्च विजयोद्य । इत्यवदद्यो भक्तं तस्य कृ = रामस्य ॥१५३८॥ कुरु कृत्यं शीघ्रं त्वं शास्त्रीयं तस्य यायजूकस्य । इत्यवदद्यो भक्तं तस्य कृ = रामस्य ॥१५३९॥ त्वत्तोयं विध्युक्तं संस्कारं प्राप्तुमर्हति ज्येष्ठः । इत्यवदद्यो भक्तं तस्य कृ = रामस्य ॥१५४०॥ श्रुत्वा यद्वचनं द्राक्चन्दन काष्ठैश्चितां स निर्माय । संस्कृति मकरोद्भ्रातु स्तस्य कृ = रामस्य ॥१५४१॥ अंघ्र्योश्शकट मुलूखल मूर्वोरन्तश्च दारुपात्रादि । अक्षै प्सीधद्भक्तः तस्य कृ = रामस्य ॥१५४२॥ यद्भक्ते नाज्ञप्ताहत्वामेध्यं पशुं तदाऽसृक्पाः । राट्प्रतिमामथ चक्रु स्तस्य कृ = रामस्य ॥ १५४३ ॥ गन्धैर्माल्यैर्वस्त्रैश्चक्रुः प्रतिमामलंकृतां राज्ञः । यद्भक्तानुचरा द्रा क्तस्य कृ = रामस्य ॥१५४४॥ स्नात्वा नैवापंते कृत्वायद्भक्त संयुतास्सलिलम् । स्त्रीभिर्लंकां विविशु स्तस्य कृ = रामस्य ॥१५४५॥ अन्तःपुरनारीणा मुक्त्वा सान्त्वं विभीषणोवाक्यम् । यस्य समीपं प्राप त्तस्य कृ = रामस्य ॥१५४६॥ यस्सानुज सुग्रीवः कपि सैन्ययुतो जितारिरथ तोषम् । भेजे परदुरवापं तस्य कृ = रामस्य ॥१५४७॥ अथ येनानुज्ञातो रथमारुह्यामरावतीं प्रापत् । मातलि रिन्द्रस्यपुरीं तस्य कृ = रामस्य ॥१५४८॥ लंकायामभिषिक्तं कुरु भक्तं त्वं विभीषणं भ्रातः । इत्यनुजं यो भाणी त्तस्य कृ = रामस्य ॥१५४९॥ इत्युक्तो यद्भ्राता कपिभिर्जलधे स्समाहृतै स्तीर्थैः । अभ्यषि चत्तं तुष्ट स्तस्य कृ = रामस्य ॥१५५०॥ लंकायां राजानं

सर्वेषां रक्षसां तदा चक्रे । यद्भक्तं सौमित्रि स्तस्य कृपां प्रार्थयामि
रामस्य ॥१५५१॥ अभिषिक्तोथसराज्यं प्राप्य प्रकृतीश्च सान्त्व-
* यित्वा द्राक् । आगाद्यत्पद स विधं तस्य भजे दिव्यनाम
रामस्य ॥१५५२॥ अथ संहृष्टाः पौराः पुष्पाक्षतगन्धलाजभक्ष्य-
कराः । ददृशुस्तं यत्सविधे तस्य भ = रामस्य ॥१५५३॥ अथ
पौरै रानीता द्रागुपदावीक्ष्यरक्षसां नाथः । यस्यास्थापयदग्रे तस्य
भ = रामस्य ॥१५५४॥ भक्तप्रियकरणे च्छुर्भ्रात्रासहित स्तदो-
पदास्सर्वाः । यो जग्राह कराभ्यां तस्य भ = रामस्य ॥१५५५॥
अथ हनुमन्तं दूतं वाचं प्रोचे विभीषणे न युतम् । भक्तपराधीनोय
स्तस्य भ = रामस्य ॥१५५६॥ भक्तयुतस्त्वं लंकां गत्वा विजयं
वदाद्य जानक्यै । इत्यवदद्दूतं य स्तस्य भ = रामस्य ॥१५५७॥
प्रतिगृह्य च सन्देशं तस्यामह्यं प्रवक्तुमागच्छ । इत्यवदद्दूतं य
स्तस्य भ = रामस्य ॥१५५८॥ अथ लंकां द्राग्गत्वा मृजयाही-
नां ददर्श वैदेहीम् । यद्दूतस्तरुमूले तस्य भ = रामस्य ॥१५५९॥
अथ तत्पद स विधं द्रागभिगम्य मुदाप्रणम्य यद्दूतः । विहिता-
ञ्जलिरवदद्वां तस्य भ = रामस्य ॥१५६०॥ कीशपलाशप्रभुवर
कृत साह्यस्ते पतिर्जितारिरभूत् । इति यत्स्त्रियमाह कपि स्तस्य भ =
रामस्य ॥१५६१॥ कपटादपहृत्यत्वां फलमनुभूतो वधो दशास्येन ।
इति यत्स्त्रियमाह कपि स्तस्य भ = रामस्य ॥१५६२॥ जीवसी
दिष्ट्यां बत्वं राक्षसयोषिद्भिरर्दिताप्यधुना । इति यत्स्त्रियमाह कपि
स्तस्य भ = रामस्य ॥१५६३॥ अद्य विभीषणहस्ते निहितं राज्यं
जितारिणाभर्त्रा । इति यत्स्त्रियमाह कपि स्तस्य भ = रामस्य
॥१५६४॥ त्वां द्रष्टुं राक्षसराड्हृष्टोभ्ये त्यद्य भक्तिभर नम्रः ।
इति यत्स्त्रियमाह कपि स्तस्य भ = रामस्य ॥१५६५॥ इत्थं
शत्रोर्निधनं श्रुत्वा हर्षात्प्रफुल्लपद्माक्षी । यत्स्त्र्यवदद्धनुमन्तं तस्य

भजे दिव्यनाम रामस्य ॥१५६६॥ मम तोषकरं वचनं वक्तुस्ते दातु मस्ति किं वस्तु। इति तं यत्स्त्र्यवदद्रां तस्य भ = रामस्य ॥१५६७॥ सौम्ये तव वचनमिदं बहुरत्नौघाद्विशिष्यते बहुधा। इति यत्स्त्रियमाह कपि स्तस्य भ = रामस्य ॥१५६८॥ अथ यत्स्त्री पार्श्वस्था नारीर्हन्तुं समुद्यतं प्लवगम्। सान्त्वोक्त्यापर्यहरत्तस्य भ = रामस्य ॥१५६९॥ राजाश्रयवश्यानां स्त्रीणां कुप्येत्क उत्तमो लोके। इति तं यत्स्त्र्याह गिरं तस्य भ = रामस्य ॥१५७०॥ प्राप्त व्यमिदन्तु मया जन्मान्तरकर्मणां फलं सर्वम्। इति तं यत्स्याहगिरं तस्यभ = रामस्य ॥१५७१॥ श्रुत्वा यत्पत्न्युक्तिं प्रति सन्दिश देवि मां द्रुतं गन्तुम्। इति हनुमांस्तामूचे तस्य भ = रामस्य ॥१५७२॥ इति तेनोक्तायत्स्त्रीमिन्नाथं द्रष्टुमद्यविजितारिम्। इच्छामीति तमवद त्तस्य भ = रामस्य ॥ १५७३ ॥ द्रक्ष्यस्यार्ये द्राक्त्वं भर्तारं सहजमित्रसैन्ययुतम्। इति यत्स्त्रियमाह कपि स्तस्य भ = रामस्य ॥१५७४॥ अथ हनुमान्यत्सविधं प्राप्यार्योक्तं वचो बभाणतदा। भजतामानन्दकरं तस्य भ = रामस्य ॥१५७५॥ अर्हसि तां द्रष्टुंत्वं द्रागि त्युक्तो हनूमताप्रेम्णा। ध्यात्वो चे भक्तं यस्तस्य भ = रामस्य ॥१५७६॥ अद्यशिरस्स्नातान्तां त्वमुपस्थापय ममेह पुरतोद्राक्। इति भक्तमभाणीद्यस्तस्य भ = रामस्य ॥१५७७॥ अथ यद्भक्तोक्तगिरं श्रुत्वासीतातमाहहनुमन्तम्। ईदृश्ये वैमितमिति तस्य भ = रामस्य ॥१५७८॥ श्रुत्वा यत्स्त्रीवचनं प्रत्यूचे तां विभीषणोथगिरम्। भर्तुःपालयगिरमिति तस्य भ = रामस्य ॥१५७९॥ श्रुत्वा यद्भक्तवचस्स्नानालंकार वस्त्रकृतशोभा। शिबिकां सारुह्यागात्तस्य भ = रामस्य ॥१५८०॥ यः प्राप्तां तां श्रुत्वा रक्षस्सदने चिरास्थितिंस्मृत्वा। अभजन्मुदैन्यरुषस्तस्य भ = रामस्य ॥१५८१॥ उपगच्छतु वैदेही मम सविधंद्राग्विभीषणेत्यभणत्।

* यस्स विमर्शे विचारस्तस्य भजे दिव्यनाम रामस्य ॥१५८२॥ उत्सारणमथनॄणां वेत्रिकृतं यस्समीक्ष्यरुरुधेद्राक्। वात्सल्यै कनिदानंतस्य भ = रामस्य ॥१५८३॥ स्त्रीणामावरणं भुवि सौशील्यान्नान्यदस्तिपूज्यतमम्। इत्यरुधद्यस्तान्द्राक्तस्य भ = रामस्य ॥१५८४॥ अथ वैदेहीमनयद्यस्य समीपं विभीषणः प्राज्ञः। अवरोप्य च शिबिकायास्तस्य = रामस्य ॥ १५८५ ॥ अथ यद्भक्तानुगता संछन्नमुखीह्रियोपगम्यपतिम्। सार्येत्युक्त्वाऽरोदीत्तस्य भ = रामस्य ॥१५८६॥ यस्य मुखं समुदैक्षत विस्मयहर्षानुरागसंयुक्ता। वैदेही साध्वीसातस्य भ = रामस्य ॥१५८७॥ पार्श्वगतां प्रह्वान्तां वैदेहीं यस्समीक्ष्यगिरमूचे। हृदयान्तर्गतरोषस्तस्य = रामस्य ॥१५८८॥ शत्रुं जित्वा भद्रे प्राप्तासि त्वं मयाद्यपुरुषेण। इत्यवदद्यः पत्नींतस्य भ = रामस्य ॥१५८९॥ शत्र्वपमानोद्वावपि समरमुखे सम्यगुद्धृतौ हि मया। इत्यवदद्यः पत्नींतस्य भ = रामस्य ॥१५९०॥ सुग्रीव विभीषणयोः सफलोद्यपरिश्रमोयमरि विजयात्। इत्यवदद्यः पत्नींतस्य भ = रामस्य ॥१५९१॥ दूतस्याब्धिविलङ्घन मप्यासीत्सफल मद्यपवनजनेः। इत्यवदद्यः पत्नीं तस्य भ = रामस्य ॥१५९२॥ इति निगदन्वाचं यो बाष्पमुखीं वीक्ष्यमैथिलींक्रुद्धः। परुषां वाचमवोचत्तस्य भ = रामस्य ॥१५९३॥ त्वत्प्राप्तयर्थन्नमया साहसमेतत्कृतं विदेहसुते। इति यःपत्नीमवदत्तस्य भ = रामस्य ॥१५९४॥ त्वं सन्दिग्धचरित्राव्रणयुतनयनस्यदीपइवमेऽसि। इति यः पत्नीमवदत्तस्य भ = रामस्य ॥१५९५॥ गच्छमयाऽनुज्ञाता नहि मे कार्यं त्वयाऽतिजनकसुते। इति यःपत्नीमवदत्तस्य भ = रामस्य ॥१५९६॥ कः पुरुषस्सु कुलीनोऽरिग्रहाध्युषितां पुनःप्रिया मिच्छेत्। इति यःपत्नीमवदत्तस्य भ = रामस्य ॥१५९७॥ सौमित्रौ भरतेवा त्वंकुरु बुद्धिं यथासुखं सीते। इति यःपत्नीमवदत्तस्य भ = रामस्य ॥१५९८॥ सुग्रीवं

कपिराजं राक्षसराजं विभीषणं वैहि । इति यःपत्नीमवदत्तस्य भजे दिव्यनाम रामस्य ॥१५९९॥ त्वां दृष्ट्वा बिंबोष्ठीं राक्षसनाथः कथं त्यजेत् कामम् । इति यःपत्नीमवदत्तस्य भजे = रामस्य ॥१६००॥ इति भर्तृवचो रूक्षं श्रुत्वा बाष्पं प्रमृज्यगिरमूचे । यं भूजा वैदेही तस्य भ = रामस्य ॥१६०१॥ किं मां वाक्यमसदृशं श्रावयसे त्वं * कुकामिनीमिव भो । इति साप्राहगिरं यं तस्मिन्नमतां ममाद्यधी रामे ॥१६०२॥ त्यजशङ्कांनाथे मां विवशां मां पूर्वमस्पृशद्रक्षः । इति साप्राहगिरं यं तस्मिन्नमतां ममाद्यधी रामे ॥१६०३॥ मम हृदयं त्वदधीनं देहेऽनीशान्तदास्पृशन्मां सः । इति साप्राहगिरं यन्तस्तस्मि न्न = रामे ॥१६०४॥ स्त्री त्वं दर्शयसि त्वं लघुरिव मनुजः क्रुधोवशं प्राप्तः । इति साप्राहगिरं यं तस्मि न्न = रामे ॥१६०५॥ पाणिग्रहणकालोक्तं वेदवचस्त्वं स्मराद्यसर्वज्ञ । इति साप्राहगिरं यं तस्मि न्न = रामे ॥१६०६॥ शीलं भाक्तिं च कुलं मम सर्वमिदं विमृश्यकुरु कार्यम् । इति साप्राहगिरं यं तस्मि न्न = रामे ॥१६०७॥ उक्त्वैवं यं रुदती निकटस्थं वीक्ष्यलक्ष्मणं दीनम् । वाचं प्रोचे सीता तस्मि न्न = रामे ॥१६०८॥ त्यजसौमित्रेचिन्तां कुरु मे शीघ्रं चितांज्वलदुज्ज्वलनाम् । इति यत्स्त्रीगिरमूचे तस्मि न्न = रामे ॥ १६०९ ॥ विज्ञायततच्छन्दं यस्यावरजेनतां चितां रचिताम् । उचितां सीताऽद्राक्षीत्तस्मि न्न = रामे ॥१६१०॥ अथ यस्त्री भर्तारं शुद्धाकृत्वा प्रदक्षिणं सहसा । अग्निमुपासर्पतसा तस्मि न्न = रामे ॥१६११॥ बद्धाञ्जलि रथ यत्स्त्रीद्विजदेवेभ्यः प्रणम्यगिर मूचे । अग्नेःपुरतो भक्त्या तस्मि न्न = रामे १६१२ शुद्धचरित्ता-मग्ने मां परिपाह्यद्य सर्वसाक्षीत्वम् । इति यत्स्त्र्यग्निमाविक्षत्तस्मि न्न = रामे १६१३॥ वाक्कर्ममनोभिर्यं नातिचराम्यत्र साक्ष्यहोत्वमिति । यत्पत्न्यग्निमविक्षत्तस्मी न्न = रामे ॥१६१४॥ सूर्यो वायुः कक्कु-

भस्सर्वे जानन्ति शुद्धभावां माम्। इति यत्स्त्र्यनलमविक्षत्तस्मि न्रमतां ममाग्रधी रामे ॥१६१५॥ यस्य सतीं ज्वलदग्नौ पतितां सीता-मवेक्ष्यचाक्रुक्षन्। कीशपलाशास्सर्वे तस्मि न्र = रामे ॥१६१६॥ अथ सर्वेषां वदतां वाचश्श्रुत्वाश्रुपूर्णनयनोयः। दध्यौ मनसिमुहूर्तं तस्मि न्र = रामे ॥१६१७॥ अथ दिक्पालादेवा ब्रह्मेशानानुया-यिनस्सर्वे। आजग्मुर्यन्द्रष्टुन्तस्मि न्र = रामे ॥१६१८॥ कर्ता लोकस्याग्नौ प्रविशन्तीं त्वं सतीं कुतोत्याक्षीः। इत्यवदन्यं देवा न्र = रामे ॥१६१९॥ ऋतधामाऽखिलकर्ता कथमात्मानं नबुध्यतेद्यभवान्। इति यमपृच्छन्देवास्तस्मि न्र = रामे ॥१६२०॥ विधुसूर्याक्षोहिभवा-न्नाशविहिनस्स्वयं जगत्सविता। इत्यवदन्यं देवास्तस्मि न्र = रामे ॥१६२१॥ इत्युक्तो यो मानुषमात्मानमहंतु वेद्मिदाशरथिम्। इति देवान्प्रत्यूचे तस्मि न्र = रामे ॥१६२२॥ कोहंवदतु भवान्मामिति यत्पृष्टोवदद्गिरं ब्रह्मा। नारायणोभवानिति तस्मि न्र = रामे ॥१६२३॥ ब्रह्माक्षरमसिसत्यं मध्येचान्त्येभवांच्छ्रियोनाथ। इत्यभणद्यंब्रह्मा तस्मि न्र = रामे ॥१६२४॥ अजितश्चक्रधरस्त्वं विष्णुः कृष्णोऽमरोहृषी-केशः। इत्यभणद्यंब्रह्मा तस्मि न्र = रामे ॥१६२५॥ त्वमुपेन्द्रोहि शरण्यो योगिध्येयस्सहस्रश्रृंगोसि। इत्यभणद्यंब्रह्मा तस्मि न्र = रामे ॥१६२६॥ यज्ञोसि वषट्कारस्त्वं शतशीर्षस्सहस्रदृक्प्रणवम्। इत्य भणद्यंब्रह्मा तस्मि न्र = रामे ॥१६२७॥ प्रभवन्निधनंवातेनविदुर्वे-दामहर्षयोप्यमराः। इत्यभणद्यं ब्रह्मा तस्मि न्र = रामे ॥१६२८॥ रामाहं तवहृदयं जिह्वादेवीसरस्वतीचेयम्। इत्यभणद्यं ब्रह्मा तस्मि न्र = रामे ॥१६२९॥ रांमैतज्जगदखिलं दृश्यमदृश्यं च वस्तु तव देहः। इत्यभणद्यं ब्रह्मा तस्मि न्र = रामे ॥१६३०॥ लोकत्रयमपि भवताऽऽक्रान्तं पूर्वंत्रिभिःपदैं राम। इत्यभणद्यं ब्रह्मा तस्मि न्र = रामे ॥१६३१॥ सीतालक्ष्मीश्चभवान्विष्णुरवातरतमसददर्थंमुभौ। इत्यभ

णद्यंब्रह्मा तस्मि न्नमतांममाद्यधी रामे ॥१६३२॥ अद्य दशास्यंहत्वा भवता संरक्षितावयं भक्ताः। इत्यभणद्यं ब्रह्मा तस्मि न्न = रामे ॥१६३३॥ ये भक्तास्तवचरितं श्रोष्यन्ति पठन्ति तेषु कुरुकरुणाम्। इति यं प्रार्थयतविधिस्तास्मि न्न = रामे ॥१६३४॥ अथ यत्पत्नीं सीतां भास्वरदेहो विभावसुस्स्वाङ्के। संगृह्योत्तस्थौद्राक्तास्मि न्न = रामे ॥१६३५॥ धृतरक्तवर्णवसनांद्यत्स्त्रियमाक्लिष्टमाल्यभूषाङ्गाम्। संगृह्याग्निरुदस्थात्तास्मि न्न = रामे ॥१६३६॥ साक्षीलोकस्य भवान्गृह्णात्वेनां धराजनिंसीताम्। इति गिरमूचेग्निर्यं तस्मि न्न = रामे ॥१६३७॥ वाचा मनसा दृष्ट्या नात्यचरत्सेयमार्यभावन्त्वाम्। इति गिरमूचेग्निर्यं तस्मि न्न = रामे ॥१६३८॥ रुद्धैषाऽशोकवने रक्षस्त्रीभिश्च रक्षितासीता। इति गिरमूचेग्निर्यं तस्मि न्न = रामे ॥१६३९॥ विविधं प्रलोभ्यमाना रावण मेषाद्दशापि नापश्यत्। इति गिरमूचेग्निर्यं तस्मि न्न = रामे ॥१६४०॥ प्रतिगृह्णीष्वैनां त्वं शुद्धचरित्रां मयार्थितस्सीताम्। इति गिरमूचेग्निर्यं तस्मि न्न = रामे ॥१६४१॥ अथ यस्सुप्रीतमनाः किञ्चिद्ध्यात्वाश्रुपूर्ण दृक्प्रोचे। वाचंत्रिदशश्रेष्टं तस्मि न्न = रामे ॥१६४२॥ जानन्नपि जानक्याःपातिव्रत्यं जनापवादभयात्। अत्यजमित्यवदद्यस्तास्मि न्न = रामे ॥१६४३॥ लोक प्रत्ययकामस्तां प्रविशन्तीं हुताशनेऽसहिषि। इति तं गिरमवदद्य स्तास्मि न्न = रामे ॥१६४४॥ सेयमनन्याहि मया सूर्येणेवप्रभा न सन्त्याज्या। इति तं गिरमवदद्यस्तास्मि न्न = रामे ॥१६४५॥ श्रोतव्यमवश्यं वोवचनं देवाहितैषिणांहि मया। इति तं गिरमवदद्यस्तास्मि न्न = रामे ॥१६४६॥ इत्युक्त्वा यो देवान्परमेष्ठ्यादींत्स्वजायया युक्तः। सन्तुष्टां स्तानकरोत्तस्मि न्न = रामे ॥१६४७॥ अथ गौरी भर्तायं जितदशवदनं समीक्ष्यसीतेशम्। गिरमभणत्सन्तुष्टस्तास्मि न्न = रामे ॥१६४८॥ पुष्करनेत्र परन्तपरक्षां प्रापुस्त्वयाद्य गीर्वाणाः।

इति गिरमभणद्गिरिशस्तस्मिन्नमतांममाद्यधी रामे ॥१६४९॥ प्राप्या योध्यां भरतं कैकेयीं प्रसुवमद्यससुमित्राम् । पश्येत्याहाशिवोयं तस्मि न्न = रामे ॥१६५०॥ तुष्टान्सुहृदः कृत्वास्थापय वंशं कुलेत्वमि- क्ष्वाकोः । इति गिरमाहाशिवोयं तस्मि न्न = रामे ॥१६५१॥ इष्ट्वा * हयमेधेन प्राप्य यशोद्रव्यमर्थिसात्कुर्याः । इति गिरमाहशिवोयं तं सुरदृग्गोचरं भजे रामम् ॥१६५२॥ आपूर्येदंसकलं त्वागन्तुं त्वं द्युलोकमर्हसि भो । इति गिरमाहाशिवोयं तं सुरदृ = रामम् ॥१६५३॥ एतं पितरं प्रणतिं कुरु सहजेनत्वमद्यसर्वेड्य । इति यं गिरमाहाशिवस्तं सुरदृ = रामम् ॥१६५४॥ इत्युक्तः पशुपतिना प्राणं सीद्राग्विमानम- ध्य गतम् । पितरं यस्सावरजस्तं सुरदृ = रामम् ॥१६५५॥ अथ दृष्ट्वा यं पुत्रं दोर्भ्यामालिंग्य कोसलाधिशः । आरोप्याङ्कमवादीत्तं सुरदृ = रामम् ॥१६५६॥ स्वर्गः स्सुखदो नहि मे तव विरहयुतस्य किञ्चि- दपि वत्स । इत्याहपिता यंगांतं सुरदृ = रामम् ॥१६५७॥ अद्य हतामित्रं त्वां निस्तीर्णारण्यवासमद्राक्षम् । इत्याहपिता यं गांतं सुरदृ = रामम् ॥१६५८॥ प्रव्रजनायचतवगाः कैकेय्योक्तास्स्मरामि वत्स हृदि । इत्याहपितायोगान्तं सुरदृ = रामम् ॥१६५९॥ स भ्रातृ- कमद्यत्वां दृष्ट्वाऽऽलिंग्य प्रमुक्तदुःखोस्मि । इत्याहपितायोगां तं सुरदृ = रामम् ॥१६६०॥ रावण हननायेत्थं देवैःकृतमित्यवैमिवत्साहम् । इत्याहपितायोगांतं सुरदृ = रामम् ॥१६६१॥ सिद्धार्था कौसल्या द्रक्ष्यति विपिनात्समागतम् द्राक्त्वाम् । इत्याहपितायोगां तं सुरदृ = रामम् ॥१६६२॥ सिद्धार्थाःपौरास्त्वांद्रक्ष्यन्त्यभिषिक्तमाशुसन्तुष्टाः । इत्याहपितायोगान्तं सुरदृ = रामम् ॥१६६३॥ सीतासौमित्रियुतः कुरु मुदितावद्य भरतशत्रुघ्नौ । इत्याहपितायोगान्तं सुरदृ = रामम् ॥१६६४॥ वेदानां हृदयमसुं गुह्यं रामं मनुष्वसौमित्रे । इत्याहय- दनुजंराद्तं सुरदृ = रामम् ॥१६६५॥ भर्त्रा तव शुध्यर्थं कृतमेवं

लोकवादभीतेन । इति यस्त्वयमाहसराद्तं सुरद्दग्गोचरं भजे रामम् ॥१६६६॥ इत्थं पुत्रौ सीतां चोक्त्वाऽप्रयासीद्विमानमारुह्य । यत्तातस्स्वर्लोकं तंसुरद्द = रामम् ॥१६६७॥ युद्धे नष्टान्प्लवगां च्छक्रो ज्ञात्वाऽतनोत्सजीवान्द्राक् । यस्समुदेद्देवेशस्तंसुरद्द = रामम् ॥१६६८॥ अथ शक्रवरात्प्लवगानृक्षान्सर्वान्निरीक्ष्यदृढकायान् । योमुदमापासीमां तंसुरद्द = रामम् ॥१६६९॥ अभिषेचय चात्मानं प्राप्यायोध्य विदेहजाजाने । इत्याहुर्यं देवास्तंसुरद्द = रामम् ॥१६७०॥ सान्त्वय भरतवदनुजा वित्युक्त्वायं दिवौकसस्सर्वे । स्वंस्वंस्थानं प्रागुस्तंसुरद्द = रामम् ॥१६७१॥ अथ भक्तप्रार्थनया सुग्रीवादीनकारयत्स्नातान् । यस्स्मृत्वा भरता गून्तंसुरद्द = रामम् ॥१६७२॥ सत्यागूर्मम हेतो स्ताम्यति भरतस्सुखो चितोद्यसखे । इति यो भक्तमवादीत्तंसुरद्द = रामम् ॥१६७३॥ स्नानं वस्त्राभरणेनमुदं जनयन्ति राक्षसेश्वर मे । इति यो भक्तमवादीत्तंसुरद्द = रामम् ॥१६७४॥ इतएवपथाहंद्रा क्सानुजसीतः प्रयामि साकेतम् । इति यो भक्तमवादीत्तं सुरद्द = रामम् ॥१६७५॥ अथ यस्यगिरं श्रुत्वाऽवादीद्रक्षःपतिस्तदानम्रः । स्वायत्तीकृत राज्यस्तं सुरद्द = रामम् ॥१६७६॥ दशवदनेन कुबे रादपहृतमास्ते विमानमिहराम । पश्येति सयमभाणीत्तं सुरद्द = रामम् ॥१६७७॥ यास्यस्येकेनाह्वातेनायोध्यां पुरीं विमानेन । इति भक्तो यमभाणीत्तं सुरद्द = रामम् ॥१६७८॥ अनुजानीहि विभीषण कृत कार्यं मां प्रयातुमद्यपुरीम् । इति भक्तं यो भाणीत्तं सुरद्द = रामम् ॥१६७९ मातृस्सुहृदस्सहजौ द्रष्टुं पौरांश्च मे मनस्त्वरते । इति भक्तं यो भाणीत्तं सुरद्द = रामम् ॥१६८०॥ शीघ्रमुपस्थापयमे पुष्पक मद्यत्वरान्वितस्यत्वम् । इति भक्तं यो भाणीत्तं सुरद्द = रामम् ॥१६८१॥ मन्युस्त्वया नकार्यस्साचिव्ये नास्मिपूजितो भवता । इति भक्तं यो भाणीत्तं सुरद्द = रामम् ॥१६८२॥ सर्वालंकृत युत

मथपुष्पकमानीतमादराद्दृष्ट्वा । भक्तं प्राहगिरं यस्तं सुरद्दग्गोचरं भजे रामम् ॥१६८३॥ रत्नैर्विविधैर्वस्त्रैः पूजयसर्वान्वनौकसो जयिनः । इति तं गिरमभणीद्यस्तं सुरद्द=रामम् ॥१६८४॥ अथ कृतहरिसंमानं भक्तं प्लवगानलंकृतांश्चतदा । दृष्ट्वायस्तृप्तिमगात्तं सुरद्द =रामम् ॥१६८५॥ अङ्केनादाय तदा वैदेहीं यस्तदानुजेन युतः पुष्पकमारुरुक्षद्राक्तं सुरद्द = रामम् ॥१६८६॥ सुग्रीवं सविभीषण माहततोयः कपींश्चसन्तुष्टः । यान्तु भवन्तः पुरमिति तं सुरद्द = रामम् ॥१६८७॥ इत्युक्तायेन तदाकपयः कपिराड्विभीषणश्चोचुः । त्वामनुयामोवयमिति तं सुरद्द = रामम् ॥१६८८॥ दृष्ट्वा त्वामभिषिक्तं कौसल्यां चाप्यथोत्स्थलंयामः । इति यं प्राहुस्सर्वे तं सुरद्द = रामम् १६८९॥ अथ तेयस्यकृपाळोः प्राप्यानुज्ञां प्रमोदसंयुक्ताः । पुष्पकमारुरुहुर्द्राक्तं सुरद्द = रामम् ॥१६९०॥ सर्वेष्वारूढेषु द्राक्तत् कौबेरं विमानमुत्तस्थौ । ये नानुज्ञातं सत्तं सुरद्द = रामम् ॥१६९१॥ यस्सर्वत्र समीक्ष्य प्रोचेवाचं विमानमध्यस्थः । सीतां स्वसमीपस्थां तं सुरद्द = रामम् ॥१६९२॥ वैदेहीक्षस्वे मां लंकां त्वं विश्वकर्मधीरचिताम् । इत्यवदद्यः पत्नीं तं सुरद्द = रामम् ॥१६९३॥ पश्ये मां युद्धभुवं रुधिरैर्मांसैर्विचित्रवर्णात्वम् । इत्यवदद्यः पत्नी तं सुरद्द = रामम् ॥१६९४॥ तव हेतो रत्रहता दशवदनेन्द्रारिकुंभकर्णाद्याः । इत्यवदद्यः पत्नीं तं सुरद्द = रामम् ॥१६९५॥ अत्रागत्य सपत्नीयुक्तामन्दोदरीव्यलापीत् । इत्यवदद्य पत्नींतं सुरद्द = रामम् ॥१६९६॥ नळसेतुं तवहेतो र्बद्धंजलधौ मयाद्यपश्यत्वम् । इत्यवदद्यः पत्नीं तं सुरद्द = रामम् ॥१६९७॥ रख्यातं लोकेष्वेतद्दर्शनतः पापनाशकं भवति । इत्यवदद्यः पत्नीं तं सुरद्द = रामम् ॥१६९८॥ हनुमद्विश्रान्त्यर्थं पश्य गिरिं त्वं समुत्थितं जलधेः । इत्यवदद्यः पत्नीं तं सुरद्द = रामम् ॥१६९९॥ देवि महादेवो मे पूर्वमकार्षीत्प्रसाद

मत्त्वविभुः । इत्यवदद्यः पत्नीं तं सुरदृग्गोचरं भजे रामम् ॥१७००॥ राक्षसराडयमिह मे सविधं प्रागात्परित्यजन्ज्येष्टम् । इत्यवदद्यः पत्नीं तं सुरदृ = रामम् ॥१७०१॥ निहतो वाल्यत्रमया किष्किन्धां पश्य मित्त्रभुजगुप्ताम् । इति तां यस्त्वियमभणीत्तं सुरदृ = रामम् ॥१७०२॥ अथ ताराप्रमुखाभिर्वानरयोषिद्भिरन्विताऽयोध्याम् । ऐषीद्गन्तुं यत्स्त्रीतं सुरदृ = रामम् ॥१७०३॥ अथ सीताभिप्रायं ज्ञात्वा नेतुं कपिस्त्रियस्सर्वाः । यः कपिराजमवादीत्तं सुरदृ = रामम् ॥१७०४॥ अथ यत्सुहृदाज्ञप्ताः कपयः पत्नीयुतास्समागम्य । पुष्पकमारुरुहुर्द्राक्तं सुरदृ = रामम् ॥१७०५॥ यन्मित्त्रो गदमात्रा रुमयान्याभिश्च तूर्णमागत्य । पुष्पकमारुक्षद्राक्तं सुरदृ = रामम् ॥१७०६॥ गच्छति गगनपदव्या पुष्पकयाने विदेहजान्दृष्ट्वा । गिरमभणीद्यस्तोषात्तं सुरदृ = रामम् ॥१७०७॥ सुग्रीवेण ममा भूत्स्नेहोद्रा वृश्यमूकनाम्न्यस्मिन् । इति यस्स्त्रियमाहगिरंतं सुरदृ = रामम् ॥१७०८॥ पंपासर सोत्रतटेऽद्राक्षमहं धर्मचारिणीं शबरीम् । इति यस्स्त्वियमाहगिरं तं सुरदृ = रामम् ॥१७०९॥ तवहेतोर्युद्ध मभूत्तरुमूलेस्मिन्जटायु रावणयोः । इति यस्स्त्रियमाहगिरं तं सुरदृ = रामम् ॥१७१०॥ अत्र खराद्यानिहता निशितैस्तीक्ष्णैर्मया विदेह *सुते । इति यस्स्त्रियमाहगिरं तमहं श्रितपुष्पकं भजे रामम् ॥१७११॥ पश्याश्रममस्माकं गोदावर्यास्तटेच पर्णकुटीम् । इति यस्स्त्रियमाहगिरं तमहं श्रित = रामम् ॥१७१२॥ पश्यागस्त्य-स्याश्रम मत्रसुतीक्ष्णस्य पश्यपर्णकुटीम् । इति यस्स्त्रियमाहगिरं तमहं श्रित = रामम् ॥१७१३॥ अत्र विराधो निहतस्तत्वा त्रिकुटुंबिनीं त्वमद्राक्षीः । इति यस्स्त्वियमाहगिरं तमहं श्रित = रामम् ॥१७१४॥ अत्रगिरौ भरतो मांदृष्ट्वायोध्यामगाद्गृहीताशीः । इति यस्स्त्रियमाहगिरं तमहं श्रित = रामम् ॥१७१५॥ पश्यैतां यमुनां त्वं गंगामपि शृंगिबेर

नगरीश्च। इति यस्स्त्रियमाहगिरं तमहं श्रितपुष्पकं भजे रामम् ॥१७१६॥ एषासरयूर्यूपैश्शोभिततीरा विभातिपश्यत्वम्। इति यस्स्त्रियमाहगिरं तमहं श्रित = रामम् ॥१७१७॥ यस्यागिरं श्रुत्वा द्रागुत्प्लुत्यो त्प्लुत्यतां पुरींदृष्ट्वा। प्रापुः कपयोहर्षं तमहं श्रित = रामम् ॥१७१८॥ पूर्णे चतुर्दशेब्दे पञ्चम्यां प्राप्ययो भरद्वाजम्। प्राणंसीत्परितुष्टस्तमहं श्रित = रामम् ॥१७१९॥ ऋषिवचनान्नियमान्यश्श्रुत्वा भरतस्य किञ्चिदुद्विग्नः। आह पुनर्वचनमृषिं तमहं श्रित = रामम् ॥१७२०॥ शुश्रूष वेस्ववृत्तं मुनये सर्वं निवेदयित्वाथ। जगृहेर्घ्यादिकमपि यस्तमहं श्रित = रामम् ॥१७२१॥ योमुनितः प्राप्तवरस्सर्वान्वृक्षानकारयत्फलिनः। मार्गस्थान्कपितृप्त्यै तमहं श्रित = रामम् ॥१७२२॥ हनुमन्गुहवचनात्त्वं ज्ञात्वा मार्गं द्रुतं विशायोध्याम्। इति पवनजमाहचयस्तमहं श्रित = रामम् ॥१७२३॥ गत्वायोध्यां हनुमन्भरतायब्रूहि मामकं विजयम्। इति पवनजमाहचयस्तमहं श्रित = रामम् ॥१७२४॥ त्वद्वचनात्सर्वमिदं वृत्तं ज्ञात्वा करोति किं भरतः। इति विद्धीत्याहचयस्तमहं श्रित = रामम् ॥१७२५॥ तस्येंगितमखिलं त्वं बुध्या सम्यग्वि विच्यबुध्वाद्राक्। एहीति तमवदद्यस्तमहं श्रित = रामम् ॥१७२६॥ राज्यार्थी चेद्भरतश्शास्त्वखिलं राज्यमद्यतद्ज्ञात्वा। एहीति तमवदीद्यस्तमहं श्रित = रामम् ॥१७२७॥ इत्युक्तो यद्दूतो रूपंधृत्वाथमानुषं प्रागात्। वेगाद्भरतं द्रष्टुं तमहं श्रित = रामम् ॥१७२८॥ अथ यद्दूतोहनुमान्श्वो द्रष्टा राममित्युदीर्यगुहम्। प्रापदयोध्यासाविधं तमहं श्रित = रामम् ॥१७२९॥ अथ नन्दिग्रामेतं जटिलं चीराजिनांबरं भरतम्। यद्दूतोद्राक्षीद्राक्तमहं श्रित = रामम् ॥१७३०॥ फलमूलाशिनमुग्रव्रतनिष्ठं धर्मचारिणं दीनम्। तं यद्दूतोऽद्राक्षीत्तमहं श्रित = रामम् ॥१७३१॥ ते रामपादुकेद्वे संस्थाप्याग्रे भुवं प्रशासन्तम्। तं यद्दूतो

द्राक्षीत्तमहं श्रितपुष्पकं भजे रामम् ॥१७३२॥ भरत त्वां ज्येष्ट स्तेकुशलमवादीत्यजाशु दुःखमिति । तमवादीद्यद्दूतस्तमहं श्रित = रामम् ॥१७३३॥ श्वस्त्वं द्रक्ष्यसि रामं सुग्रीव विभीषणादि सहितमिति । तमवादीद्यद्दूतस्तमहं श्रित = रामम् ॥१७३४। अद्य भरद्वाजर्षेः प्रार्थनया तत्र वसति राम इति । तमभाणीद्यद्दूतस्तमहं श्रित = रामम् ॥१७३५॥ दशवदनादीन्सोरीन्हत्वाऽऽयातिस्त्रियानुजेनेति । तमभाणीद्यद्दूतस्तमहं श्रित = रामम् ॥१७३६॥ इति यद्दूतोक्तगिरं श्रुत्वातोषान्निपत्यभुवि भरतः । उत्थायतमाहगिरं तमहं श्रित = रामम् ॥१७३७॥ देवो वामर्त्यो वात्वमनुक्रोशादिहागतोसि वद । इत्याहसयद्दूतं तमहं श्रित = रामम् ॥१७३८॥ ब्रुवतः प्रियमद्यगवां लक्षं कन्याश्चषोडशप्रददे । इत्याहसयद्दूतं तमहं श्रित = रामम् ॥१७३९॥ आनन्दोजीवन्तं नकदापि विमुञ्चतीति वाक्सत्या । इत्याहसयद्दूतं श्रित = रामम् ॥१७४०॥ नरवानरयोस्त्वेहं रावणनिधनंत्वमादितो वद मे । इत्याहसयद्दूतं तमहं श्रित = रामम् ॥१७४१॥ अथ यद्दूतो हनुमान्ब्रस्यामुपवेशितश्च भरतेन । वक्तुमुपक्रममकरोत्तमहं श्रित = रामम् ॥१७४२॥ ज्येष्टस्तवभरत वनेदुष्टं दृष्ट्वा विराधमवधीद्द्राक् । इति यद्दूतोभाणीत्तमहं श्रित = रामम् ॥१७४३॥ अथ शरभंगमुनीन्द्रेस्स्वर्गयाते ददर्शमुनिसंघान् । इति यद्दूतोभाणीत्तमहं श्रित = रामम् ॥१७४४॥ प्राप्त जनस्थानं तं दृष्ट्वाऽमुह्यद्भृशंच शूर्पणखा । इति यद्दूतोभाणीत्तमहं श्रित = रामम् ॥१७४५॥ सायत्सहजेन तदा खड्गेन च्छिन्नकर्णनासागात् । इति तमभाणीद्धनुमां स्तमहं श्रित = रामम् ॥१७४६॥ ये नहतान्खरमुख्यान्ज्ञात्वा सीतां जहार दशवदनः । इति तमभाणीद्धनुमां स्तमहं श्रित = रामम् ॥१७४७॥ शतयोजनमुदधिमहं तीर्त्वाद्राक्षंच तत्र यत्पत्नीम् । इति भरतं प्राह कपिस्तमहं श्रित = रामम् ॥१७४८॥ अथ पुनरागत्याहं

सर्वं वृत्तंन्यवेदयं यस्मिन्। इति भरतं प्राहकपिस्तमहं श्रितपुष्पकं भजे रामम् ॥१७४९॥ अथ मत्पृष्ठारूढःप्रययौ योवानरेशसैन्ययुतः। इति भरतं प्राहकपिस्तमहं श्रित = रामम् ॥१७५०॥ अथ सेतुं बध्वाब्धौ लंकांगत्वाऽवधीच्चयश्शत्रुम्। इति भरतं प्राहकपिस्तमहं श्रित = रामम् ॥१७५१॥ तत्र विभीषणमथयः कृत्वाराजानमब्धि मुत्तीर्य। आगादित्याहकपिस्तमहं श्रित = रामम् ॥१७५२॥ इत्थं सर्वं वृत्तं हनुमन्मुखतो विविच्यसंश्रुत्य। भरतः प्रापानन्दं तमहं श्रित = रामम् ॥१७५३॥ भ्रातः कारयमार्गं नन्दिग्रामादितः परंसुसमम्। * इति यद्भ्राताऽऽहगिरं तं भ्रातृहितं सदाभजे रामम् ॥१७५४॥ गन्धैः कुसुमैर्लाजै रथ्यां सर्वत्र शोभयन्तु जनाः। इति यद्भ्राताऽऽहगिरं तं भ्रातृ = रामम् ॥ १७५५ ॥ उच्छ्रितकेतूरथ्याः पुर्यां वेश्मानि शोभयन्तु जनाः। इति यद्भ्राताऽऽहगिरं तं भ्रातृ = रामम् ॥१७५६॥ अथ यं दिदर्शयिषवस्सचिवाः प्रययुर्गृहीतलिकुचफलाः। स्वस्वालंकृति युक्तास्तं भ्रातृ = रामम् ॥१७५७॥ धृष्टिजयन्ता शोकै र्विजयसुमन्त्रार्थ साधकाः प्रययुः। यं द्रष्टुं फलहस्तास्तं भ्रातृ = रामम् ॥१७५८॥ अथ मन्त्रपालनामा प्रययौ सचिवस्सुमन्त्रसंयुक्तः। यं द्रष्टुं धृततोषस्तं भ्रातृ = रामम् ॥१७५९॥ अथ रथमत्तमतं गजसैंधवसाहिताः पदातयः प्रययुः। औत्सुक्याद्यदभिमुखं तं भ्रातृ = रामम् ॥१७६०॥ यं द्रष्टुं मातृजना नन्दिग्रामं समाययुस्तुष्टाः। कौसल्याद्याः पूर्वं तं भ्रातृ = रामम् ॥१७६१॥ यत्पादुकेच भरतश्शीर्षेधृत्वा गृहाद्बहिः प्रागात्। द्रष्टुं ज्येष्ठं भक्त्या तं भ्रातृ = रामम् ॥१७६२॥ नहि पश्यामि ज्येष्ठं हनुमन्नद्यापि राममित्यभणीत्। यदवरजः पवनसुतं तं भ्रातृ = रामम् ॥१७६३॥ मार्गे प्रदर्श्य धूळीपटलं भरतं जगादयद्दूतः। वचनं सन्तोषकरं तं भ्रातृ = रामम् ॥१७६४॥ एष्यति रामःकपिभिःपश्याकाशे विमानमागच्छत्। इति कपिराहयदनुजं तं

भ्रातृहितंसदा भजे रामम् ॥१७६५॥ अथ भरतस्तद्दृष्ट्वा यद-धिष्ठितमाशु पुष्पकं भक्त्या। प्रणनामानन्दयुतस्तं भ्रातृ = रामम् ॥१७६६॥ भूमिं प्राप्तपुष्पकमधिरुह्य नमन्तमादरात्पदयोः। यः परिरभ्योर्हे के तं भ्रातृ = रामम् ॥१७६७॥ लक्ष्मणमासाद्यततो यत्पत्नीमभ्यवादयद्भक्त्या। नामोक्त्वाद्राग्भरतस्तं भ्रातृ = रामम् ॥१७६८॥ ऋक्षेशं प्लवगेशं वालिसुतादीन्प्लवंगमांश्च तदा। पर्यष्व-जतयदनुजस्तं भ्रातृ = रामम् ॥१७६९॥ अस्माकं च चतुर्णांभ्राता सुग्रीवपञ्चमस्त्वमिति। तंप्राहयदनुजोगान्तं भ्रातृ = रामम् ॥१७७०॥ रामेण कृतोऽरिवधः प्राप्यसहायं विभीषणाभूत्ते। इति तं प्राहयदनु-जस्तं भ्रातृ = रामम् ॥१७७१॥ अरिलक्षणमपकारो ह्युपकारोमित्र लक्षणं भवति। इति तं प्राहयदनुजस्तं भ्रातृ = रामम् ॥१७७२॥ अथ शत्रुघ्नो भक्त्या पत्न्यासहितं यमाशुसावरजम्। प्रणनाम प्रत्येकं तं भ्रातृ = रामम् ॥१७७३॥ यो मातरमासाद्य प्रणतिं कृत्वा ऽकरोत्सुसन्तुष्टाम्। ससुमित्रां कैकेयीं तं भ्रातृ = रामम् ॥१७७४॥ अथ पितृदारांत्सर्वान्योनत्वाऽरुंन्धतीपतेस्स्वगुरोः। प्राणं सीद्राक्प दयोस्तंभ्रातृ = रामम् ॥१७७५॥ कौसल्यानन्दनते स्वागतमितिगरा रामुदास्सर्वे। आगत्याप्राक्षुर्यं तं भ्रातृ = रामम् ॥१७७६॥ अथ भरतः स्वकराभ्यां गृह्य स्तेपादुके समागम्य। यस्या यूयुजदंघ्रो स्तं भ्रातृ = रामम् ॥१७७७॥ अथ कैकेयी पुत्रस्स्वीकुरु निर्याततिं मया राज्यम्। इति यं प्रार्थयततदा तं भ्रातृ = रामम् ॥१७७८॥ तव तेजसैव वृद्धिं प्राप्तं कोशं बलं पुरं पश्य। इति यं सगिरमभाणीत्तं भ्रातृ = रामम् ॥१७७९॥ इत्थं वदन्तमवरजमारोप्यांकं ययौ विमानेन। योभरताश्रममचिरात्तं भ्रातृ = रामम् ॥१७८०॥ पुष्पक मथ च विमानं वैश्रवणं त्वं वहानिशं गच्छ। इत्युक्त्वा व्यसृजद्यस्तं भ्रातृ = रामम् ॥१७८१॥ विहितांजलिरथशीर्षे कैकेय्यानन्दवर्ध-

नो भरतः। गिरमभणीद्यं ज्येष्टं तं भ्रातृहितंसदा भजे रामम्
॥१७८२॥ मन्मातुस्तृप्त्यर्थं मह्यंदत्तं पुनर्ददै राज्यम्। स्वीकुर्विति
सयमभणोत्तं भ्रातृ=रामम् ॥१७८३॥ वृषभेणाद्य भारं वत्सइवाहं
नवोढुमर्होस्मि। इति सगिरंयमवादीत्तं भ्रातृ = रामम् ॥१७८४॥
खरइवहयस्यगमनं नान्वेतुं तेधियं न शक्नोमि। इति सगिरंयमवादीत्तं
भ्रातृ = रामम् ॥१७८५॥ अनुपश्यत्वाभिषिक्तं त्वामद्यैतज्जगत्सु
सन्तुष्टम्। इति सगिरंयमवादीत्तं भ्रातृ = रामम् ॥ १७८६ ॥
मधुरैर्वाद्यनिनादै स्त्वंप्रतिबुध्यस्व राघवाद्यविभो। इति सगिरंयमवादी
त्तं भ्रातृ = रामम् ॥१७८७॥ यावद्भ्राम्यति चक्रं तावत्स्वामि त्व-
मार्यभजतुभवान्। इति सगिरंयमवादीत्तं भ्रातृ = रामम् ॥१७८८॥
इत्थं स्वानुजवचनं श्रुत्वा प्रेम्णा तथास्त्विति प्रोच्य। यः प्राप शुभंपीठं
तं भ्रातृ = रामम् ॥१७८९॥ अथ शत्रुघ्नस्य गिरासुलघुहस्ताश्श्मश्रु
वर्धकाः प्राप्य। यमुपासत सविधेद्राक्तं भ्रातृ = रामम् ॥१७९०॥
पूर्वं भरतेस्नाते सौमित्रि कपीश राक्षसेशाश्च। यस्याज्ञातस्सस्नुस्तं
भ्रातृ = रामम् ॥१७९१॥ अथ शोधित सर्वजटस्स्नातो धृत
माल्यगन्ध लेपोयः। शुशुभे कटिधृतवसनस्तं भ्रातृ = रामम्
॥१७९२॥ यस्य प्रतिकर्म तदा सौमित्रि युतस्यकारयामास।
भरतस्सन्तुष्टमनास्तं भ्रातृ = रामम् ॥१७९३॥ यत्पत्न्याः प्रति
कर्म च सर्वा राजस्त्रियस्तदा चक्रुः। वस्त्राभरणैर्हृष्टास्तं भ्रातृ = रामम्
॥१७९४॥ यन्माता सर्वासां कपिपत्नीनामलंकृतिं चक्रे। विविधै-
र्भूषावसनैस्तं भ्रातृ = रामम् ॥१७९५॥ सारथि रथ ससुमन्त्रो
यदवरजोक्तो रथं समानैषीत्। अतिसुन्दरमति सुदृढं तं भ्रातृ =
रामम् ॥१७९६॥ दृष्ट्वारूढरथं यं तोषा कपिराड्हनूमदादियुतः।
द्रष्टुमयोध्यां प्रययौ तं भ्रातृ = रामम् ॥१७९७॥ यत्पत्न्या सहि-
तास्ताः कपिपत्न्योद्रष्टुमं जसानगरीम्। प्रययुर्हृष्टास्सर्वास्तं भ्रातृ =

रामम् ।१७९८।। तत्रायोध्यानगरे यद्वृध्यर्थं वसिष्ठमामन्त्र्य । ऊचुर्वाचं सचिवास्तं भ्रातृहितंसदा भजे रामम् ।।१७९९।। यस्याभिषेक विधये सज्जं द्रव्यं भवान्करोतु हितम् । इत्यार्तथतंसचिवास्तं भ्रातृ = रामम् ।।१८००।। अथ सचिवार्यं द्रष्टुं तुष्टानगराद्विनिर्ययुस्सर्वे । धृतकवचोष्णीषाद्राक्तं भ्रातृ = रामम् ।।१८०१।। नन्दि ग्रामात्प्रययौ यो रथमास्थाय पैतृकं नगरम् । सर्वालंकृतियुक्तं तं भ्रातृ = रामम् ।।१८०२।। यस्मिन्रथमारूढे भरतोरश्मीन्करेण समगृह्णात् । शत्रुघ्नोपिच्छत्रं तं भ्रातृ = रामम् ।।१८०३।। यन्मूर्ध्न्यथसौमित्री राक्षसराजोपि चामरेश्वेते । तुष्टौचावीजयतां तं भ्रातृ = रामम् ।।१८०४।। आयान्तमयोध्यां यं दृष्ट्वा देवामहर्षयस्सिद्धाः । सर्वेऽवापुर्हर्षं तं भ्रातृ = रामम् ।।१९०५।। शत्रुं जयमथनागं गिरि सममारुह्य वानराधीशः । अनुयायाद्यं यान्तं तं भ्रातृ = रामम् ।।१८०६।। नवनाग सहस्राण्यप्यारुह्यमुदा मनुष्यदेहभृतः । यमनुययुःकपयस्ते तं भ्रातृ = रामम् ।।१८०७।। भ्रातृभिरायान्तं यं * दृष्ट्वा पौराविवृद्धसन्तोषाः । अनुजग्मुरयोध्यां तान्तं हृदयाब्जास्थितं भजे रामम् ।।१८०८।। सचिवैः प्रकृतिभिरार्यैर्भूदेवैः पण्डितैश्च संयुक्तः । राज्ञोऽविक्षद्गेहं तं हृदयाब्ज = रामम् ।।१८०९।। अष्टादशवाद्यरवैर्गीतैर्मधुरैश्च तुष्टहृदयोयः । राज्ञोऽविक्षद्गेहं तं हृदयाब्ज = रामम् ।।१८१०।। कौसल्यां ससुमित्रां कैकेयीञ्चप्रणम्ययो भरतम् । अवदद्वाचमनीचां तं हृदयाब्ज = रामम् ।।१८११।। श्रेष्ठं मम भवनं त्वं सुग्रीवाय प्रदेहि वासार्थम् । इत्यवदद्भरतं यस्तं हृदयाब्ज = रामम् ।।१८१२।। अथ संप्राप्त गृहं तं तीर्थानयनाययदभिषेकार्थम् । वाचमवादीद्भरतस्तं हृदयाब्ज = रामम् ।।१८१३।। अथ यत्सुहृदाज्ञप्ताः पवनसुताद्यास्समाययुः कपयः । स्वर्णघटाहृत तीर्थास्तं हृदयाब्ज = रामम् ।।१८१४।। दृष्ट्वानीतं कपिभिस्तीर्थं गुरवे

न्यवेदयत्तुष्टः । यदवरजावरजोद्राक्तं हृदयाब्जस्थितं भजे रामम्
॥१८१५॥ यं सहसीतं पीठे रत्नमये सन्यवेशयत्सुदिने । कुलगुरु
रथ शुभलग्ने तं हृदयाब्ज = रामम् ॥१८१६॥ काश्यप सुयज्ञ
गौतम कात्यायन वामदेव संयुक्तः । यं सवसिष्ठोभ्यसिचत्तं हृदया-
ब्ज = रामम् ॥१८१७॥ जाबालि विजयमुख्यैरन्यैश्चापि द्विज
स्तदायुक्तः । यं गुरुरभ्यासिचद्राक्तं हृदयाब्ज = रामम् ॥१८१८॥



अथ कन्याभिस्सचिवै र्योधैस्तुष्टैस्स नैगमैर्युक्तः । यं गुरुरभ्यभि
चद्राक्तं हृदयाब्ज = रामम् ॥१८१९॥ सर्वौषधि जात रसैर्दिव्यै
र्देवानभाषितास्तुष्टाः । अभ्यासिचन्यन्मूर्धनि तं हृदयाब्ज = राम ।
॥१८२०॥ प्राङ्निर्मितमात्मभुवामकुटं सगुरुः प्रगृह्यहस्ताभ्याम् ।
यन्मूर्ध्न्ययुजताद्राक्तं हृदयाब्ज = रामम् ॥१८२१॥ ऋत्विग्भि-
स्समयोजिचसिंहासन भाग्विभूषणैर्महितैः । यस्सुन्दरसर्वाङ्गस्तं
हृदयाब्ज = रामम् ॥ १८२२ ॥ अथ शत्रुघ्नच्छत्रं वालव्यजने

हरीशलंकेशौ । यन्मूर्ध्न्युपरि जगृहिरेतं हृदयाब्ज = रामम् ॥१८२३॥ मौक्तिक गुंभितमालां वायुः प्रादान्मरुत्वता प्रहितः । यस्मैसीता भर्त्रे तं हृदयाब्ज = रामम् ॥१८२४॥ यस्य महोत्सव समयेऽप्सरसो ननृतुर्जगुश्च गन्धर्वाः । मुदितास्सर्वेऽभूवंस्तं हृदयाब्ज = रामम् ॥१८२५॥ यस्यमहोत्सवसमये सवत्रक्ष्माबभूव सस्याढ्या । अभवन्फलवन्तोगास्तं हृदयाब्ज = रामम् ॥१८२६॥ पूर्वं भूदेवेभ्यः प्रादाद्वृषभांच्छ तं हिरण्यस्य । त्रिंशत्कोटीरपि यस्तं हृदयाब्ज = रामम् ॥१८२७॥ बहुविधभूषण वस्त्राण्यादित चसुमहान्ति यो द्विजातिभ्यः । प्राप्तायोध्या राज्यं तं हृदयाब्ज = रामम् ॥ १८२८ ॥ सुग्रीवायायच्छद्दिव्यां स्रजमाशु रत्नखचितां यः । सिंहासनमध्यगतं तं हृदयाब्ज = रामम् ॥१८२९॥ अंगदयुगळं प्रादा दंगद नाम्ने कपीश पुत्राय । अंगद भूषितबाहुं तं हृदयाब्ज = रामम् ॥१८३०॥ मुक्ताहार मनुत्तम मुत्तमरत्नैस्सुयोजितं मध्ये । प्रादाद्यस्सीतायै तं हृदयाब्जस्थितं भजे रामम् १८३१॥ अमले दिव्ये वस्त्रे यश्चत्नी भूषणान्यपि प्रादात् । दूताय हनुमतेद्राक्तं हृदयाब्ज = रामम् ॥१८३२॥ अवमुच्यस्वात्कण्ठाद्धारं सीता करेचसन्दधती । यं भर्तारमुदैक्षत तं हृदयाब्ज = रामम् ॥१८३३॥ अथ संप्रेक्ष्यावादी द्वैदेहीन्तां तदेंगितज्ञोयः । वचनं द्राक्षामधुरं तं हृदयाब्ज = रामम् ॥१८३४॥ हारं प्रदेहि सुभगे तुष्टायस्यासितस्य बुद्धिमतः । इत्यभणीद्योदेवीं तं हृदयाब्ज = रामम् ॥१८३५॥ तं हारं यस्यसती धृतपौरुष विक्रमाय तुष्टादात् । दूतायहनुमतेद्राक्तं हृदयाब्ज = रामम् ॥१८३६॥ मैन्द द्विविदाग्नि सुतानन्यांश्च कपीन्मुदाकरोत्तुष्टान् । यो भूषाभिर्वस्त्रैस्तं हृदयाब्ज = रामम् ॥१८३७॥ अथ सुग्रीव विभीषण हनुमद्रक्षोधि पादयस्स्वपुरीम् । यस्याज्ञातः प्रययुस्तं हृदयाब्ज = रामम् ॥१८३८॥ कपि पति रथ सुग्रीवो दृष्ट्वा

यस्याभिषेक महमचिरात् । किष्किन्धां प्रापन्मुदा तं हृदयाब्ज = राममू ॥१८३९॥ यस्मात्कुल धन मतुलं लब्ध्वा भक्तो विभीषणो लंकाम् । प्रविवेश मुदायुक्तस्तं हृदयाब्ज = रामम् ॥१८४०॥ अथ विजितारिश्शा सन्मुखमखिलां यस्तदा गिरमभाणीत् । सौमित्रिं निकटस्थं तं हृदयाब्ज = रामम् ॥१८४१॥ आतिष्ठमये मां गां धुरमुद्वहयौव राज्यभरणेन । इति लक्ष्मणमभणीद्यस्तं हृदयाब्ज = रामम् ॥१८४२॥ तदभिप्रायं ज्ञात्वाऽभ्यषिचद्भरतं ततस्स सम-धिषणम् । कैकेयीपुत्रं यस्तं हृदयाब्ज = रामम् ॥१८४३॥ विविधैर्यज्ञैरयजद्धयमेधेनापि वाजपेयेन । यः पौण्डरीकयाजीतं हृदयाब्ज = रामम् ॥१८४४॥ वर्षाणि दशसहस्राण्येकश्शासन्स सोदरैर्यो-ज्याम् । ईजेशतहयमेधैस्तं हृदयाब्ज = रामम् ॥१८४५॥ यस्मिन्राज्यं शासति ना भूद्रुदितं न चापि वैधव्यम् । साध्वीनां रमणीनां तं हृदयाब्जस्थितं भजे रामम् ॥१८४६॥ व्याळव्याधिमृगेभ्यो भीति र्नक्वाप्यभून्मनुष्याणाम् । शासतिराज्यं यस्मिंस्तं हृदयाब्ज = रामम् ॥१८४७॥ लोको निर्दस्युरभून्नानर्थः कश्चिदस्पृशल्लोके । शासति राज्यं यस्मिंस्तं हृदयाब्ज = रामम् ॥१८४८॥ नवयोवृद्धालोके * बालमृतिंक्वापि चक्षुषाऽद्राक्षुः । शासति यस्मिन्राज्यं तमहं पद्माभि राममवलंबे ॥१८४९॥ सर्वोमुदितोलोक स्सत्यधृतिर्धर्म दैवभक्तो भूत् । शासति यस्मिन्राज्यं तमहं = लंबे ॥१८५०॥ जगदखिलं राममयं रामकथासार तृप्तिमच्चाभूत । शासति यस्मिन्राज्यं तमहं = लंबे ॥१८५१॥ चत्वारो वर्णा अपि कर्माणि स्वानि चक्रिरे प्रेम्णा । शासति यस्मिन्राज्यं तमहं = लंबे ॥१८५२॥ दशवर्ष सहस्राण्यपि दशवर्षशतान्यपालयद्राज्यम् । भ्रातृभिरनुरूपैर्यस्तमहं = लंबे ॥१८५३॥ आयुष्यं धन्यामिदं वक्तृ श्रोत्रोरभीष्टसन्ततिदम् । यस्यचरित्रं लोके तमहं = लंबे ॥१८५४॥ यं सनकादिमुनीन्द्रा स्सतत्पदलक्ष्यं सदा

